जगद्गुरूणां श्री १०८ श्रीसत्यप्रमोदतीर्थानां मङ्गलगले
द्वादशाब्दमहोत्सवे समर्पितः

सत्यध्यानविद्यापीठेन प्रकाशितायां
सिद्धान्तमणिमञ्जुमालायां
श्रीनरहरितीर्थादिविरचितटीकादिपञ्चव्याख्यालंकृतम्

# यमकभारतम् ।

संपादकाः संशोधकाः संग्राहकाश्च

श्री १०८ श्रीसत्यप्रमोदतीर्थानां पूर्वाश्रमानुजाः वेदान्तविद्वान्,
वेदान्तचूडामणि, वेदान्तशिरोमणि, न्यायशिरोमणि,
विद्यालंकार इत्यादि बिरुदैर्भूषिताः

**श्री गुत्तल हयग्रीवाचार्याः**

SRI VED
GRAN H AY
BELLARY

प्रकाशकाः

श्री गुत्तल हयग्रीवाचार्याः
पुणें.

श्री श्रीनिवासाय नमः, श्रीगुरुभ्यो नमः ।

# भूमिका

अस्य ग्रन्थस्य यमकभारतमिति नाम टिप्पणीचतुष्टये समुपलभ्यते लोकप्रसिद्धिश्च तथैव वर्तते श्रीनरहरितीर्थीयटीकायाः अन्तिमभागे तु " इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यानुक्रमणिका श्रीकृष्णप्रकाशिका श्रीमन्नरहरितीर्थविरचिता समाप्ता " इति वाक्येन महाभारततात्पर्यमिति नामेति ज्ञायते । तथा श्रीहृषीकेशतीर्थलिखितसर्वमूलपुस्तकेऽपि इदमेव नाम दृश्यते ।

एतद्ग्रन्थकरणमुद्दिश्य एवं किल कथां कथयन्ति । कदाचन वादसमये भगवत्पादैः पराजिताः प्रतिवादिनः उपायान्तरमनुपलभ्य एवं निनिन्दुः वेदान्तग्रन्थकरणे एव एषां शक्तिः न प्रासबद्धकाव्यस्य निबन्धने इति । तदा आचार्याः सभायामेव तत्क्षण एव यमकबद्धं महाभारततात्पर्यनिर्णयसंग्रहरूपं काव्यं निर्ममिरे । तदा एषामाशुकवित्वं सर्वतोमुखं वैदुष्यं च दृष्ट्वा विस्मिताः सभ्याः प्रणेमुः इति । अस्यैव संग्रहः सुमध्वविजये पञ्चदशसर्गे दृश्यते ' भगवांश्चित्रकवितां लौकिकीं दर्शयन्किल । गोप्यं भारतसंक्षेपमकृथा विश्वविस्मयम् ' इति । गोप्यार्थकत्वं विश्वविस्मयकारार्थत्वं च श्लोकरूपटीकातः इतरतट्टिप्पणीभ्यश्च स्फुटीभवति ।

काव्यस्य प्रवृत्तेः किं प्रयोजनम् इति शंकां समादधत्ते पद्यमिदम्– " यद्वेदात्प्रभुसंमितादधिगतं शब्दप्रधानाच्चिरं यच्चार्थप्रवणात्पुराणवचनादिष्टं सुहृत्संमितात् कान्तासंमितया यया सरसतामापाद्य काव्यश्रिया कर्तव्ये कुतुकी बुधो विरचितस्तस्मै स्पृहां कुर्महे "—इति ।

यथा करचरणाद्यवयवगता वलयनूपुरादय अवयविनमलंकुर्वन्ति तथा शब्दार्थावयवगता अनुप्रासोपमाद्यलंकाराः काव्यमुपस्कुर्वन्ति । संघटनाश्रया गुणाः शब्दार्थाश्रयास्त्वलङ्काराः । अलंकारा द्विविधाः शब्दालंकारा अर्थालंकाराश्चेति तत्र यमकानुप्रासादयः शब्दालंकाराः ।

यमकलक्षणं तुः—' सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनयुग्मयोः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ' इति साहित्यदर्पणे ।

अर्थालंकाराः सर्वे उपमालंकारमूलकाः । तथाहि चित्रमीमांसायाम् " उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान् । रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः " इति । शैलूषी=नटी । चित्रभूमिका=वेषः । उपमायामपि चन्द्रवन्मुख-



B No 16

मित्यादौ अधिकोपमैव लोके बहुशो दृश्यते । भगवतो नारायणस्य तु सर्वाधिकत्वेन तदपेक्षयाऽधिकवस्तुनोऽसंभावितत्वात् अधिकोपमा नैव दातुं शक्यते । गीतायां ( ११-१ ) दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः " इत्युक्तिः " सहस्रलक्षामितभानुदीधितिम् " ( ता. नि. ४-४० ) इत्याद्युक्तिश्च ' बुद्धयर्थः पादवत् ' इति न्यायेन हीनोपमामवलम्ब्यैव ।

अतोऽत्र ग्रन्थे भगवत्पादैः अर्थालंकारान् अनादृत्य शब्दालंकारा एवादृता इति तर्कयितुं शक्यते । यमकग्रन्थरचना च महावैदुषीसाध्या । यतो हि तत्र शब्दाः पुनरागन्तव्याः अर्थास्तु भिन्नाः संपादनीयाः ।

जगतीतलवर्तिभ्यः यमकग्रन्थेभ्यः सर्वेभ्यः वैशिष्ट्यमत्र वेदान्तप्रमेयसारगर्भितत्वाद् दरीदृश्यते । तथाहि–महाभारतस्य सर्वस्यापि वाक्यसमन्वयरीत्या भगवत्परत्वं प्रदर्शितम् । यथा–यत्परिवारतयेशा जाता देवाः इत्यत्र ( ३० श्लोके ) श्रीकृष्णपरिवारत्वेनैव सर्वदेवानामवतारोक्तिः । " यद्भरितं विषसर्पेत्यादिना । श्रीभीमसेनसामर्थ्यस्य सर्वस्यापि नैसर्गिकस्यापि " भीमे प्रीतिममेयां व्यञ्जयता " ( ३१ ) इति विष्णुप्रसादलब्धत्वोक्तिः " यस्यावेशोरुबलान्यहनत् पार्थोऽसुरान् " ( ४४ ) " यस्य सुनीतिसहायान्न रिपून्मेनेऽर्जुनः " ( ५७ ) इत्यादिना अर्जुनशक्तेः कृष्णाधीनत्ववचनम् " यस्या वेशात्सबलः प्रचकर्ष पुरम् " ( ४५ ) इत्यत्र बलरामस्यापि शुक्लकेशावेशेनैव सामर्थ्योक्तिः ।

" बलभीमपार्थव्याजाह्वयेन हरिणा निलयं तदीयम् " इति ( २।७।३५ ) भागवतानुसारेण अत्र " समनुगत नादस्यैव " ( ४४ ) इति श्लोके भीमादिकृतासुरहननस्यापि तदन्तर्यामिकृष्णकृतत्ववर्णनम्, ' यद्भक्त्याऽमितयालम् " (५२-५३) इत्यत्र द्रौपद्याः माहिम्नोऽपि कृष्णभक्तिलब्धत्वोक्तिः

" परसैनिकायुरक्ष्णा हृतवानि " इति ( १।९।४२ ) भागवतोक्त्यनुसारिणि " अवधीचक्षुर्बलेन " ( ५६ ) इतिपद्ये श्रीकृष्णस्य अर्जुनसारथ्यकर्मणोऽपि चक्षुषा परसैनिकानामायुर्हरणोद्देश्यकत्वोक्तिः । भा भा इति ७८ तमे पद्ये स्थालीपुलाकन्योयन सर्ववेदानां पदसमन्वयपक्षेऽपि भगवत्परत्वप्रकारप्रदर्शनम् इत्यादीनि बहूनि प्रमेयरत्नानि गुम्फितानि वरीवर्ति । एतानि च यथाश्रुतमूलेनैव प्रतीयन्ते । टीकाटिप्पण्यादिषु च विराजमानानि परदशतं प्रमेयरत्नानि आमूलाग्रं ग्रन्थदर्शनतोऽवगम्यन्ते । यथा चतुर्थपद्ये वासुदेवमंत्रान्तर्गतवासुदेवपदस्य बहुधा अर्थवर्णनं टीकादिषु दृश्यते ।

किं च यथा न्यायसुधायां आद्यन्तयोः " श्रियःपत्ये " " भूतिर्महालक्ष्मीः " इति उक्त्या श्रीकरत्वं तथा अनुव्याख्याने तद्व्याख्येये च आदौ "नारायणं निखिलपूर्णगुणैकदेहम् " इति, अन्ते " नौमि मे प्रियम् " इति नारायणस्य प्रियत्ववर्णनेन

श्रीकरत्वं, द्वादशस्तोत्रे च "वन्दे वन्द्यम्" इति आदौ–"परानन्दवरद" इत्यन्ते च वम् इति आद्यक्षरस्य अमृतबीजस्य "द" इति अन्त्याक्षरस्य च अनुसंधाने अमृतं मृतिपरिहारः तस्य दातः इत्यर्थकत्वेन विघ्नपरिहारकत्वं, श्रीमद्भागवते च आदौ "जन्माद्यस्य यतः" इति, अन्ते "सुरऋषभाय नमः सनातनाय (१२. १२. ६८) इत्यत्र आद्यन्तवर्णलब्धजयप्रदत्वम् तथा अत्रापि "सदैवपरमानन्दम्" इति आद्यश्लोकान्ते नारायणार्यव्याख्यारीत्या लक्ष्मीवाचकरमापदसंनिवेशेन अन्ते च "सुरायणनामा" इति धनदेवताभूतलक्ष्मीसाहित्यवर्णनेन च तत्प्रसादात् एतद्ग्रन्थाध्येतॄणां धनादिसंपत्तिर्भवतीति सूचितम्। तथाहि तत्र नारायणार्यव्याख्या"–कर्मभिः ये सदैवाः सादृष्टाः तान् पातीति सदैवपः सचासौ रमानन्दश्चेति तम् रमारमणमित्यर्थः। तेन सलक्ष्मीकस्य भगवतो मङ्गलाचरणेऽनुसंधानं कर्तव्यमिति ज्ञापितम्' इति। अन्तिमव्याख्या च १७३ तमे पृष्ठे द्रष्टव्या।

## आक्षेपसमाधाने

अत्र केचिदेवमाक्षिपन्ति यमकं किंचित् चेदेव शोभाकरम् यथा रघुवंशे नवमसर्गे सर्वश्लोकानां चतुर्थपादेष्वेव यमकं न तु सर्वपादेषु इति। तदेतन्मन्दम्। लोके तावत् प्रसिद्धा यमकग्रन्थाः इमे नलोदयः कालिदासकृतः (पंचसर्गात्मकः) (सर्वत्र यमकयुक्तः), घटकर्परकाव्यम्, भट्टिकाव्ये दशमसर्गः, (अत्र तु बहुविधा यमकाः सन्ति,) इत्यादयः एषु तथा साहित्यशास्त्रग्रन्थेषु मन्दारमरन्दचम्पूः (श्रीकृष्ण कवि) (कृष्णावधूत) रचिता, राघवपाण्डवीयम्, इत्यादिषु यमकोदाहरणप्रसङ्गे च एतद्ग्रन्थोक्तजातीयस्यैव यमकस्य दर्शनात्।

आक्षेपान्तरं तु–अत्र टीकाटिप्पण्यादिषु क्लिष्टकल्पनया व्याख्यानानि दृश्यन्ते तानि च अलौकिकानि मस्तिष्कपीडाकराणि अन्यैर्ग्रन्थकारैरनादृतानि–इति।

अत्र समाधनं–अत्र अन्यैरितिपदेन उपनिषद्–वेद–तदङ्ग–भाष्यादयश्च ग्रन्था अभिप्रेयन्ते उत जैनग्रन्था वा। नाद्यः उपनिषत्सु छान्दोग्ये दहरविद्यायसत्यमिति पदस्य सत् ति यम् इति निर्वचनं समुपलभ्यते। बृहदारण्यके (६-२-२) इन्द्रपदस्य व्याख्या 'एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव च देवाः प्रत्यक्षद्विषः' इति दृश्यते। ऐतरेये शतर्चिमाध्यमादिपदानां ऋग्वेदिनब्रह्मयज्ञ ऋषितर्पणे तर्प्यमाणर्षिवाचकानां लोकवैचित्र्येण व्याख्यानस्य दर्शनात् तथा वेदाङ्गे यास्कनिरुक्तग्रन्थे च बहुधा तथा दर्शनात्।

ब्रह्मसूत्रभाष्ये श्रीरामानुजीये "नेतरोऽनुपपत्तेः" इत्यत्र (१-१-१७) विपश्चित्पदस्य "विपश्चिचित्वं हि विपश्चित्त्वम्" इति निर्वचनं समुपलभ्यते तथैव ऽपि (३-२-१६ ब्रह्मसूत्रे) विविधं वस्तुजातं पश्यन्ती विमृशन्ती यस्य सः विपश्चित् इति।

ज्योतिराद्यधिष्ठानं तु तदामननात् ( २-४-१३ ब्र. सू. ) इत्यत्र रा० शांकर श्री० भाष्येषु 'तदामननात् आमननम् आभिमुख्येन मननं परमात्मनः संकल्पादेवेत्यर्थः' इति । तथा 'तृतीये शब्दावरोधः संशोकजस्य' इत्यत्र ( ३-१-२९ ) ब्रह्मसूत्रे भाष्ये 'संशोकजस्य=स्वेदजस्य' इति शोकशब्दस्य दुःखे लोकप्रसिद्धत्वेऽपि तं विहाय व्याख्यानम् ।

तथा "व्यष्टिः विविधा व्याप्तिः समष्टिः समन्तात् सर्वसाधारण्येन व्याप्तिः अशू व्याप्ताविति धातोः" इति शिवार्कमणिदीपिकायां १-३-४० ( ४९५-३० ), छांदोग्ये ( ३, १४, १ ) शां. भाष्ये "तज्जलानिति शान्त उपासीते" त्यत्र तज्जत्वात्तत्वात्तल्लदनत्वात् सर्वं खल्विदं ब्रह्म" इति, अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम्" ( ब्र. सू. ३-३-३२ ) इत्यत्र "श्रुतिस्मृतिभ्याम्" इति अनुमानपदस्य स्मृतिपरतया शां. रा. श्री. भाष्येषु व्याख्यातम् ।

तथा स्कन्दपुराणे पुरुषोत्तममाहात्म्ये "दानेन क्षीयते यस्माद्दुरितानां कदम्बकम् । दक्षिणेति तया विप्रा गीयते शास्त्रवेदिभिः" ( ४९ अ, ३९ श्लो. १२० पत्रे ) इति "भ्रमतो धर्मचक्रस्य यत्र नेमिरशीर्यत । कर्मणा तेन विख्यातं नैमिषं मुनिपूजितम्" इति ब्रह्माण्डपुराणे ( पू. भा. प्र. पा. १, अ २ ) इति । न द्वितीयः । जैनग्रन्थेष्वपि "राजा नो ददते सौख्यम्" इति एक पादस्यैव अष्टलक्षार्थकतया व्याख्यानरूपं पुस्तकं मुद्रितमुपलभ्यते ।

इदमत्र रहस्यम्—वैदिकशब्दानां न केवलमर्थतो महत्त्वं किंतु शब्दतोऽपि । अतः गायत्र्यादिभिस्तैस्तैः शब्दैस्तत्तदर्थानुसंधान एव अदृष्टविशेष उत्पद्यते इति सर्ववैदिकैरभ्युपगम्यते । प्रकृते च एवं जातीयनिर्वचनजन्यव्युत्पत्तिः उदाहरणतया अत्र ग्रन्थे निर्दिष्टानां वासुदेवरामादिपदानां तत्तन्मन्त्रजपकाले युगपद् बह्वर्थानुसंधानेन भगवतो बहुगुणान् स्फोरयति । ततश्च मनःप्रावण्यद्वारा स्वयोग्यभगवद्गुणोपसंहारं ध्यानं ततो भक्तिविशेषं भगवत्प्रसादं परमां भक्तिं मोक्षं च संपादयितुं प्रभवति ।

तथा हि रामपदेनैव रामावतारकथा सर्वाऽपि संक्षिप्य प्रतिपाद्यते तथा हि— रामायाः= स्त्रियः कौसल्याः अयं=संबन्धी सुतः कौसल्यासुत इति भावः । रामायाः ताटकायाः अः=निषेधः मारणरूपः येन सः । अमानो नाः प्रतिषेधे इत्युक्तेः । अत्र शकन्ध्वादेराकृतिगणत्वात् पररूपम् । अत्र १२५ तमपुटे उक्तरीत्या आमानां अपक्वानां दुष्टानां, रः=दाहकः; मारीचादिरावणान्तानां संहारकः । आमः=रोगः तापरूपः रः = तद्दाहकः । विश्वामित्रशरभंगजटायुसुग्रीवहनूमदादिस्वभक्तानां तापत्रयनिवारक इति भावः । रमाः = मुनिस्त्रियः अहल्यायाः; अयं = हितकारी तदुद्धारकः । रामायाः = लक्ष्मीरूपायाः सीतायाः, अयं = भर्ता इति अत्र सीता-

SRI VED ... A
GRAN H ... AYA
BELLARY



स्वयंवरकथा ध्येया । रामेण सहितो रामः रामः परशुरामेण ऐक्यमापन्नः " समेत्य चैक्यं जगतोऽभिध्यतः " इति ( म. भा. ता. नि. ४. ) इत्युक्तेः परशुराम-संवादकथा । अत्र " सरूपाणामेकशेष एकविभक्तौ " ( पा. सू. ) इत्येकशेषः । रामया = स्त्रिया कैकेय्या अः – राज्यस्य निषेधः यस्य सः । रैः = दाहकैः तापत्रयैः, अम = अमेय अविषयीक्रियमाण, नित्यं तापत्रयोज्झित, वनवाससीता-कृतदुःखरहित इति भावः । रामायाः = शूर्पणखायाः स्त्रियः, अः = कर्णनासा-च्छेदरूपः निषेधः येन सः । रामायाः = शबर्याः स्त्रियः, अयं = उद्धारकः । रः = क्रीडारूपः, अमः = अमेयः रामः इत्यादिरीत्या अनुसंधेयम् ।

एवं कृष्णशब्दस्यापि कृष्णावतारकथापरा व्याख्या " यतः कर्षसि देवेश नियम्य सकलं जगत् । अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः " इति गीताभाष्योक्तप्रमाणानुसारेण अनुसंधेया, सकलं जगत् = कंसजरासंधदुर्योधनादि, नियम्य = दण्डयित्वा, कर्षसि तथा पाण्डवाक्रूरादि भक्तजनाख्यं जगत् नियम्य = स्वाभिमुखीकृत्य संप्रेर्य स्वर्गतिं प्रति कर्षसि " इत्यादि ।

ननु " भाभा " इति पद्ये ३२ प्रकारैः धातुव्याख्यानानि कृतानि । तानि अप्रसिद्धानि इति चेत् । उच्यते । धातूनामनेकार्थत्वात् । सिद्धान्तकौमुद्यां भूधातुनिरू-पणान्ते " सत्ताद्यर्थश्चोपलक्षणम् । यागात् स्वर्गो भवतीत्यादौ उत्पद्यते इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः यथा उद्भवतीत्यादौ । एवं दंश दशने इत्यत्र "अर्थनिर्देशस्याधुनिकत्वात्" इति । तत्रैव बालमनोरमायाम्–"धातुपाठे भूसत्ताया-मित्याद्यर्थनिर्देश इत्यर्थः । उपलक्षणमिति । प्रदर्शनमात्रमित्यर्थः । न च यागा-त्स्वर्गो भवतीत्यादौ उत्पत्त्यादौ लक्षणा कुतो न स्यात् इति वाच्यम् । प्रयोगप्राचुर्य-सत्त्वात् । न चातिप्रसङ्गः शङ्क्यः । प्रयोगानुसारित्वावगतेः । सर्वेषु धातुषु अर्थ-निर्देशस्त्वाधुनिकः" इति । संप्रति भाधातोः एतावत्स्वर्थेषु प्रयोगा नोपलभ्यन्ते इति चेत् " उपलब्धौ यत्नः क्रियताम् महान्हि शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती । त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा विभिन्नाः एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदो वाकोवाक्यमिति-हासः पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोग-विषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं साहसमात्रम्" इति व्याकरणमहाभाष्यं ( १-१-१ ) समाधत्ते तत्र शङ्काम् ।

तथा अन्यत्र व्याकरणमहाभाष्ये ( ६ अ, १ पा. १ आ, ) ९ सू. ' सन्यङोः ' इत्यत्र, तथा ( ६ अ, १ पा, ३ आ, ) ' आदेच उपदेशेऽशिति ' इति सूत्रे च ( ६।१।४५ ) स्थलद्वयेऽपि अस्ति " बह्वर्था अपि धातवो भवन्ति । तद्यथा–वपिः प्रकिरणे दृष्टः छेदने चापि वर्तते–केशान् वपतीति । ईडिः स्तुति–चोदनायाञ्चासु दृष्टः, ईरणे चापि वर्तते–अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुत-

श्च्यावयन्ति । करोतिरयमभूतप्रादुर्भावे दृष्टो, निर्मलीकरणेचापि वर्तते—पृष्ठं कुरु—पादौ कुरु, उन्मृदानेति गम्यते । निक्षेपणे चापि दृश्यते—कटे कुरु—घटे कुरु—अश्मानामितः कुरु, स्थापयेति गम्यते ” इति ।

प्रदीपे तद्व्याख्याने च—‘ उपेयप्राप्त्यर्थत्वादुपायानां धातूनां चानेकार्थत्वात् तन्नियम आदराभावः ” इति ।

एवं ‘ सामान्यात्तु ’ ( ब्र. सू. ३-२-३२ ) इत्यत्र बुध्यर्थः पादवत् इत्यतः पूर्वतने सूत्रे ( अधिकपाठे ) शांकरभाष्ये ‘ सेतुं तीर्त्वेत्यपि तरतेरतिक्रमासंभवात् प्राप्त्योत्यर्थ एव वर्तते । यथा व्याकरणं तीर्ण इति प्राप्त इत्युच्यते नातिक्रान्तस्तद्वत् । एवमेव श्रीकण्ठरामानुजभाष्ययोरपि वर्तते । तथा भाट्टदीपिकायां उद्भिदधिकरणे उद्भिद्यते उत्पद्यते फलमनेनेति उक्त्वा धातूनामनेकार्थत्वमर्थनिर्देशस्याधुनिकत्वं चोक्तम् । “ क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः ” इत्यभियुक्तेश्च ।

---

# टीकादिपञ्चव्याख्यानामावश्यकता

(१) श्लोकरूपटीका तु मूलकाराणां साक्षाच्छिष्यैः (तत्कालीनैः) श्रीनरहरितीर्थैः मूलकाराणाम् आशयं तन्मुखतोऽवबुध्यैव निरमायि। अत एवास्या महत्त्वम्। एतामुपजीव्यैव अन्यैर्व्याख्यातृभिः व्याख्या निरमायिषत इति तैरेवोद्घोष्यते। अस्या वैशिष्ट्यं एषु स्थलेषु द्रष्टुं शक्यते तथाहि—४७ तमे पुटे "अनयद्दामोदरताम्" इत्युक्तग्रन्थस्यायोग्यत्वमुक्तं योऽरमयत्सुन्दरीं निजामोदरतामित्यनेन। तत् टीकायां विवृतम्। मूलात् तत् कथं लभ्यत इत्येतत् टिप्पण्यां विव्रियते।

| | |
|---|---|
| ५१ तमे पुटे | वृन्दावनशब्दार्थः त्रेधा विवृतः। |
| ७९ ,, ,, | "भकश्चन्द्रोरुशद्धानुः" इति व्याख्या |
| ८१ ,, ,, | "सविहरकमात्रम्" इत्यस्य गरुत्मद्धरकश्रीभिस्त्रातम्" इति व्याख्या |
| २५ ,, ,, | वासुदेवपदस्य मुख्यप्राणान्तर्गतत्वेन व्याख्या |
| ८३ ,, ,, | समनुगतनादस्येति व्याख्या |
| १०० ,, ,, | स बहुतनुतामित्यस्य "सर्वं यज्ञहुतां नुताम्" इति व्याख्या |
| ८६ ,, ,, | 'येनाधीतं सुतेजस्वि जीवनायाप्रयोगतः' इत्यत्र "तेजस्विनावधीतमस्तु" इति तैत्तिरीयोपनिषद्गत-तेजस्विपदस्यार्थः विवृतः |

एवं सर्वश्लोकेष्वपि यमकपदेषु द्वितीयवारमागतपदानां व्याख्यासु वैशिष्ट्यं सर्वटिप्पणीनां दरीदृश्यते। अस्याः शैली दुर्गमा क्वचित् सुगमा च।

## (२) टीकाकारैः कृता वाक्यरूपा टिप्पणी

इयं बहुविस्तृता अपूर्वार्थका च। एतां विना मूलटीकयोः संगमनं दुःशकम्। क्वचित् टीकाप्रतीकमपि गृह्यते। आद्यपद्यत एव स्वारस्यमस्या ज्ञायते। वैशिष्ट्यं २६, ४८, पुटयोः विशेषतो दृश्यते। इयं नरहरि तीर्थैरेव रचिता वाक्य रूपा टिप्पणी इति तात्पर्यनिर्णयव्याख्या भावचन्द्रिकायां द्रौपदीरमणप्रसङ्गे ग्रहणात्स्फुटीभवति। यतोऽत्र तदर्वाचीनग्रन्थानामुल्लेखो न दृश्यते। अतः इयं संपूर्णा मुद्रिता। अस्याः शैली प्रायः सुगमा क्वचित् दुर्गमा च। एकस्मिन् कोशे (मैसूरपुस्तके) प्रतिपत्रं उभयोः पार्श्वयोः नरहरितीर्थीया टिप्पणी इत्यस्ति परं ग्रन्थान्ते त्रुटितं। १५५ तमे पुटे १६ पंक्तौ. 'न मे देहादिकं वस्तु सशोषः परमात्मनः' इति। पंचरात्रे अहिर्बुध्न्य संहितायामिति रहस्य त्रयसारे वेदान्तदेशिककृते नमः इत्यस्य न. मे=मम, मदीयम् इत्याद्यर्थः कृतः निषेधे आदरसूचनाय

नेत्यस्य पूर्वं निर्देशः ' दृष्टा सीते ' त्यादिवत् इति । अतो नेदमलौकिकम् विष्णवे पुष्पं नम इत्यादौ त्यागार्थकत्वमिति व्युत्पत्तिवादे च ।

श्रीनरहरितीर्थैः रचिता अन्ये ग्रन्था गीताभाष्यटीका कर्मनिर्णयटीका च इति श्रीजयतीर्थटीकायां उल्लेखतः ज्ञायते ।

तासु ऐदंप्राथम्येन अस्या एव संप्रति मुद्रणमित्यत्रापि एकाऽपूर्वता वर्तते ।

अन्याष्टिप्पण्यः एतद्गृहीतस्थले विशिष्टार्थस्थले च मुद्रिताः । यद्यपि संपूर्णतया दृष्टास्वेव तासु वक्त्रभिप्रायस्वारस्यं ज्ञायते । तथापि पाठकानां एकत्रैव दृष्टिनिक्षेपार्थं जामितावारणाय च ग्रन्थगौरवभिया संकोचः कृतः । अत्र पूर्वापरीकारमयापरं वा क्षाम्यन्तु मे हन्त मुहुर्महान्तः ।

## ( ३ ) तिम्मण्णभट्टीयटिप्पणी

एतत्कर्तृणां नामधेयं उपक्रमे तिम्मण्णभट्टेत्यस्ति । उपसंहारे तिम्मण्णभट्टसुत-तम्मणभट्टेत्यस्ति ।

अत्र श्लोकसूत्रटीकोक्तरीत्या मूलस्य विवरणं वाक्यैः प्रकाश्यते इति प्रतिज्ञातम् । परं संक्षिप्ता । शैली सुगमा । अस्या वैशिष्ट्यं पुटे-१४-३२-८०-८७ इत्यादौ दृश्यते ।

## ( ४ ) भगवत्कृता टिप्पणी

प्रतीकग्रहणं विना एषाऽपि मूलटीकयोः संगमनरूपा, विस्तृता । शैली अस्याः सुगमा । टिप्पणीगृहीतटीकापाठात् अत्रत्यपाठस्य बहुस्थले भेदो दृश्यते । टीकायां धनुश्चिन्हात् प्रायः बहिर्भूतः पाठः एतद्गृहीतः मुद्रितः ।

पुटे ( १७२ ) यादुपत्ये इति ग्रहणेन यादुपत्यटिप्पणीतः अर्वाचीना एषा इति ज्ञायते—यादुपत्यानुसारिण्येवैषा प्रायः सर्वत्र । यादुपत्येपि सर्वत्र विशेषणानां प्रयोजनं आकाङ्क्षाक्रमेण वर्णितं दरीदृश्यते परं तत्पुस्तकं मुद्रितम् । रा. सुदर्शनशर्मा साहित्यशिरोमणि श्रीगोपालविलासप्रेसकुंभघोणम् " एतद्विलासे लभ्यते च इति अत्र न गृहीतम् । विशेषस्तु पुटेषु १४, २३, २७, १२० । (१) भेदोज्जीवनटिप्पणी ब्रह्मसूत्रभाष्यभावप्रदीपः, ( ३ ) ब्रह्मसूत्राधिकरणार्थयुक्तिसंग्रहश्च एतत्कृताः ग्रन्थाः ।

## ( ५ ) नारायणार्यटिप्पणी

अत्र टीकानुसारिव्याख्यानं कृत्वा तदुपजीवनेन ततोऽपि विशिष्टार्थाश्च व्याख्यास्यन्ते यथा पुटेषु—१५, २०, २९, ५९, १२६—१३८, पर्यन्तं, सर्वावतारपरार्थाः । १६४—१६६, १४१, १२२. तत्रापि सुत्वीत्यादौ, पाणिनिव्याकरणानुसारेणैव नयनम् अत्र दृश्यते । अद्वैतकालानलः मध्वमन्त्रार्थमंजरी चेत्येतौ ग्रन्थौ एतत्कृतौ । ११० पुटे, इत्यादौ उदाहृतवासुदेवसहस्रनाम्नः वाक्यानि पद्मपुराणोक्तानि गीताभाष्य टीकायां आद्यपद्ये, युक्तिमल्लिकायां चोदाहृतानि ( ६ ) लघु-

टिप्पण्यां तु टीकायां मंगलश्लोक-व्याख्या मध्ये मध्ये आवश्यक स्थले व्याख्या । ऋग्भाष्यटीकाप्रकाशस्य तत्प्रस्तावनायाश्च तथा अनुव्याख्यान-लघुटिप्पण्याश्च संपादनं चैते गुत्तलहयग्रीवाचार्यकृताः ।

## ग्रन्थकाराणां चरितम्

यमकभारतकर्तॄणां श्रीमदानन्दतीर्थभगवत्पादानां चरित्रादिकं मध्वविजयग्रन्थतो ज्ञायते तस्य महत्त्वं प्रामाण्यं च मध्वविजयकारैरेव तद्व्याख्यायां भावप्रकाशिकायाम् उपपादितं ग्रंथान्ते 'प्राणाधीशः प्राणउक्थ्यो ज्येष्ठः श्रेष्ठोऽखिलेश्वरः पाप्मनाऽविद्ध इत्यादि नानोपनिषदीरितः ।। २ ।।

सामर्थ्यांशांशमेवात्र प्रादुश्चक्रे जगद्गुरुः तत्राप्यमर्त्यैदृश्यांशो देवैरेवान्वभूयत ।।५।। चर्या दृष्टा नरैः कैश्चिद्विस्मृता देवमायया। अविस्मृताश्च पुरुषैर्नास्माभिः सकलाः श्रुताः ।। ६ ।। श्रुताश्च काश्चिन्नैवोक्ता देवगुह्यत्वनिश्चयात् ।। अन्यास्तथैव न प्रोक्ता ग्रन्थबाहुल्यभीतितः ।। ७ ।।....काव्यश्रिये वा गुरुकीर्तये वा प्रोक्तं स्वयैवापि मनीषयेति ।। तस्मान्न शङ्क्येत महाजनेऽस्मिन् पुंसा कुशाग्रीयधियाऽप्यवश्यम् ।।१०।। इति.

सरसभारतीविलासे सप्तमे विलासे विशेषः ।।

शरच्छते व्यतीते तु देवानामाज्ञया प्रभोः ।
एकतां मूलरूपेण लोके स्वीये गमिष्यति ।। २५ ।।
स्वानुजं विष्णुतीर्थं तु तपसा धूतकल्मषम् ।
प्रेषयिष्यति सत्तत्त्वकथनाय कलौ किल ।। २६ ।।
स्वच्छन्दमृत्युता व्यासकृपयाऽस्त्युभयोस्तयोः ।

ಶ್ರೀ ಸೂರ್ಯ ಗ್ರಂಥ ಭಂಡಾರ
8/16. ಶ್ರೀ ಲಕ್ಷ್ಮೀನರಸಿಂಹ ದೇವಸ್ಥಾನ
ಬಳ್ಳಾರಿ-583.101

A. S. Bheemasena Char
B. N. Temple, Gold Smith Street,
BELLARY

सप्तत्रिंशन्मितैर्ग्रन्थैः ख्यापयन् स्वकृतैर्मतम्
ददौ तुर्याश्रमं तुष्टः चतुर्भ्यः संसृतिच्छिदे ॥ २२ ॥
तत्राद्यः पद्मनाभाख्यो द्वितीयो नृहरिः स्मृतः ॥
तृतीयो माधवश्चैवाक्षोभ्यतीर्थश्चतुर्थकः ॥ २३ ॥
चत्वारो द्वैतशास्त्रे तु समर्थाः शास्त्रिणः पुरा ॥
सुयोग्या अप्ययोग्यानां संगाद्दुश्शास्त्रिणोऽभवन् ॥ २४ ॥
स तु शोभनभट्टाख्यस्त्वितरे तु मठं प्रति ॥
समागत्यानन्दतीर्थैः संन्यासमलभंस्तदा ॥ २५ ॥
प्रणवं चोपदिश्याथ तस्मै मध्वाभिधो मुनिः ॥
पद्मनाभाख्यतीर्थोऽयमिति नाम चकार ह ॥ २६ ॥
तदैव च यजुर्वेदी श्यामशास्त्री समेत्य तम् ॥
ममापि देहि संन्यासमिति मध्वमुवाच ह ॥ २७ ॥
तमहानिन्दतीर्थस्तु मा संन्यासे मनः कुरु ॥
राज्याधिपत्यं भवति सुखप्रारब्धमस्ति ते ॥ २८ ॥
इत्युक्तः सुखतीर्थेन श्यामशास्त्री तमूचिवान् ॥
तेनैवान्तःप्रेरितः सन् देहीत्येवं पुनः पुनः ॥ २९ ॥
सुखतीर्थमुनिस्तस्मै दत्वा तुर्याश्रमं ततः ॥
ददौ नृहरितीर्थोऽयमिति नाम मुदान्वितः ॥ ३० ॥
ततस्तमूचे नृहरितीर्थं प्रीतिपुरःसरम् ॥
इतः परं गजाधीशराज्यप्राप्तिर्भवेत्तव ॥ ३१ ॥
तत्र द्रव्यालये द्रव्यादधः पुरुषयुग्मतः ॥
मंजूषा वर्तते तस्यां सीतारामोऽस्त्यजार्चितः ॥ ३२ ॥
इदानीं तत्र राजास्ति शुभशर्माभिधः सुधीः ॥
तत्र त्वदीयगमनं भविष्यति न संशयः ॥ ६१ ॥
तदानीं शुभशर्मापि राजा लोकान्तरं व्रजेत् ॥
अराजकत्वात् सर्वेऽपि भवेयुश्चिन्तयान्विताः ॥ ६२ ॥
राजपत्न्यां तु गर्भिण्यां राज्ञि लोकान्तरं गते ॥
तदैव दैवयोगात्ते राज्यप्राप्तिर्भविष्यति ॥ ६३ ॥
आद्वादशाब्दं कृत्वाथ राज्यं निहतकंटकम् ॥
प्रत्यर्प्य राजपुत्राय राज्यं त्वं धनमन्दिरात् ॥ ६४ ॥

गृहीत्वा राममञ्जूषां वाजीन्द्रमधिरुह्य च ॥
परित्यज्याथ तद्राज्यं शीघ्रं देशान्तरं व्रज ॥ ६५ ॥
इत्थं नृहरितीर्थे तमुपादिश्याखिलं तदा ॥
विररामानन्दतीर्थः सर्वसज्जनसन्निधौ ॥ ६६ ॥

॥ इति गुरुकथाकल्पतरौ तृतीयसर्गे ॥

ततो नृहरितीर्थास्तैस्तीर्थयात्रानिमित्ततः ॥
अनुज्ञाताः संचरन्तः गजराजपुरं ययुः ॥ १७ ॥
तत्र लाङ्गूलनद्यां ते स्नात्वा तीरे सुशोभने ॥
गुहान्तरे तपोनिष्ठा जपन्तः समुपास्थिताः ॥ १८ ॥
तदैव शुभशर्मापि राजा लोकान्तरं गतः ॥
अराजकत्वात्सर्वाश्च प्रजाश्चिन्तां प्रपेदिरे ॥ १९ ॥
सन्तत्यभावात् राज्ञोऽत्र प्रधानप्रमुखास्तदा ॥
दत्वा मालां हस्तिहस्ते मुमुचुस्तं नृपार्थिनः ॥ २० ॥
स वारणवरः शुण्डादण्डेनाकृष्य मालिकाम् ॥
राजवीथिषु सर्वत्र बभ्रामान्वेषयन्नृपम् ॥ २१ ॥
अदृष्ट्वा नगरे पश्चात् राज्ययोग्यनरं परम् ॥
पुराद्बहिः न गर्जन् मन् नदीतीरमथाययौ ॥ २२ ॥
तत्र स्थित्वा गुहाद्वारे गजो गर्जनतत्परः ॥
न चचाल स्थलात् तस्मात्सर्वे चिन्तां प्रपेदिरे ॥ २३ ॥
गजगर्जनमाकर्ण्य जपान्ते ते गुरूत्तमाः ॥
किमेतादिति तं द्रष्टुं बहिर्याताः यदृच्छया ॥ २४ ॥
दृष्ट्वा यतीन् गजवरो मालामंसे निधाय च ॥
प्रणम्य तत्पुरस्तस्थौ जनानां पश्यतां तदा ॥ २५ ॥
अथ प्रधानप्रमुखा दृष्ट्वा संन्यासिशेखरान् ॥
तानयाचन्त राज्यार्थं दैवाधीनाननेकशः ॥ २६ ॥
स्मृता गुरूक्तं तद्वाक्यं नृहर्याख्यमुनीश्वराः ॥
मनसा गर्भिणीं ज्ञात्वा राजपत्नीं गुरूक्तितः ॥ २७ ॥
यदि शक्रसमैश्वर्यं तद्बोक्तव्यं न संशयः ॥
इति मत्वा प्रधानादीनाहूयैवं बभाषिरे ॥ २८ ॥
वयं संन्यासिनो राज्ये नास्माकं किं प्रयोजनम् ॥
तथापि भगवत्प्रीत्यै करिष्यामः प्रजाऽवनम् ॥ २९ ॥
अन्तःपुरे च महिषी गर्भिण्यास्ति पतिव्रता ॥
पुत्रो वंशकरस्तस्या भविष्यति न संशयः ॥ ३० ॥

आद्वादशाब्दं कृत्वाथ राज्यं निहतकंटकम्
गमिष्यामस्ततः पश्चात् हित्वा राज्यं यथागतम् ।। ३१ ।।
इत्थं तेषां वचः श्रुत्वा तेऽङ्गीचक्रुः प्रजास्ततः ।।
प्रातः कृत्वान्हिकं सर्वे राज्यं ते चक्रिरे तदा ।। ३२ ।।
ततो नृहरितीर्थास्ते राज्यं निहतकंटकम् ।।
आद्वादशाब्दं कृत्वाथ राजपुत्राय तत्पदम् ।। ३३ ।।
दत्वा तैरर्थिता युष्मद्वांछितं यन्च वर्तते ।।
गृह्यतां राजधान्यां तत् इति तानभ्ययाचिरे ।। ३४ ।।
द्रव्यालये तु मंजूषा वर्तते रामसंयुता ।।
तां नेष्यामो वयं नान्यदिच्छामो भिक्षुका इति ।। ३५ ।।
ततस्ते सचिवैः पश्चात् अनुज्ञप्तास्तथास्त्विति ।।
द्रव्यागारस्थितां रामसीताभ्यां च समान्विताम् ।। ३६ ।।
रामानिष्कसमेतां च मंजूषां द्रव्यमन्दिरात् ।।
गृहीत्वा निखिलं हित्वा शीघ्रं गन्तुं समुद्यताः ।। ३७ ।।
आरुह्य वाजिनं दिव्यं स्मृत्वा मध्वमुनेर्वचः ।।
हित्वा ते राजधानीं ते सत्वरं निर्ययुः पुरात् ।। ३८ ।।
गते रामे पुरात् काश्चित् देवाविष्टः सभातले ।।
प्रोवाच रामगमनात् हानिरास्ति न संशयः ।। ३९ ।।
इति तस्य वचः श्रुत्वा राजपुत्राज्ञया तदा ।।
तं रामं पुनराहर्तुं तत्सैन्यं निर्गतं पुरात् ।। ४० ।।
दृष्ट्वा तत्सैन्यसंरंभमश्वारूढा मुनीश्वराः ।।
गुरुप्रसादात् तीव्रेण देशात् तस्माद् विनिर्गताः ।। ४१ ।।
देशान्तरगतान् दृष्ट्वा तत्सैन्यं निर्गतं पुनः ।।
अद्यापि तद्देशमतः संस्थानं नैत्र गच्छति ।। ४२ ।।
गते सैन्ये विनिर्गत्य तास्मिन्नेव दिनेऽथ ते ।।
आरुह्याश्वोत्तमं दिव्यं कूर्मक्षेत्रं समागताः ।। ४३ ।।
तत्र रामं प्रतिष्ठाप्य सीतायुक्तं शिलामयम् ।।
निर्माय देवानिलयं पुरात्तस्माद्विनिर्गताः ।। ४४ ।।
ततो नृहरितीर्थास्ते रौप्यपीठपुरं प्रति ।।
समेत्यानन्दतीर्थेभ्यां मूलराममथार्पयन् ।। ४५ ।।
तां मूलरामप्रतिमां सीतया च समान्विताम् ।।
भजतामिष्टदां योगिकरकंजार्चनोचिताम् ।। ४६ ।।

।। इति चतुर्थसर्गे ।।

ततो नृहरितीर्थैस्तत् संस्थानं कृतमादरात् ॥
तदेव मूलसंस्थानं मूलादिग्विजयार्चनात् ॥ ६ ॥
एवं ते नववर्षाणि मासमेकमतीत्य च ॥
त्रयोविंशद्दिनांते च सर्वे तद्देवतार्चनम् ॥ ७ ॥
दत्वा माधवतीर्थेभ्यः ततः श्रीमुखवत्सरे ॥
पौषे कृष्णे च सतम्यां गजकोण्यां (चक्रतीर्थे) गुरूत्तमाः ॥ ८ ॥
तुङ्गभद्रानदीतीरे गुरोर्बृंदावनान्तिके ॥
त्यक्त्वा देहं हरिपदं जग्मुरत्यन्तदुर्लभम् ॥ ९ ॥

॥ इति पंचमे सर्गे ॥

## इतिहाससमालोचनम् ।

" हिस्ट्री ऑफ ओरिसा " इति पुस्तके आर. डी. ब्यानर्जीत्येतैः संगृहीते पृष्ठेषु २७०–२८८ पर्यन्तेषु श्रीनरहरितीर्थचरितं लिखितमस्ति तद् यथा– गंजामप्रान्ते चिकाकोलपत्तने श्रीनरहरितीर्थाः उद्भूताः । एषां पितरः नरसिंह-भट्टोपाध्यायाः कलिंगदेशनृपैः वंशपरम्परागतमन्त्रिपदे नियुक्ता आसन् । एषां पूर्वाश्रमनाम श्याम (राम) शास्त्री इति । आबाल्यात् स्ववंशसंप्रदायमनुसृत्य सकल-वैदिकलौकिकशास्त्राण्यधीत्य तत्र प्रावीण्यं समपादयन् । प्रौढे वयसि एतेऽपि कलिंग ( ओरिसा ) देशे प्रथमभानुदेवनामकनृपस्य मन्त्रिणोऽभूवन् । सनातन-धर्मपद्धत्या प्रजाः अपालयन् । तदा प्रसङ्गतः युद्धरङ्गे, शत्रून् पराजित्य देवालयं प्रजाश्च अरक्षन् । अत्र श्रीकूर्मस्थे शके १२०३ तम वर्षीये शिलालेखे ६–७ श्लोकौ प्रमाणम् । ततः मन्त्रिपदं विहाय श्रीमदानन्दतीर्थभगवत्पादानां सकाशात संन्यासं गृहीतवन्तः ।

पुनः गुर्वाज्ञया कलिङ्गदेशं प्रति यदा अगमन् तदा प्रथम भानुदेवः दिवंगत आसीत् । चालुक्यवंशजायां तत्पत्न्यां द्वितीयनरसिंहराजनामा शिशुरासीत् । तदा तत्रत्यमन्त्रिणां सद्गृहस्थानां च प्रार्थनानुसारेण तद्विश्वासपात्र-भूता इमे राजप्रतिनिधितया राज्यपालनमकार्षुः संन्यासधर्माविरोधेन । राजपुत्रः यदा अष्टादशवयस्को जातः तदा तस्मै महोत्सवपूर्वकं राज्यभारं प्रत्यर्पयन् । कृतज्ञस्य द्वितीयनरसिंहराजस्य प्रार्थनानुसारतः कोशागारस्थां श्रीमूलरामप्रतिमां सीता-प्रतिमां च संगृह्य श्रीमदानन्दतीर्थेभ्यः शके १२३९ कार्तिक शुद्ध द्वादश्यां समर्पयन् । ते ८० दिनपर्यन्तं संपूज्य पद्मनाभतीर्थेभ्यः दत्वा तदनन्तरं नरहरितीर्थेभ्यः दानाय आज्ञापयामासुः। कर्णाटकदाससाहित्यस्य आद्यप्रवर्तका इमे एतद्रचितं पद्यमेकमस्ति । विजयनगरसम्राजां उपदेशकाः तैर्मान्याश्चासन् एषां मुद्रिका–" रघुकुलतिलक " " नरहरि " नृहरिरघुपति " इत्यस्ति ।

## तदानीं राज्ञां नामानि तत्कालश्च

कलिङ्गदेशे गजपतिराज्याधीशस्य प्रथमनरसिंहस्य राज्ञः मृत्युकालः शके ११८६, इस्वि सन् १२६४। तदनन्तरं तत्पुत्रः प्रथम भानुदेवः १५ वर्षपर्यन्तं राज्यं चकार। तस्य मृत्युः क्रिस्तशक १२७९। ततःपश्चात् तत्पुत्रः द्वितीयः नरसिंहः शिशुरासीत् द्वितीयनरसिंहाय चतुर्थशासनरीत्या क्रि. श. १२९३ तमे वर्षे नरहरितीर्थैः राज्यं प्रत्यर्पितम्। द्वितीयस्यनरसिंह मृत्युः क्रि. श. १३०६ तमे वर्षे। १३२४ क्रि. श. वर्षे नरहरितीर्थानां वेदान्तसाम्राज्याधिपत्यं। १३३३ तमे तेषां वृन्दावनप्रवेशः इति हिस्ट्री ऑफ ओरिसा पुस्तके लिखति। अत्र कालविषये मतभेदो वर्तते गुरुचर्यादिग्रन्थकाराणाम्।

कर्नाटकभाषायां श्रीहरिदासभारती–ग्रन्थरत्नमालायां विजयाङ्करत्नं षष्ठभागे पृष्ठेषु १६ त.– ३५ पर्यन्तेषु। श्रीनरहरितीर्थानां चरित्रविशेषा दत्ताः तत्र २८ तमे पुटे–स्वस्ति श्रीशकवत्सरे शरधरातिग्मांशु संस्यान्विते सीतालक्ष्मण-संगतस्य सुतनो रामस्य कूर्मालये। भक्त्या श्रीनृहरिर्मुनिर्गुणनिधिः कृत्वा प्रतिष्ठां शुभाम् तत्पूजानिमित्तं समददौ स्वर्णं क्षमानीरधिः" (श्रीकूर्मशासन म ॥ सि ॥ उक्त ॥ स ॥ रिपोर्ट 1896-97) क्रिस्तशके १२९३ अब्दा भवन्ति।

अत्रैवं कथा–श्रीनरहरितीर्थानां गजपतिराज्यकोशागारतः मूलरामसीता-प्रतिमयोरानयनानन्तरं कोशागरस्य अग्निभये प्राप्ते राजाज्ञया भटा श्रीकूर्मे एतदन्तिकमागत्य ते प्रतिमे दातुं विज्ञापयामासुः। तदा एते तत्प्रतिमे आच्छाद्य प्रतिमान्तराणि नेतुम् अदुः। तत्तपोबलात् ता अपि चालयितुमप्यशक्नुवन्तः दूताः निराशाः सन्तः प्रतिनिवृत्ताः। ततः नवीनप्रतिमास्तत्रैव प्रतिष्ठाप्य निरन्तरपूजार्थं स्वर्णदानादि चक्रुः इति। ब्रह्मकरार्चितमूलरामसीताप्रतिमे श्रीमदानन्दतीर्थेभ्यः समर्पयन्।

श्रीनरहरितीर्थाः चारित्र्येऽपि दार्ढ्यमन्त आसन्। अत एव स्वकृतानि अद्भुतकार्याणि शिलालेखोल्लिखितानि चक्रुः। सिंहाचलशासनानि सर्वाणि S. I, I V o l. Iv तमे प्रकटितानि। क्रिस्त ॥ श ॥ १२९१ तम No. 965 शासने सिंहाचले सिंहाचलनाथाय देवाय श्रीनरहरितीर्थैः नानाविधानि दानानि कृतानि इति वर्तते। क्रि ॥श॥ १२९२ तमे No 943 शासने उत्कल (ओरिसा) मत्स्यवंशीयः जयन्तनामा माण्डलिकः श्रीनरहरितीर्थानामाज्ञानुसारतः दानं चकार इति उल्लिखितमस्ति। सिंहाचले श्रीनरहरितीर्थाः 'नरहरिमठ' नामकं मठं संस्थाप्य तद्योगक्षेमानिरीक्षणार्थं स्वशिष्यान् श्रीजगन्नाथतीर्थनामकान् नियोजयामासुः। इमे जगन्नाथतीर्थाः अस्मै मठाय कानिचन दानानि ददुः इति क्रि. श. ॥१३७३॥ तमवत्सरीयं क्रमाङ्क १०२५ तमं शासनम् आवेदयति। रात्रिंदिवं श्रममनुभूय श्रीनरहरितीर्थाः स्वशिष्यैः साकं कलिङ्गदेशे सर्वत्र श्रीमध्वसिद्धान्तप्रचारं केवलं नातन्वन् किंतु स्ववर्चसा अनेकनृपानपि मध्वमतावलम्बिनः अकुर्वन्।

श्रीनरहरितीर्थानां परमानुग्रहेणैव तेषां संनिधावेव श्रीनरसिंहनामकः एकः नाण्डलिकः सिंहाचलदेवाय दानमकरोदिति क्रि ॥ श ॥ १२७८ तमे क्रमांक ७१९ तमे शासने अस्ति । सिंहाचलस्य "श्रीनरहरिभवनाय" सुरभि-कुलोत्पन्नः एकः सामान्तनृपः दानमकरोत् इति क्रि ॥ श ॥ १२८५ तमे क्रमाङ्क ७१३ तमे शासने वर्तते । मत्स्यराजस्य अर्जुनस्य पुत्रः श्रीजयन्तः सिंहाचलनाथाय नित्यपूजार्थे पुष्पोद्यानमदात् इति क्रि ॥ श ॥ १२९२ तमे शासने लिखितमस्ति । एतत्सर्वस्य अवलोकनेन श्रीनरहरितीर्थानां राज्यपालनक्रमः अत्यन्तं सुव्यवस्थितः अभिवृद्धश्चासीति ज्ञायते । अनेके मत्स्यवंशीयनृपाः एतत्पादद्माराधका आसन् । ततः वेदान्तसाम्राज्यप्राप्त्यनन्तरं पम्पाक्षेत्रसमीपे गजगह्वरपुरे तद्राजेन जम्बुकेश्वरेण महाराजेन क्रि ॥ श ॥ १२९७–१३३४ वर्षपर्यन्तं राज्यं कृतवता प्रार्थिताः राज्यतन्त्रप्रवीणाः ज्ञानवृद्धाः वयोवृद्धाः वेदवेदान्तप्रवीणाः इमे राज्यक्षेम-चिन्तनाय तस्मै काले काले उपदेशं कुर्वन्तः सन्तः श्रीपद्मनाभतीर्थैः साकं तत्रैव वासमकुर्वन् ।

श्री :

श्रीनरहरितीर्थानां विषये षट् शिलालेखाः सन्ति ।

तेषु एकः शक ११८६ तम वर्षीयः अस्ति । ततः पश्चात् पञ्चदशवर्षेषु एकोऽपि शिलालेखः नोपलब्धः । तदनन्तरं पुनः शक १२०३ तमवर्षीयः उपलब्धोऽस्ति । तेषु अतिबृहत् शिलालेखः १२०३ तमवर्षीयः वर्तते । लेखः गंजमजिल्हा चिकाकोलतालुकामध्ये श्रीकूर्मक्षेत्रे योगानन्दनरसिंहदेवालये कूर्मेश्वर-मंदिरस्य पुरतः ग्रॅनाइट धातुमये कृष्णस्तम्भे उट्टङ्कितो वर्तते ।

अयं शिलालेखः एपिग्राफिका इंडिका, षष्ठे भागे, पृष्ठ २६६ तः २७० पर्यन्ते मुद्रितोऽस्ति । पूर्वाभिमुखम्—

पंक्ति - TEXT – [ संहिता ] शब्दानुपूर्वी

१–देव [ : ] श्रीकमलाविलासलहरीपात्रं कलिप्रोन्मिलत् क्लेशाक्लिष्टजनेऽखिल-क्षितितले संलील ( न? ) बोधो ।

२–दये [ । ] स्वीय श्रीपदपंकजैकशरणान् [ सं ] रक्षितुं सन्मुनिर्जात [ : ] श्रीपुरुषोत्तमाभिध [ म ] ( । )

टीप [ ] एतच्चिह्नान्तः पातीनि मूललिपौ अस्पष्टानि

३–हा [ ती ] र्थस्सुमतयग्रणीः । [ १ ] यन्मुनिभाषित भाष्यं बा ( भू? ) ष्यं किल तीर्थिकप्रवरसंघैः [ । ] उ–

४–न्मदवादिद्विरदप्रतिकुंभमंकुशं भवति ॥ [ २ ] तस्य ज्ञानकला-कलोदयकलो वैय्य [ । ]–

५–सी ( सि ! ) कं गोगणं ( । ) मन्दे [ भि ] ( र्भि ! ) जपयप्रथा ( ता ! ) रितमलं सुव्यक्तभेदे पथि । नेतुं संधृतदंड–

६–मंडितकरो यः प्रादुरासीन्मुनिव्रतैस्सेव्यपदारविंदयुगळादानन्दती [र्थों मु]

७–निः [ ३ ] यन्मुखानि [ : ] सृतभाषा ललिता ललितप्रकारपद-विन्यासा [ । ] कलाप [ ति ] पदकमलं भ–

८–जते भजमानभवभयारा [ तिं ] । [ ४ ] आनन्दतीर्थभगवत्पादाचार्य सरस्वती [ । ] लोकेऽत्र

९–हरिपादाब्जयुगळप्राप्तये न ( नु ! ) सा [ ५ ] तस्माल्लोकसुरक्षणाति निपुणास्सप्रासक–

१०–तर्ग्यधीद्वे ( द्वे ! ) धा. मुत्र तथा ( था ! ) त्र योवाति जनान् क [ ] लिङ्गभूसं [ भ ] वान् [ । ] पित्र्याचारमुपैति

११–सू [ नु ] रिति सन्नीतिस्थितौ धर्मतः शत्रुक्ष्मापातिवर्गदुर्गनिवहान् भीतानभीत [ : ] स्वयं । [ ६ ] यश्च

१२–श्रीकमठाधिनायकमहाकाये ( यै ) कवद्धवतस्तस्य प्रच्युतिवारणाय शबरानीक–

उत्तराभिमुखम्—

१३–क्षिती ( ति ! ) प्राशर्निं [ । ] धत्ते [ स ] त्करवालमस्य त [ टि ] ता संत्यक्तजीवे रिपौ हंतव्यानवशेषणा–

१४–न्निजावि धिन्नो ( र्नो ! ) यस्य योध्यस्तरां । [ ७ ] तेनानेन श्रीमन्नर-हरितीर्त्ता ( र्था ! ) रव्यमुनिवरेण्येन [ । ] क–

१५–लि समय प्रल्हादप्रवा ( भा ! ) वपरितोष्यनृहरिरूपेण [ ८ ] स्वस्ति श्रीशकवत्सरे हुतवह–

१६–व्योमद्वय[2] ‘क्ष्मायुते मेषे शुक्र शशाङ्क शेखर [ दि ] ने वारे [ च ] सौम्ये वरे [ । ] प्रासादं कमठा [ धि ]–

१७–पस्य पुरतो निर्माय शर्मप्रदो योगानन्दनृसिंह ए [ ष ] भगवान् प्रीत्या प्रतिष्ठापि–

१८–तः [ ९ ]

श्लोक व्याख्या

१ श्लो.:—श्रीलक्ष्म्याः विलासतरङ्गाणां पात्रभूतः देवः श्रीहरिः । ‘देवश्री’ ति विसर्गाभावपाठे श्रियो विलासो यस्य सः । देवश्चासौ श्रीविलासश्च तस्य प्रीतिलहरीपात्रमित्यर्थः ।

सर्वभूतले कलिजन्यक्लेशयुक्तः जनः यस्मिंस्तत् तस्मिन् । तथा सति । सम्यक् नष्टः ज्ञानोदयो यस्मिंस्तत् तस्मिन् । तथा सति । स्वीयपादपद्मैकशरणान् जनान् संरक्षितुम् सुमतीनां श्रेष्ठः पुरुषोत्तमतीर्थाख्यः सन्मुनिर्जातः इत्यर्थः ।

अत्र पुरुषोत्तमतीर्थ इति अच्युतप्रेक्षतीर्थानां नामान्तरं मध्वविजये (६-३३) " हेतुवादिनि विशङ्कटबुद्धौ तीर्थमर्थयति गन्तुमनुज्ञाम्। तां दिदेश पुरुषोत्तम-तीर्थश्चिन्तयन् स पुरुषोत्तमरक्षाम् " इत्युक्तेः एतत्परम्परायाम् आगताः पूर्वगुरवः परतीर्थार्यशिष्याः पौरुषक्षेत्रे " जगन्नाथपुरी " ति प्रसिद्धे पूर्वम् अवसन् इति मणिमञ्जर्याम् अष्टमसर्गे प्रसिद्धम् । अतस्तन्नाम तेषां सयुक्तिकं भवति । तेषामाचार्यगुरुत्वेन ' यद्यद्विभूतिमत्सत्त्वम् ' इति न्यायेन भगवतोविभूतिरूपत्वेन " देवः सन्मुनिर्जात " इत्युक्तिः । न तु हरेः साक्षादवतारः तथात्वे " अभूत् कुशास्त्राभ्यसनं न पातकं क्रमागताद्विप्रतिसारतो यतेः ( मध्व वि. ४-८ ) ' हंसराट् कलिमलं निराकरोदेकदाग्निमिव मानसाद्गुरोः ( मध्व वि. ( ९-३९ )' इत्युक्तिर्न संगच्छेत । देवश्रीति विसर्गरहितपाठे तु भगवत्कृपापात्रभूतः पुरुषोत्तमतीर्थ इत्यर्थः स्वरसो भवति । "

शिलालेखस्य शिल्पिकृतत्वेन वर्णेषु काश्चन न्यूनताः दृश्यन्ते । बहुकालीनत्वेन अस्पष्टता च कचिद्दृश्यते । अतः महातीर्थादिति पञ्चम्यन्तपाठश्चेत् अत्यन्तं समीचीनः ।

सर्वाणि इमानि विशेषणानि श्रीमदानन्दतीर्थभगवत्पादानामेव सुप्रसिद्धानि । द्वितीयश्लोकोक्तं भाष्यकरणमपि तेषामेव प्रसिद्धम् ।

तृतीयपद्ये प्रादुर्भावोक्तिस्तु आधिक्यविधानार्थं पूर्वोक्तस्यानुवाद इत्युपपत्तेः सर्वं समञ्जसम् ।

२ श्लोके—यत्कृतभाष्यं शास्त्रकारश्रेष्ठैः भूष्यं = मान्यम् उन्मदवादि-गजानां प्रत्येकशः सर्वकुम्भानामपि अंकुशसमं भवति । तत्सदृशो तच्छब्दप्रयोगः ।

३ तमे पद्ये—तस्य=अच्युतप्रेक्षस्य. पदारविन्दयुगलाद् ( कराब्जादितिवत् इदं प्रयुक्तमिति भाति ) आनन्दतीर्थो मुनिः प्रादुरासीदिति यथाश्रुतेऽन्वयः भाति तथापि पूर्वोक्तविरोधपरिहाराय पदाब्जजातत्वव्यवहाराभावाच्च पदारविन्दयुगल इति पाठमवलम्ब्य एवं योजनीयम्–

तस्य=द्वितीयश्लोकोक्तभाष्यस्य । षष्ठ्याः जन्यत्वमर्थः । तस्य ज्ञानेऽन्वयः । तथा च भाष्यजन्यज्ञानभागाख्यकलोदयः चन्दः तं कलयति उत्पादयतीति ज्ञानकलाकलोदयकलः । अथवा तस्येत्यत्र षष्ठ्याः प्रयोजकत्वमर्थः । तस्य ज्ञानेऽन्वयः भाष्यार्थोपयोगि ज्ञानं कलाश्च इतरकलाश्च चतुष्षष्टिकला इतिवत् । अन्यत् पूर्ववत् । कलानां षोडशकलानां उदयः = शुक्लपक्षे क्रमेण उत्पत्तिः यस्य स । कलोदयश्चंद्रः । कल कामधेनौ इति धातुव्याख्यानात् कामधेनुवत् सर्वार्थप्रदोऽयं कलधातुः ॥

अज्ञैः भिन्नमार्गे प्रतारितं वञ्चयित्वा नीतं । वैयासिकं=व्याससंबन्धिनं । गोगणं=वाक्यसमुदायं ब्रह्मसूत्रपुराणादिरूपं । सुव्यक्तभेदे सुस्पष्टतया ज्ञातः भेदो यस्मिन् सः तस्मिन् । यथा वर्षाकाले तृणाद्याछन्नतया अमार्गाद्भिन्नतया अव्यक्तोऽपि पन्थाः तृणादिनिरासे सुस्पष्टो भवति तद्वदिति भावः । पथि=मार्गे, अलं=सम्यक् ।

नेतुं=योजयितुं सम्यग्धृतदण्डेन भूषितहस्तः मुनिव्रातैः सेव्यपादयुग्मः यः आनन्दतीर्थो मुनिः प्रादुरासीत् ।

४ श्लोके—यन्मुखान्निःसृता माषा समुदायतः ललिता । तद्गतपदविन्यासोऽपि ललितः सुन्दरः ; सा सेवमानजनानां संसारभयस्य शत्रुवत् स्थितं लक्ष्मीपतेः पादपद्मं भजते प्रतिपादयतीत्यर्थः ।

५ श्लोके—श्रीमदाचार्याणां वाणीरूपग्रन्थः हरिपदप्राप्तिरूपमोक्षफलं स्वसेवमानान् प्रापयति इति भावः ।

६ श्लोके—लोकसंरक्षणेऽअतिकुशलात् तस्मात् श्रीमध्वाचार्यात् सम्यक् प्राप्ता कर्तव्यधीः कर्तव्यज्ञानं येन सः संप्राप्तकर्तव्यधीः । सूनुः पितृसंत्रन्ध्याचारमुपैति=अनुकरोति इति सतां नीतौ स्थितः यः श्रीनरहरितीर्थः । अनेन एतेषां पूर्वाश्रमपिताऽपि तद्राज्ये वंशपरंपरया मन्त्रिपदे स्थित इति अनुमीयते ।

द्वेधा इत्यस्यैव विवरणं " अमुत्र तथाऽत्र " इति । धर्मपरतत्त्वोपदेशादिना अमुत्र = परलोके । अन्नदानादिना अत्र इहलोके । शत्रुक्ष्मापतिवर्गदुर्गनिवहान् = शत्रुनृपाणां समूहाख्यदुर्गराशिः येषां ते तथा तान् । तद्दुर्गास्थितानिति भावः । अत एव भीतान् । निवहाद् भीतानिति पाठश्चेत् स्वरसः । कलिङ्गदेशस्थितान् ( संप्रति व्यवह्रियमाणः ओरिसाप्रान्त एव पूर्वं कलिंगदेश इति उक्त आसीत् इतिध्येयम् ) जनान् । स्वयम् अभीतः सन् अवति = रक्षति ।

७ श्लोके—यश्च कूर्मेश्वरमन्दिरसंरक्षणाख्यमहाकार्ये मुख्यतया बद्धव्रतत्रान् = कर्तव्यमेवेति नियमवान् । तस्य प्रच्युतिवारणाय = विघ्नशान्त्यै । तद्विघ्नकारिणां शबरसमूहाख्यानां पर्वतानां वज्रमिव स्थितम् । क्षितिं धरन्तीति क्षितिध्राः = पर्वताः सत्करवालम् = उत्तमखड्गं । धत्ते = धारयति । अस्य = खड्गस्य । तद्धारकस्य । श्रीनरहरितीर्थस्य च तटिता = विद्युत्सदृशेन तेजोविशेषेणैव । तटित्सौदामिनी विद्युत् इत्यमरः । रिपौ = शत्रौ । संत्यक्तप्राणे सति । हन्तव्यानां अवशेषाभावात् । निजविधिः = शत्रुवधविषये प्रेरणा । यस्य । नोत्रोध्यस्तराम् = नैव बोधनीयः । एतत्प्रभावेणैव शत्रुवधस्य जातत्वाद् विधेरावश्यकतैव नास्तीत्याशयः ।

८ श्लोके—कलिकाले स्थितः प्रल्हादभक्त्यैव संतोषणीयः यः नरसिंहः तद्वत् स्थितेन । जनानां एतद्वशीकरणे भक्तिरेवोपायः न तु बलात्कारादिकमिति भावः । अनेन नरहरिवत् नरहरिः स चासौ तीर्थश्च गुरुश्च "तीर्थं शास्त्राध्वरे गुरौ" इति कोशात् । इति नरहरितीर्थपदप्रवृत्तिनिमित्तं सादृश्यमुक्तं भवति । तादृशेन अनेन नरहरितीर्थमुनिश्रेष्ठेन ।

९ श्लोके—शालिवाहनशके १२०३ तमे वत्सरे । हुतवहश्च अग्निश्च व्योमं=आकाशं च द्वयं च क्ष्मा भूमिश्च = ताभिर्युते । एतैस्तत्तत्संख्या लभ्यते

तत्र अङ्कानां वामतो गतिरिति न्यायेन। मेषराशौ अर्थात् चैत्रमासे। शुक्लशशाङ्कशेखरदिने = शुक्लपक्षीयचन्द्रः सूर्यास्तसमये, जनानां शिरसि तदुपरि ऊर्ध्वे यस्मिन् दिने दृश्यते तद्दिने अष्टमीतिथावित्यर्थः "खपुष्पकृतशेखर, ' चन्द्रशेखर" इत्यादिप्रयोगात् शेखरशब्दः शिरोवाचकः। अथवा शशाङ्कशेखरः चन्द्रशेखरः रुद्रः सः अष्टम्याः देवता "अष्टमीतिथेः महेशः देवता" इति नारदसंहितायां ( वेंकटेश प्रेस, काशी प्रेस, ) तथा ज्योतिषरत्नमालायां तिथिप्रकरणे इति उक्तेः। तथा मुहूर्तचिन्तामणौ आरंभे ३ ये श्लोके 'तिथीशा वह्निकौ गौरी गणेशोऽहिर्गुहो रविः। शिवो दुर्गान्तको विश्वे हरिः कामः। शिवः शशी ' ति शिवस्यैव अष्टमीदेवतात्वोक्तेः शुक्लशशाङ्कशेखरदिने=शुक्लाष्टमीतिथाविति सुलभोऽर्थः।

कमठाधिपस्य=कूर्मेश्वरस्य पुरतः प्रासादं=भवनं मन्दिरं निर्माय एषः योगानन्दनृसिंहः तन्नामा योगेन=ध्यानेन आनन्दो यस्मात् सः तथा स चासौ नृसिंहश्च ना=नरः कण्ठादधस्तात्, सिंहः कण्ठादुपरि ना चासौ सिंहश्च नृसिंहः। भगवान् श्रीहरिः प्रीत्या=स्वसंतोषेण। प्रतिष्ठापितः।

### पञ्चसु प्रथमः शिलालेखः

( १ ) अयं श्रीकूर्मस्यकूर्मेश्वरमन्दिरे वर्तते ऊनचतुर्दशवर्षे द्वादशशतवत्सरे कन्यामासेऽसितपक्षे त्रयोदश्यां कवेर्दिने ॥

स्वस्ति श्रीशकवरुषम्बुलु ११८६...नेंट्टि कन्या कृष्ण १३ शुक्रवारमुन... इत्यस्ति

शके ११८६ कन्याराशिमासे कृष्णपक्षे त्रयोदश्यां शुक्रवासरे। १९ सप्टेंबर १२६४ क्रिस्ताब्दे

इमे पञ्च शिलालेखाः डॉ. किर्लहान अनेन संपादिताः "एपिग्राफिका इंडिका" ( ६ ) षष्ठभागे पृष्ठ २६६—२७० पर्यन्तेषु मुद्रिताः।

### द्वितीयः शिलालेखः तेलगुलिपौ

स्वस्ति शाकाब्दे रामधात्रीनयनशशीमिते पौष्यमासि प्रसिद्धे शापाद् अर्कवार...

श्रवणपरिणते शश्वद् अर्धोदयाख्ये। भूयः स्वर्भाम (नुः) भानुग्रहणजसमये।

तास्ति ( यौ ) सोमवारे पुण्ये कालद्वयेऽपि

स्वस्ति श्रीशक वरुषम्बुलु १२१३ गुनेंट्टि पौष्य मासमुन श्रवणव्यतीपाताकवारसहितमैन अर्धोदयमनु पेरंगल ( अ ) मावास्य नांडुनु ई दिवसमुन सूर्य्यग्रहणसहितमैन सोमवारमु नांडुनु...

**अस्य विवरणं**

शके १२१३ पौषे अमावास्यायां अर्धोदये व्यतीपाते रविवासरे श्रवणनक्षत्रे सूर्यग्रहणे । सोमवारे च इति दिनद्वयस्य उल्लेखोऽस्ति। अयं शिलालेखः वाल्टेरसमीपे सिंहाचलं-नगरे लक्ष्मीनृसिंहस्वामिमन्दिरे वर्तते ।

क्रिस्ताब्दाः रविवासर २० जानेवारी १२९२
सोमवासर २१ ............

## तृतीयः शिलालेखः तेलगुलिपौ

शाका (ब्दे) वेदचन्द्रद्युमणिसुगणिते श्रावणे मासि शुक्ले विष्णोरह्नयर्किवारे ।

स्वस्ति श्रीशकवरुषम्बुलु १२१४ गुनेंटि श्रावणशुक्ल एकादशियु शनैश्चरवारमु नांडु

**व्याख्या**

शके १२१४ श्रावणमासे शुक्लपक्षे एकादश्यां शनिवासरे । २६ जुलै १२९२ ।

अयं द्वितीयशिलालेखस्थाने एव वर्तते ।

## चतुर्थः शिलालेखः कूर्मेश्वरमन्दिरेऽस्ति
तेलगुलिपौ

स्वस्ति श्रीशकवरुषम्बुलु १२१५ गुनेंडु वीरश्रीनरसिंहदेवरु विजयराज्य सं (व) त्सरं बुल लु १८ गु श्राहि ऋषभशुक्लपौर्णमियु गुरुवारमुन ।

अस्य अर्थः—शके १२१५ तमे वीरनरसिंहदेवस्य राज्यार्थे उपयोगिनि तस्य १८ तमे वयसि वर्षे गुरुवासरे पौर्णमास्यां ऋ (वृ?) षभमासे । २१ मे १२९३ क्रिस्ताब्दे ।।

वीरनरसिंहद्वितीयस्य राज्याधिकारार्थे अष्टादशवर्षपूर्तिर्जाता इत्येतान्निमित्तं सुवर्णदानं ददुः ।

## पञ्चम शिलालेखः कूर्मेश्वरमन्दिरे
लिपि : तेलगु

स्वस्ति श्रीशकवत्सरे शरधरातिग्मांशुशंख्यान्विते

...स्वस्ति श्रीशकवरुषम्बुलु १२१५ गुनेंट्टि मा(घ) शुक्ल पंचामियु रविवार-मुनयंद्दु ।

अर्थः—शके १२१५ तमे माघशुक्लपञ्चम्यां रविवासरे । ३ जानेवारी १२९४ क्रिस्ताब्दे

# श्रीमदानन्दतीर्थादीनां कालनिर्णयः

| | क्रिस्त संवत्सर |
|---|---|
| श्रीमदानन्दतीर्थानां प्रादुर्भावः | १२३८ |
| श्रीमदानन्दतीर्थानां बदरिकाश्रमप्रवेशः | १३१७ |
| श्रीपद्मनाभतीर्थानां वेदान्तसाम्राज्याभिषेकः | १३१७ |
| ,, वृंदावनप्रवेशः | १३२४ |
| नरहरितीर्थानां साम्राज्याभिषेकः | १३२४ |
| ,, वृंदावनप्रवेशः | १३३३ |
| श्रीमाधवतीर्थानां वे. सा. अभिषेकः | १३३३ |
| ,, वृंदावनप्रवेशः | १३५० |
| श्रीमदक्षोभ्यतीर्थानां वे. सा. अभिषेकः | १३५० |
| ,, वृंदावनप्रवेशः | १३६७ |
| श्रीमजयतीर्थानां वे. सा. अभिषेकः | १३६७ |
| ,, ,, वृ. प्रवेशः | १३८८ |
| सुमध्वविजये निर्दिष्टस्य महाराष्ट्रीय देवगिरिराजस्य | |
| ईश्वरदेवस्य शासनकालः | १२६०–१२७१ |
| बुक्कराजसम्बन्धिनः शिलालेखाः | १३५३–१३७१ |
| श्रीविद्यारण्यजन्म | १३०२ |
| विजयनगरराज्यस्थापनम् | १३३६ |
| श्रीविद्यारण्यसमाधिः | १३८७ |

श्रीमदक्षोभ्यतीर्थानां श्रीजयतीर्थानां च विद्यारण्यैः समागमो युज्यते तथा सत्येव

# पुस्तकान्तरविमर्शः

महाभारततात्पर्य श्रीकृष्णपद्य ( कन्दुकस्तुतिः ) योः कर्नाटकभाषान्तरपुस्तके रजतपीठपुरमुद्रिते श्रीबन्नंजे गोविन्दाचार्येण लिख्यते यत्–अनयोः ग्रन्थयोः वृत्तं नवीनमेव न प्राचीनग्रन्थानुसारि इति । तदतीव साहसम् । सूक्ष्मदृष्ट्या नैव परामर्शः कृतस्तैः । यमकभारतस्य छन्दः अन्ते दत्तम् । कन्दुकस्तुतेस्तु वृत्तस्य संज्ञा "आर्योपगीतिः" इति उपगीतेर्लक्षणमुक्तं श्रुतबोधे "आर्योत्तरार्धतुल्यं प्रथमार्धमपि प्रयुक्तं चेत् । कामिनि तामुपगीतिं प्रकाशयन्ते महाकवयः" इति । अत्र पादक्रमात् मात्राः १२, १५, १२, १५ । अस्या उपगीतेः आर्यासांकर्ये पादचतुष्टयेऽपि १५ मात्राः समाना भवन्ति ।

यथा—अंबरगंगाचुम्बितपादः पदतलविदलितगुरुतरशकटः । कालियनाग-क्ष्वेलनिहन्ता सरसिजनवदलविकसितनयनः ॥ १ ॥ कालघनालीकर्बुरकायः शरशत-शकलितसुरारिपुनिवहः । संततमस्मान् पातु मुरारिः सततगसमजवखगपतिनिलयः ( निरतः ) इति श्रीमदानन्दतीर्थैः अनुपनीतकालकृता कन्दुकस्तुतिः समाप्ता इति ।

अत्र " पादान्ते लघुतापि क्वचिद् गुरोः " इति नियमानुसारेण सर्वपादान्ते लघुत्वमेव न गुरुत्वम् । अतः पञ्चदशैव मात्राः भवन्ति न षोडशमात्राः इति ज्ञेयामिति सर्वमनवद्यम् । इदं पूर्वमेव क्परी राजाचार्यपुत्रेण व्यासेन रचितायां कन्दुकस्तुतिव्याख्यायां सूचितम् । तथा हि सततगः समजवखगपतिनिलय " इत्यत्र तद्व्याख्या ( तावन्मात्रैव उपलब्धा ) तत्र हनुमतः लङ्कां प्रति गमने जवो यस्मात्सः रामः । सततगसमस्य=भीमस्य शत्रुहनने जवः यस्मात्सः कृष्णः । सततगसमो मध्वः तस्य प्रतिवादिनिराकरणे जवः यस्मात्सः व्यासः । सततगसमश्चासौ खगपतिनिलयश्चेति विग्रह इति ।

## टीकाटिप्पणीनाम् आदर्शपुस्तकानि

पूर्वं श्लोकरूपटीकापुस्तकमात्रमुपलब्धम् । तेन मूलार्थलाभादेः उद्देश्यस्य अपूर्णतया चिन्तायां दैवात् श्रीनरहरितीर्थानामिच्छाविशेषेणैव प्रथमटिप्पणीपुस्तक-मुपलब्धम् । परं तत्र प्रतिपत्रं वामपार्श्वस्य प्रतिपंक्तिद्वित्रवर्णानां लुप्ततया मूल-टीकयोः पूर्वोत्तरभागयोश्च भूयो भूयो विमर्शेन लुप्तवर्णानां संयोजनमकारि ग्रन्थ-समाप्तिपर्यन्तम् । ततः मैसूरस्थं स्फुटाक्षरं द्वितीयपुस्तकं लब्धम् । पुनस्तदनुसारेण शोधनमकारि । एवमितरटिप्पणीपुस्तकानां च युगपदलाभेन त्रिचतुःकृत्वः आमूलाग्रं ग्रन्थे शोधनमकारि । एवं नारायणाचार्यटिप्पण्याः एककोशे प्रथमपत्रस्य लुप्ततया अनन्तरं पुस्तकान्तरे सत्यप्रमोदपुस्तकभाण्डागारीये तस्य लाभेन अन्ते तस्य संयोजनमकारि । व्युत्पित्सूनामुपकाराय अपूर्वार्थकशब्दसूची संयोजिता । एवमपि प्रमादात् सीसकाक्षरसंयोजकदोषाद्वा यदि स्खालित्यमुपलभ्येत तर्हि क्षन्तव्यं सुधीभिः । अनया सेवया सर्वतत्त्वदेवताप्रेरकः सर्वगुर्वन्तर्यामी श्रीप्राणनाथः श्रीहरिः ज्ञानभक्ति-वैराग्यादिसंपदं दद्यात् इत्यभ्यर्थ्य विरमामि । इति श्री १०८ श्रीसत्यप्रमोदतीर्थाना उत्तरादि मठाधीशानां पूर्वाश्रमानुजः सुधीजनविधेयः

हयग्रीवाचार्यः रङ्गाचार्यसुतः गुत्तलोपाभिधः ।

---

## आदंर्श पुस्तकदानेन, कृतोपकाराणां महनीयानां नामानि

१ ) श्री १०८ श्री सत्यप्रमोद तीर्थानां संनिधितः   तिम्मण्ण भट्टीयम् शुद्धम्

२ ) बेंगळूर सत्यप्रमोद पुस्तक भाण्डागारतः   नारायणाचार्य टिप्पणी शुद्धा

३ ) पंढरपूर सत्यध्यान विद्यापीठतश्च   ,,   ,,   ,,

४ ) दिवंगत पुराणभास्कर शेषगिरिराव बेंगळूरतः भगवत्कृत टिप्पणी शुद्धा, तिम्मण्ण भट्टीया च त्रुटिता

५ ) पं. T. A. गुण्डाचार्य मैसूरतः   श्रीनहरितीर्थ टीका तट्टिप्पणी च प्रायः शुद्धा

६ ) पं. रामाचार्य अवधानी पुणेतः   ,, प्रायः अशुद्धा त्रुटिता च

७ ) पं. हयग्रीवाचार्य गुत्तल   ,,   शुद्धा

८ ) पुणे डेक्कन कालेज ग्रन्थालयतः   शिलालेखादि

९ ) K. G. कलकोटि धारवाडतः   गुरुकथाकल्पतरुश्लोकसंग्रहः

A. S. Bheemasena Char
E. N. Temple, Gold Smith Street,
BELLARY

श्रीमद्धनुमद्भीममध्वान्तर्गत–रामकृष्णवेदव्यासात्मक
लक्ष्मीहयग्रीवाय नमः ॥

श्रीगुरुभ्यो नमः ॥
हरिः ॐ ॥

## टीका

श्रीशं गुरूणां गुरुमाद्ययोनिं वेदैकवेद्यं निखिलेश्वरेश्वरम् ॥
नमामि विष्णुं जगदेकवन्द्यं केशादिभिः प्राप्यतमं सुनित्यम् ॥ १ ॥

**लघुटिप्पणी**—श्रीश्रीनिवास कनकात्मक दिव्यमूर्ते लक्ष्मीधरार्चित सुमत्स्य सुकूर्मरूप ॥ श्रीकोलसिंह वटुभार्गव रामकृष्ण श्रीप्राणनाथ दयया कुरु मां स्वदासम् ॥ १ ॥ नारायणं सुरगुरुं वन्देऽहं (रघु) यदुनन्दनम् । चरीकर्ति भरीभर्ति संजरीहर्ति योऽखिलम् ॥ २ ॥ वेदव्यासं संप्रणम्य पूर्णबोधगुरूत्तमान् । नरहर्याख्यतीर्थार्यान जयार्यादिगुरूनपि ॥ ३ ॥ श्रीमद्रघूत्तमगुरूंस्ताच्छिष्यांस्ति(स्त)म्मणादिकान् । यादवार्यांस्तथा सत्यध्यानतीर्थादिकान् गुरून् ॥ ४ ॥ सत्यप्रज्ञार्यतीर्थांश्च सत्याभिज्ञाख्यसद्गुरून् । सत्यप्रमोदसुगुरून् जगद्गुरुपदेस्थितान् ॥ ५ ॥ रंगनाथार्यसुगुरून् सर्वानन्यान्गुरूनपि । पञ्चव्याख्याश्च संगृह्य संशोध्यापि प्रयत्नतः ॥ ६ ॥ टीकायाः श्लोकरूपाया व्याख्या या सुमनोहरा । तस्यां च त्यक्तभागांस्तु व्याकरिष्ये यथामति ॥७॥ काऽहं मन्दमतिः सेयं टीका क्वात्यन्तदुर्गमा । तथापि गुरुकारुण्यपोषणं शरणं मम ॥ ८ ॥

श्रीनरहरितीर्थश्रीमच्चरणाः भारततात्पर्यापरनाम्नो यमकभारतस्य श्रीमन्महाभारततात्पर्यानुक्रमणिकां श्रीकृष्णप्रकाशिकानाम्नीं टीकां कर्तुकामाः स्वव्याख्येयमूलभूतमहाभारताद्यपद्योक्तगुणविशिष्टतया भगवन्तं प्रणमन्ति ॥ श्रीशमिति ॥

नारायणं सुरगुरुं जगदेकनाथं भक्तप्रियं सकललोकनमस्कृतं च ।
त्रैगुण्यवर्जितमजं विभुमाद्यमीशं वन्दे भवघ्नममरासुरसिद्धवन्द्यम् ॥

इति खलु भारतस्याद्यपद्यम् । तत्र नारायणशब्दार्थः श्रीशामित्यनेनात्र विविच्यते न विद्यन्ते अराः दुःखादयो दोषा यस्याः सा नित्यमुक्ता महालक्ष्मीः वाङ्मनसदेवता तस्या अयनं पतित्वेनेति । नारायणपदस्यैव रूढ्या अर्थः विष्णुमिति । आदौ श्रीपदप्रयोगेण, अन्ते च कृष्णलीलामृतं शुभमिति मंगलवाचकशुभशब्दप्रयोगेण च ग्रन्थोऽयं मंगलप्रद इति सूच्यते । सुरगुरुमित्येतत् गुरूणां गुरुमित्यनेन व्याक्रियते जगद्गुरूणां ब्रह्मादिसुराणामपि गुरुं ज्ञानप्रदमिति । आद्यमित्यस्य व्याख्या भगवत्पादानां प्रथमकृत् इति । तत्संगृह्यते आद्ययोनिमिति । सर्वजगतः आदिकारणमित्यर्थः । दृश्यते हि योनिशब्दस्य कारणवाचित्वं शास्त्रयोनित्वादित्यादौ । यद्वा 'योनिष्ट इन्द्रनिषदेऽकारीत्यादाविव स्थानवाचकत्वमपि संभवति । प्रलये जगतो मूलस्थानमित्यर्थः ।' अथवा आद्ययोनिपदेन मूलकारणं मूलरामं निर्दिशति । सर्वज्ञानुज्ञया जगन्नाथपुरीतः खाऽऽनीते ब्रह्मकरार्चिते मूलरामविग्रहे 'नित्याभिव्यक्तस्य भगवतः स्वोपास्यस्य तस्यापि वन्दनीयत्वात् तथा । आद्यस्य मूलरामस्य योनिः=भार्या सीता यस्य सः तं मूलसीतासमेतमित्यर्थः । 'मम योनिर्महद्ब्रह्मे'ति ( १४-३ ) गीताभाष्ये 'विष्णोर्योनिर्गर्भसंधारणायो'ति श्रुत्युक्तेः दृश्यते हि योनिपदस्य भार्यावाचकत्वम् । जगदेकनाथमित्युक्ते अवान्तरेश्वरा अन्ये सन्तीति ज्ञायते तदाह निखिलेश्वरेश्वरमिति । सकललोकनमस्कृतं चेत्येतत् जगदेकवन्द्यमित्यनेन विवृतम् । तेनैवामरासुरसिद्धवन्द्यमित्यपि संगृहीतम् । भवघ्नमित्यस्यार्थः मोक्षकहेतुरिति तद्विवृतं केशादिभिः प्राप्यतममिति । तेनैव भक्तप्रियमित्यपि संगृहीतम् । केशादिभिः ब्रह्मरुद्रादिभिः । सुनित्यं चतुर्विधनाशरहितमित्युक्त्या त्रैगुण्यवर्जितं अजं विभुमिति पदानि विवृतानि । उक्तार्थे वेद एव मुख्यप्रमाणमिति द्योतनाय वेदैकवेद्यमित्युक्तम् ॥ १ ॥

भारतप्रतिपाद्यस्य श्रीकृष्णस्य संनिधिं प्रार्थयते—यो भारत इति ॥

## टीका

यो भारतेऽमितसुखानुभवामृतात्मा नारायणोऽखिलजगज्जननादिहेतुः ।
क्षीराम्बुधेः मुकुन्देऽखिलदुष्टहन्तेहागत्य सात्वतपतिः स हि नोऽस्तु चित्ते ॥२॥

**लघुटिप्पणी**—अत्र यो नारायणः क्षीराम्बुधेः सकाशादिह भारत आगत्य अखिलदुष्टहन्ता सः सात्वतपतिः श्रीकृष्णः नः चित्तेऽस्तु इत्यन्वयः। 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेदि'त्युक्तेः। अपरिमितसुखानुभववान् अमृतः त्रिपादस्यामृतं दिवीत्युक्तेः सर्वदा मृतिरहितः आत्मा स्वामी आमितसुखानुभवश्चासौ अमृतश्चासावात्मा चेति कर्मधारयः। भगवतो लक्षणकथनायोक्तं अखिलजगज्जननादिहेतुरिति ॥ २ ॥

## टीका

यो भारतीमनितरामधिकामिमां गां श्रीबादरायण उतान्यसमस्तगोभ्यः।
देवासुरेष्टगतिदां स्वपदक्रमेण प्रीतः स मे गवि सदाऽस्त्वमितात्मबोधः ॥३॥

**लघुटिप्पणी—यः श्रीबादरायणः अन्यसमस्तगोभ्यः** =सर्वप्रमेयग्रन्थेभ्यः। प्रमाणग्रन्थेषु तु "प्रामाण्यं त्रिविधं महत्" इति ब्रह्मसूत्राणामेवाधिक्यस्योक्तत्वात्। अतितरामधिकाम् केवलेश्वरदृष्टार्थयुक्तत्वेन शतार्थकविष्णुसहस्रनामघटितत्वेन च वेदादप्युत्तमाम्। इमां प्रसिद्धां, भारतीं महाभारतसंबन्धिनीम्। भारतस्य इयमित्यर्थे 'शेषे' (४।२।९२) इति सूत्रेण अण् प्रत्यये 'टिड्ढाणञ् ....' इत्यादिना ङीपि भारतीमिति साधु। गां = वाचम् महाभारतग्रन्थमित्यर्थः। अथवा अपौरुषेयत्वेनाधिकां भारतीं=वेदवाचम्। उत=किं च इमां गां महाभारतग्रन्थं च। **स्वपदक्रमेण** स्वपदस्य स्वतन्त्रविष्णुस्वरूपस्य क्रमः क्रमणं पादविक्षेपः क्रमुपादविक्षेप इति धातोः, ग्रन्थे पादविक्षेपो नाम प्रतिपादनमेव तेन। अथवा स्वपदक्रमेण=पदस्वारस्यानुरोधेन ब्रह्मसूत्राणि निर्माय उपक्रमादिभिस्ताद्विचारेणेत्यर्थः। यद्वा स्वस्य पदं पादः येषु ते स्वपादाश्रितपाण्डवाः तत्प्रतिपादनेन। स्वस्य पदं चिन्हं धर्मभक्त्यादिदर्शकं तत्प्रतिपादनेन। स्ववाचकपदानि नारायणादिनामानि तदर्थप्रतिपादनेन। भारतार्थस्त्रिधाप्रोक्त इत्यादिवचनात्। **देवासुरेष्टगतिदां** अत्र असुरपदेन असुषु इन्द्रियेषु रमन्ते इति व्युत्पत्त्या इन्द्रियाभिमानिनो देवा ग्राह्याः। कुरुपाण्डववत्पृथगुक्तिः निखिलासुरसिद्धवन्द्यामितिवत्। अथवा असुराः इन्द्रियार्थेषु रताः अप्रचुरवैराग्योपेता अधमाधिकारिणो मनुष्योत्तमाः। दैत्यग्रहणे इष्टगतिदत्वानुपपत्तेः। तेभ्यः इष्टा=अपेक्षिता या गतिः मुक्तिः तां ददातीति तान्। चक्रे इति उत्तरश्लोकस्थमाकृष्यते। सः अमितात्मबोधः अमितः देशतः कालतो गुणतश्च परिमितिरहितः आत्मबोधः=स्वरूपज्ञानं

यस्य सः । अमितात्मनो बोधः, अमितः आत्मा सर्वस्वामी इति बोधः यस्मादिति वा । स्वपदक्रमेणेत्यस्य प्रीत इत्यत्राप्यन्वयः पदं व्यवसितं प्रयत्नः स्वकृतव्याख्यानादिक्रमेण प्रीतः सन् । 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु' इत्यमरः । मे=मम । गवि=वाचि । सदा संनिहितोऽस्तु ॥ ३ ॥

आश्रमगुरून् यमकभारतकर्तॄन् भगवत्पादान् प्रार्थयते—

## टीका

यो भारतीमपहृतामसुरैः सहान्यगोभिः शुभां (सुगां) भगवतीमसुरान्निहत्य ।
उत्साद्य चाथ (त्र) कुपथामथ वैष्णवीं तां चक्रे करोतु सदशप्रमतिर्हि
गां नः ॥ ४ ॥

**लघुटिप्पणी**—यः असुरैः=दैत्यैः । अन्यगोभिः=इतरवाग्भिः सह अपहृताम्—अपार्थतया कृतां । शुभां=उत्तमाम् । सुगामिति पाठे उत्तमवाचमित्यर्थः । भगवतीं=पूज्यां अथवा भगशब्दस्यैव ब्रह्मपरतया " तं त्वां भग प्रविशानि स्वाहा " इति तैत्तिरीयोपनिषादि व्याख्यानात् वस्तुतः विष्णुप्रतिपादिकामित्यर्थः । भारतीं=वेदवाचं महाभारतं च असुरान्निहत्य=खण्डयित्वा । अत्र=अस्मिन्विषये कुपथां=कुत्सितपद्धतिं । ' ऋक्पूरब्धूःपथमामानक्षे ' इति समासान्तप्रत्ययः टाप् च । अथ उत्साद्य च निरस्य च । अथ तां वाचं । वैष्णवीं=विष्णुपरां । चक्रे । सः दशप्रमतिः पूर्णप्रज्ञाचार्यः । दशेति सर्वमुद्दिष्टमित्युक्तेः । नः=अस्माकं । गाम्=वाचम् । वैष्णवीमित्यस्यावृत्तिः । करोतु ॥४॥

पूर्वं संस्थानप्रतिमापूजकत्वेन गुरून् पद्मनाभतीर्थान् नमति—

## टीका

ये भारतेन सततं हि परिव्रजन्ति भाषासु रीतिशतके चतुरा अनन्तम् ।
तत्पादपङ्कजन (नि) (भ) वायुकृतोरुमार्गास्तान्पद्मनाभवरतीर्थगुरून्नमामि ५

**लघुटिप्पणी**—भाषासु=समाधिभाषादर्शनभाषागुह्यभाषासु । रीतिशतके=वैदर्भीगौडीत्यादिशतके । चतुराः=प्रवीणाः, ये भगवत्पादाः । भारतेन हेतौ तृतीया भारतग्रन्थमादायेति यावत् । अनन्तं=परमात्मानं । सततं=सर्वदा । परिव्रजन्ति=परितः समन्तात् उपक्रमोपसंहारादिविमर्शपूर्वकं व्रजन्ति=गवेषयन्ति विचारयन्तीत्यर्थः । तत्पादपङ्कजनवायुकृतोरुमार्गाः तेषां=आचार्याणां

पादपङ्कजनं=पादपद्मम् जन्धातोः कर्तरि अप्रत्ययः लोकवाचके जनशब्दे यथा । जनीति पाठे "जनिरुत्पत्तिरुद्भव" इत्यमरोक्तेः पङ्काज्जनिः उत्पत्तिर्यस्य तत् पद्मं इति स्वरसतः प्राप्तिः । पङ्कजभेति पाठे तु पङ्कजे= पद्मे, भाति=प्रकाशते इति पङ्कजभः स चासौ वायुश्चेत्यर्थः । पाठान्तरे तु पद्मसम्बन्धी वायुरिति षष्ठीतत्पुरुषेण अर्थास्सिध्यति । तादृशवायुना कृतः उरुमार्गः=उत्तमसंप्रदायः येषां ते तथा तान् । पद्मनाभवरतीर्थगुरून्, पद्मनाभः=पद्मं जगदाधारपद्मं नाभौ यस्य सः विष्णुः, वरः=सर्वोत्तमः इति तीर्थे शास्त्रे संन्यायरत्नावलीस्तत्त्वकर्दीपावल्यादिरूपं येभ्यः ते तथा इति पद्मनाभतीर्थपदनिर्वचनं । तान् गुरून् पद्मनाभतीर्थाख्यगुरून् नमामि ॥५॥

## ॥ यमकभारतम् ॥

**ध्याये (त्तं) त्प परमानन्दं यन्माता पतिमयदपरमानन्दम् ।**
**उज्झितपरमानं दम्पत्याद्याद्याश्रमैस्सदैव परमानन्दम् ॥१॥**

**( पदच्छेदः ) ध्यायेत् । तं । परमानन्दं । यन्माता ।**
**( यत् । माता । ) पतिं । अयत् । अपरमा । (अपरं) आनन्दं ।**
**उज्झितपरमानं । दंपत्याद्याश्रमैस्सदैव परमानन्दं ॥ १ ॥**

### टीका

ध्यायेत्तं परमानन्दं संसारान्मुक्तये सुधीः ।
यत्प्रमाता विधिः प्राप वृतो देवादिभिः पतिम् ॥ १ ॥
न विद्यते परो यस्माद्यः स आनन्द इत्यपि ।

**टिप्पणी**—श्रीवेंकटेशाय नमः । श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः । अविघ्नमस्तु । श्रीकान्तं परमेष्टदैवतमहं संनम्य कृष्णाभिधं व्यासं सत्प्रतिबिम्बपूर्णसुमतिं श्रीपद्मनाभादिकान् । सद्विद्यागुरुमात्मनश्च कृपया तेषां यथावोधतः कुर्वे संगमनं सुभारतपदैर्थोकापदानां शुभ (भा) म् ॥ १ ॥ तद्-व्याख्याश्लोकाः ' ध्यायेत्तं परमानन्दं संसारान्मुक्तये सुधीः । यत्प्रमाता विधिः प्राप वृतो देवादिभिः पतिम् ॥ इत्यादयः ग्रन्थविस्तराभेया न लिख्यन्ते । व्याख्या तु । ध्यायेत्तमिति । यन्मातेति यच्छब्दश्रवणात्तमित्यध्याहृतम् । सुधीरिति कर्तृवाचिपदं चाध्याहृतम् । प्रयोजनोक्तिं विना प्रवृत्त्यनुपपत्तेः साप्यध्याहृता संसारान्मुक्तय इति । तथा चैवं योजना । **सुधीः संसारा-**

**न्मुक्तये तं परमानन्दं ध्यायेदिति** । अनेन ध्यायेत्परमानन्दामिति व्याख्यातम् । यत्प्रमातेत्यनेन **यन्मातेति** व्याख्यातम् । तत्र विशेष्याङ्क्षायां विधिरित्यध्याहृतम् । तस्यैव मुख्यज्ञानित्वात् । मातृत्वं च प्रमातृत्वं विवक्षितम् । न ज्ञातृत्वमात्रम् । तस्य मोक्षाजनकत्वादित्यभिप्रेत्य प्रशब्दप्रयोगः कृतः । प्रापेत्यनेन अयादिति[1] व्याख्यातम् । या[2] प्रापण इति धातुव्याख्यानात् । वृतो देवादिभिरिति चाध्याहृतम् । चतुर्मुखमोक्षकाल एव देवादिपञ्चविधमुक्तियोग्यानां मोक्षश्रवणात् । तथा च श्रुतिः वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ' इति । तथा च ब्रह्मसूत्रभाष्ये । ' ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते परात्मानः प्रविशन्ति परं पदामिति । श्रीमद्भागवते च । ' क्ष्माम्भोनलानिल-वियन्मन इन्द्रियार्थभूतादिभिः परिवृतः प्रतिसंजिघृक्षुः । अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परं स्वमनुभूय परः स्वयंभूः ' । ' एवं परेत्य भगवन्त-मनुप्रपन्ना ये योगिनो जितमरुन्मनसो विरागाः । तेनैव साकममृतं पुरुषं पुराणं ब्रह्मप्रधानमुपयान्त्यगताभिमाना ' इति । तथा भागवततात्पर्ये च । ' ब्रह्मा दैवैः परिवृतः प्रलये परमेश्वरम् । प्रविश्य सर्गे तु पुनः श्वेतद्वीपे प्रमोदते ' इति । अन्यान्यपि ' ततो विशेषं प्रतिपद्य निर्भय........' इत्यादीनि श्रीमद्-भागवतवाक्यानि बहूनि सन्ति । विस्तरभयान्न लिख्यन्ते । पातिमित्यनेन पतिमिति व्याख्यातम् । निगदव्याख्यानमेतत् । यत्प्रमातेत्यनेन यं प्रमातेति द्वितीयान्तस्य तृन्नन्तेन वा यस्य प्रमातेति षष्ठ्यन्तस्य तृजन्तेन विग्रहः । एवमेव यन्मातेत्यत्र विग्रहः कर्तव्यः । **अपरमिति** पदं व्याकरोति । न विद्यत इति । यः स आनन्द इत्यनेन आनन्दामिति पदं व्याख्यातम् । **उज्झित-परमानन्दामिति** पदं व्याख्यातम्—उज्झिता अरयो यैस्त्वित्यादिना ।

## टीका

उज्झिता अरयो यैस्तु तेषां मानं तनो ( करो ) त्ययम् ॥ २ ॥

**टिप्पणी**—तनोतिर्दानार्थः । धातूनामनेकार्थत्वात् । अत्रैकपद्यं जनमे-जयादिशब्दवत् खश्प्रत्यये मुगागमो वा उदरंभरः, समितिंजय इत्यादिवत् द्वितीयाया अलुग्वा द्रष्टव्यः । ददातीति दः तं **दमिति** भिन्नं वा पदं कर्तव्यम् ।

---

[1] अय गतौ. ति. । [2] अयादित्यस्य ह्रस्वे अयदित्याभिप्रेत्योक्तम् ।

तत्रोपपदाभावेऽपि कविधानं वैदिकत्वाद्रष्टव्यम् । अथवा उज्झितपराणां मानो यस्मादिति वृत्तिलब्धमाभिप्रेत्य तनोत्ययमित्युक्तम् । दामित्येतदक्षरं उत्तरपदस्याद्यक्षरम् । अत एव दंपत्याश्रमत इत्याद्युत्तरपदव्याख्यानम् । अथवा पूर्वपादपूरकमन्त्यमक्षरं दामित्येतदुत्तरस्यादिरपि भवितुमर्हतीत्यभिप्रेत्य दंपत्याश्रमत इत्यादिव्याख्यानम् । ' उत्तमायाश्चतुर्थमक्षरमन्त्यं पूर्वस्याद्यमुत्तरस्य अनुष्टुभमतिच्छन्दस्त्ववद्‌ध्यादि 'तिवत् ॥ २ ॥

दंपत्याद्याद्याश्रमैरित्येतद्याख्याति । **दंपत्याश्रमत** इति ।

## टीका

दंपत्याश्रमतोऽप्याद्यो ब्रह्मचर्याश्रमः स्मृतः ।
तावेवाद्यौ तु येषां हि ते दंपत्याद्याद्याश्रमाः ॥ ३ ॥
चतुर्भिराश्रमैः पूर्णैर्युक्ता ये हि सुराः सदा ।

**टिप्पणी**—दंपतीशब्देन दंपत्याश्रमो लक्ष्यते । आदिशब्देन तदादिभूतो ब्रह्मचर्याश्रमो लक्ष्यते । तथा च तावेवाद्यौ येषां ते इति तद्गुणसंविज्ञानत्वं अभिप्रैति । चतुर्भिरिति । युक्तपदाध्याहारेण तृतीयान्तस्य तस्य सदेवेत्यनेनान्वयमाह । पूर्णैर्युक्ताहीति । तत्र पूर्णैरित्येतत् ' देवा एव ब्रह्मचारिणो देवा एव गृहस्था ' इत्यवधारणबललब्धम् । न हि श्रुतिस्थमवधारणं देवेतरेषां ब्रह्मचर्याद्याश्रमनिषेधपरं प्रमाणबाधितत्वात् । अथवा सदेवेत्यत्र पदद्वयं विच्छिद्य एवेत्यवधारणार्थवर्णनं वा । सदेति पदं निगदेन व्याख्याति । सदेति । युक्ता इत्यस्य सदेव परमा इत्यस्यापि विशेषणवाचित्वाद्विशेष्याकांक्षायां देहलीप्रदीपन्यायेन मध्ये विशेष्यवाचि सुरपदमध्याहृतम् । सदेवेत्येतदेकपदेनापि व्याख्याति । सहदेवेत्यादिना ॥ ३ ॥

## टीका

सह देवेन हरिणा वर्तन्ते परमास्ततः ॥ ४ ॥
तेभ्य आनन्ददो विष्णुस्तस्मादेवमुदीर्यते ।

**टिप्पणी**—परमास्तत इत्यनेन सदेवत्वात्परमा इति हेतुहेतुमद्भावमाह । तेभ्य आनन्दद इति फलितार्थकथनम् । विग्रहस्तु सदेवपरमाणामानन्दो यस्मादिति द्रष्टव्यः । तस्मादेवमिति समग्रं पदं परामृशति । इदमेकं व्याख्यानम् । व्याख्यानान्तरमाह । यद्वेत्यादिना ।

## टीका

यद्वा यस्माज्जगन्माता पतिं प्राप हरिं सदा ॥ ५ ॥
आनन्दरूपमानन्दं स्वगुणं वा यतो हरेः ।

**टिप्पणी**—अस्मिन्व्याख्याने यन्मातेत्यत्र यत् माता इति पदद्वयम् । तत्र यदिति हेत्वर्थ इत्याह । यस्मादिति । मातृशब्दस्य जननीवाचित्वमङ्गीकृत्य तस्य जन्यसापेक्षत्वात्संबंधिशब्दत्वाच्च योग्यतया जगच्छब्दाध्याहारेण लक्ष्मीवाचित्वमाह । जगन्मातेति । तस्या एव सर्वदा परब्रह्मप्राप्तिसंभवान्मुख्ये संभवत्यमुख्यग्रहणायोगात् सैव ग्राह्येत्यभिप्रायः । पूर्वव्याख्याने पतिशब्दः स्वामिवाची । अत्र तु भर्तृवाची । स्वामित्वस्य लक्ष्म्यादिसाधारण्याद्भर्तृत्वस्य लक्ष्म्यैकप्रतियोगित्वात् । प्रापेत्युक्ते ब्रह्मादिसाम्यप्राप्तौ तन्निरासाय सदेत्याह । प्राप्नोतेः सकर्मकत्वात् कर्माकांक्षायां कर्माह । पतिमिति । तस्य विशेष्याकांक्षायामाह । हरिमिति । तस्य कर्मकारकशरीरप्रविष्टं कर्तुरीप्सिततमत्वं वक्तुं **आनन्दमिति** पदम् । तद्व्याचष्टे । आनन्दरूपमिति । प्रकारान्तरेण व्याख्याति । आनन्दं स्वगुणमिति । तत्रानन्दमित्येवोक्ते परमात्मानन्दस्यापि प्राप्तिप्रसक्तौ तन्निरासायाह । स्वगुणमिति । न तु परमात्मानन्दम् । तस्यायोग्यत्वात् । ननु लक्ष्म्यानन्दस्य नित्यव्यक्तत्वात्कथं तत्प्राप्तिः । उच्यते । नित्यव्यक्तस्यापि लक्ष्म्यानन्दस्य परमानन्दमुख्यप्रतिबिम्बत्वेन तद्व्यक्तेरपि तदधीनत्वं युज्यते । तच्चोक्तम् । 'आभासकात्परमे' त्यादौ । विष्णुतत्त्वनिर्णये चोक्तम् । 'सर्गस्थितियतिज्योतिर्नित्यानन्दप्रदोऽक्षरे' इति । अत एवोक्तम् । अपरमिति अन्यमित्यर्थः तस्य च प्रतियोगिसापेक्षत्वाद्धरेरित्यध्याहृतम् ।

**अपरमा** इति पदाङ्गीकारेणापि व्याख्याति । विष्णुरेवेत्यादिना ।

## टीका

विष्णुरेव परो यस्याः सर्वस्मात्परमा च या ॥ ६ ॥
आनन्दं वा समुद्दिश्य प्राप नारायणं पतिम् ।
एतेन परमानन्दोः हरिरेवेति साधितम् ॥ ७ ॥
ननु सर्वे परानन्दाः स्वावरापेक्षया हरेः ।
को विशेषस्ततश्चेशे शङ्का [१]नोनुद्यतेऽधुना ॥ ८ ॥

१ पुनः पुनः भृशं वा नुद्यते परिह्रियते ।

**टिप्पणी**—अत एव अः परमो यस्याः, तं विना नान्यः परमो यस्या इति विग्रहद्वयमुक्तं भवति। आनन्दं वा समुद्दिश्येत्यत्र स्वगुणामित्यनुवर्तनीयम्। अन्यथा उक्तदोषानतिवृत्तेः। एतेनेत्यनेन फलितमाह। तथा लक्ष्म्या आनन्दप्रदत्वात् परमानन्दो नारायण इत्युक्तम्। नैतावता परमानन्दत्वासिद्धिः। स्वावराधिकानन्दस्य सर्वसाधारण्यात्। अतो यावल्लक्ष्म्याद्यानन्दस्य परमात्मानन्दस्य च परिमितापरिमितत्वरूपो विशेषो नाभिधीयते तावच्छङ्काप्रसक्तेस्तां शङ्कां परिहर्तुं शङ्कापूर्वकं तत्परिहारत्वेनोत्तरार्धस्थं **उज्झितपरमानन्दमिति** पदं व्याख्याति। परस्येत्यादिना।

## टीका

परस्य ब्रह्मरुद्रादेरानन्दपरिमाणकम्।
उज्झितं यत्परानन्दे सोऽनन्तानन्द एव हि ॥ ९ ॥

**टिप्पणी**—ब्रह्मशब्देन लक्ष्मीरपि ग्राह्या। अन्यथा लक्ष्म्याः परमानन्दत्वप्राप्तेः परस्य सकलचेतनराश्युत्तमस्य ब्रह्मरुद्रादेरित्यनेन एवं विग्रहः सूचितः। मानं मा मितिरित्यर्थः। मया सहितः आनंदः मानन्दः परिमितानन्द इत्यर्थः। परस्य मानन्दः परमानन्दः। उज्झितः परमानन्दो यस्मात्स उज्झितपरमानन्दः परिमितानन्दरहितः कुतः तद्व्यावर्तकस्यापरिमितानन्दस्य स्वास्मिन् सद्भावात्। न हि परस्परं स्वभावतो विरुद्धयोः सहावस्थितिः संभवति। तात्पर्यलब्धमाह। **सोऽनन्तानन्द एवेति**। अवधारणेन देशकालभेदेन व्यवस्थितिं पराकरोति। अनन्तानन्दस्वाभाव्यात्। न हि वहिः कस्मिंश्चिद्देशे काले वा अवहिर्भवति। हीत्यनेन प्रमाणप्रसिद्धिं सूचयति। तथा च श्रुतिः। 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति' इति। लक्ष्म्याद्यानन्दस्यानन्दमिति क्लीबताश्रवणं तु पराधीनत्वेनाकिंचित्करत्वमाश्रित्य। अकिंचित्कुर्वति च लोके तथा प्रयोगदर्शनात्। न तु शब्दस्वाभाव्येन।

उज्झितपरमानन्दामिति द्वे पदे अङ्गीकृत्य द्वे अपि पदे द्वेधा व्याचष्टे अथवेत्यादिना।

## टीका

अथ वैवारिणां मानहरणं येन तं प्रभुम्।
वैरिशोभाक्रिये येन वोज्झिते तं नृकेसरिम् ॥ १० ॥

**टिप्पणी** —परेषां वैरिणां मानः परमानः उज्झितः परमानो येने स तथा तम् । हरणमिति उज्झितपदव्याख्यानम् । दामित्यस्य व्याख्यानं प्रभुरिति । ददातीति दः तं दं अनुगृहीतारं न केवलं दुष्टनिग्रहकर्ता किं तु भक्तानुग्रहकर्ता चेत्यर्थः । वैरिशोभेति आद्यपदस्य द्वितीयं व्याख्यानम् । अत्रैवं विग्रहः । मा च अनश्च मानौ परेषां मानौ परमानौ उज्झितौ परमानौ येन स तथा तमिति । मा शोभा । अनश्चेष्टा । अन चेष्टायामिति धातुव्याख्यानात् चेष्टा क्रिया चेकैव । अत एव क्रियेति व्याख्यानम् । दमित्यस्य व्याख्यानान्तरं यतीति दः दो अवखण्डन इति धातुव्याख्यानात् । आयुधनैरपेक्ष्यणेति शेषः । अत एवोक्तं न नृकेसरिमिति । नृहरेरायुधनैर-पेक्ष्येण हिरण्यकशिपुविदारकत्वात् । रामकृष्णादौ आयुधाऽऽदानं तु लीलामात्रम् । न त्वशक्तत्वात् । अत एव कालयवनवधाय निरायुध एव भगवान् मधुराया निर्जगामेति तथैवोक्तं भगवत्पादैः श्रीमहाभारततात्पर्यनिर्णये । दंपत्याद्याश्रमैरित्यादि व्याख्याति । तदिदमिति ।

**लघुटिप्पणी**—नृकेसरिमिति ।अत्र नृकेसरिणामिति वक्तव्ये नृकेसरिमिति छान्दसं पदं अध्यापकोच्चारणवत् यत् प्रयुक्तं तेनैतत्सूचयति "क्षीरोदार्णवशा-यिनं **नृकेसरिं** योगिध्येयं परमं पदं साम जानीयात्" इति नृसिंहपूर्वतापिनीयो-पनिषदि प्रथमोपनिषदि पञ्चमखण्डे, तदुत्तरत्र च नृसिंहद्वादशाक्षरमन्त्रघटकानां उग्रवीरमहाविष्ण्वादिपदानां निर्वचनपूर्वकं संवर्णितो श्रीनृसिंहस्य महामहिमा स्मर्तव्य इति । नृकेसरिणामित्युक्तौ तु तत्स्मरणं न स्यात् । तत्र शाङ्करभाष्यम् ना चासौ केसरी च नृकेसरी तं नृकेसरिणम् नृकेसरिमिति छान्दसम् इति ।

अथवा " ऊर्ध्वो नः पाह्यंहसः " इत्यत्र ऋग्भाष्यटीकायां तत्प्रकाशे सत्यनाथतीर्थीये च आत्रिमित्यत्र अदेरिनिप्रत्ययवत् इकारोऽपि प्रत्ययो भवतीत्युक्तत्वेन " अथ हतयोर्गोलिकेरयोरिति " अत्रापि यादुपत्यं तथोक्तत्वेन नृकेसरिमिति साधु । एतट्टिप्पण्यां अत एवोक्तं नृकेसरिमिति ग्रहणाच्च पाठान्तरशङ्काया अपि नावकाशः ।

## टीका

तदिदं परमं दैवमिज्यते यैः स्वकर्मभिः ।
वर्णाश्रमोचितैस्तान्हि पाति विष्णुर्न चेतरान् ॥ ११ ॥

**टिप्पणी**—पूर्वार्धोक्तं विष्णवाख्यं परमानन्दमिति ज्ञापनाय यन्मतेत्यादि समर्थितं तदिति परामृशति। सोऽयमिति वक्तव्ये तदिति नपुंसकलिङ्गनिर्देशो दैवेति विधेयापेक्षया कृतः ' दक्षिणान्नं वर्तते यो न आत्मा ' इत्यादिवत् पूर्वार्धोक्तस्य परमानन्दत्वस्य उत्तरार्धस्थदैवपदोक्तदैवत्वस्य हेतुहेतुमद्भावो द्रष्टव्यः। कथं। यदिष्टप्रदं तद्दैवम् इष्टप्रदं च मुख्यतस्तदेव यत्परमानन्दं वस्तु, तादृशं च विष्णवाख्यं ब्रह्मैव नान्यत्। अन्यस्य सर्वस्य लक्ष्म्यादेस्तद्दत्तानन्दत्वान्न मुख्यतो दैवत्वम्। अत एवोक्तं **परमं दैवमिति**। **इज्यते यैः स्वकर्मभिरिति**। यैः मुक्तामुक्तैः ब्रह्मादिमनुष्योत्तमान्तैः **स्वकर्मभिः** स्वरूपभूतैः कर्मभिः स्वरूपाभिव्यक्तिसाधनैर्वा कर्मभिः **वर्णाश्रमोचितैः** स्वरूपभूतवर्णाश्रमोचितैः स्वरूपवर्णाश्रमाभिव्यक्तिसाधनैरिति चार्थः। **इज्यते** पूज्यते संगम्यते दीयते चेत्यर्थः। दानमत्र ब्रह्मणो न त्यागरूपं किंतु शिष्यप्रशिष्यादिषु तन्माहात्म्योपदेशनमेव। तथा च दंपत्याद्याद्याश्रमैरित्याश्रमशब्दश्रवणात् अजहल्लक्षणावृत्त्या वर्णकर्मणी संगृह्येते कुतः अवर्णस्याऽऽश्रमस्याभावात्। अकर्मणश्चाश्रमस्याभावात्। पूर्वव्याख्यानं ब्रह्मादिदेवमात्रपरं इदं तु सर्वाधिकारिसाधारणम्। अत एवात्र यैरिति साधारणोक्तिः। पूर्वत्र तु चतुर्भिराश्रमैः पूर्णैर्युक्ता इति सुरा इति चासाधारणोक्तिः। तथा च स्वस्ववर्णाश्रमवतोऽधिकारिणः स्वस्ववर्णाश्रमोचितैः कर्मभिः स्मरति दैवं परब्रह्म ये, अथवा कर्मभिरुपायैरुपेयेन दैवेन परब्रह्मणा सहिता ये इति वा सदैवाः स्मरणसाहित्ये सपदार्थः। इज्यत इति तु स्मरणसाहित्ययोस्तात्पर्यवर्णना · कर्तृब्रह्मणोरुपायभूतकर्मद्वारकमेव साहित्यं तच्च यजमान*मेवोपायवत् *एव उपेयत्वसद्भावात्। न च तथात्वे पुत्रेण सहितः सपुत्र इतिवत् ब्रह्मणोऽप्राधान्यं प्राप्तमिति वाच्यम्। शब्दतोऽप्राधान्येऽपि अर्थतः प्राधान्यात् अर्थतः प्राधान्यस्यैव मुख्यप्रधानत्वात्। अत एव ब्रह्मजिज्ञासेत्यत्र शब्दतो ब्रह्मणोऽप्राधान्येऽपि अर्थतः प्राधान्यानुसारेणैव तल्लक्षणप्रमाणे जन्माद्यस्य इत्यादिना कथिते। तान्हि पाति विष्णुर्न चेतरानित्यनेन सदैवानेवेति सावधारणत्वं सूचयति। अत एव न चेतरानित्यवधारणफलमाह। तस्य प्रयोजनं वैषम्यवेदाप्रामाण्यपरिहारः। कथम्। अभजतामसुरादिजनस्य सुगतिदानरूपपालने वैषम्यप्राप्तेः। अनधिकारिणोऽपि वेदोक्तविशिष्टफलदाने अधिकारिप्रतिपादकवेदस्याव्यवस्थित्यापत्तेश्च। सदैवान् पाति रक्षाति दैत्यादिदुष्टनिग्रहणतदीयशरीरेन्द्रियस्वाधिकृतपदादिभिः स्वीयज्ञान-

कर्माणि तैः संपादयतीति सदैवपः इदममुक्तविषये । मुक्तविषये तु तत्स्वरूपेन्द्रियादिपालनम् । अत एवोतामृतत्वस्येशान ' इति श्रुतिः ।

## टीका

सर्वेषां च यथायोग्यं रतिज्ञानगतिप्रदम् ।
रमाचेष्टाप्रदं वा तं ध्यायेन्नारायणं प्रभुम् ॥ १२ ॥

**टिप्पणी**—रमयतीति रः मापयतीति मः अ(आ)नयतीत्यनः।सदैवपश्चासौ रश्चासौ मश्चासावनश्च तथोक्तः । तदुक्तं सर्वेषां चेति । तत्र वैषम्यपरिहाराय यथायोग्यमित्युक्तम् । साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुरिति वचनात् । अत एव ब्रह्माणं प्रति परमात्मवचनम् । ' न त्वामतिशयिष्यन्ति मुक्तावपि कथंचन । मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसीति । श्रुतिश्च । सपक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतुमिति ' । अथवा सदैवपश्चासौ रमानश्चेति विग्रहः । रमायाः आनः चेष्टकः रमानस्तम् । अत एवोक्तम् । **रमाचेष्टाप्रदं चेति** । दमित्यस्य व्याख्यानं प्रभुमिति । प्रदानस्य कृद्वृत्त्यैव लब्धत्वात् । अथवा रमाया अनः चेष्टा यस्मादिति विग्रहः कर्तव्यः । परमानन्द इत्यस्य तात्पर्यं वर्णयति । **नारायणमिति** । प्रलये अवतारानेकीकृत्य मूलरूपेणैव स्थितेः । अत एवोक्तं **रमाचेष्टाप्रदमिति** । तथा चोक्तं श्रीभूमीरति रूपाभ्यामित्यादिना । न हि ब्रह्मादीनां प्रलये बाह्यव्यापाररूपा चेष्टाऽस्ति । मुक्तानां ध्यानस्थत्वात् । अमुक्तानां तु सुप्तत्वात् । एकस्या दुर्गाया एव जाग्रत्वात् । अत एव ' तम आसीदि'ति श्रुतिः । सैव च श्रुत्यभिमानिरूपेण नारायणं स्तौति । तत्स्तुतिरूपचेष्टापि भगवदधीना न केवलं तदीयानन्दाभिव्यक्तिरित्यभिप्रेत्येदमुक्तम् । तथा चेत्थं समग्रश्लोकार्थः । **तं** नारायणं सुधीर्**ध्यायेत्** । तं कं । **यन्माता** यत्प्रमाता विधिः देवादिभिर्वृतः सन् **पतिं** स्वस्वामिनं प्राप । लिङ्गदेहभङ्गेन पूर्णामानन्दव्यक्तिं प्राप्य तच्छरीरे प्रविवेश । अथवा तं नारायणं परमानन्दं ध्यायेत् । आनन्दस्य तत्स्वरूपत्वेऽपि विशेषबलेन गुणगुणिभावात्परमानन्दत्वेन प्रकारेण ध्यायेत् । कुतः परमानन्दत्वं **यत्** यस्मात् **माता** जगन्माता महालक्ष्मीः **आनन्दं** आनन्दरूपं पतिं नारायणं प्राप । अथवा स्वगुणमानन्दमुद्दिश्य **आनन्दं** आनन्दरूपं **पतिं** नारायणं प्राप । कथं भूतं नारायणम् ।

**अपरम्** । न विद्यते परः उत्तमो यस्मात्स तथा तत् । अथवा कीदृशम् । सगुणमानन्दम् । परं हरेः सकाशात् अनन्तगुणतो नीचम् । अथवा कीदृशी माता । **अपरमा** । अः विष्णुरेव परो यस्याः सा न विद्यते तं विना परमो यस्या इति वा अपरमा । पुनः कीदृशमानन्दम् । आनन्दरूपम् । पुनः कीदृशम् । उज्झितपरमानन्दम् । उज्झिताः परे अरयो यैस्ते तथा । उज्झित-पराणां मानो ज्ञानादिसंपद्रूपो यस्मात्स तथा तम् अथवा उज्झितः गतः परस्य ब्रह्मरुद्रादेः मानन्दः परिमितानन्दो यस्मात्स तथा तमिति । अथवा परेषां वैरिणां मानः अभिमानः ईश्वरोऽहमहं भोगीत्यादिरूपः उज्झितस्त्याजितो येन स तथा तमिति । अथवा मा च अनश्च मानौ शोभा क्रिया चेत्यर्थः । परेषां मानौ परमानौ उज्झितौ परमानौ येन स तथा तमिति । पुनः कथंभूतमिति । **दं** ददातीति दस्तं प्रभुमित्यर्थः । अथवा द्यतीति दः तं **दं** वैरिखण्डनमित्यर्थः । पुनः कीदृशं । दंपत्याद्याद्याश्रमैःसदैवपरमानन्दम् । दंपत्याद्याद्याश्रमैः सहिताश्च ते सदैवाश्च ते परमाश्च ते तथा तेषामानन्दो यस्मात्स तथा तत् । तृतीयाया अलुक् सहितपदस्य च लुक् द्रष्टव्यः । अथवादंपत्याद्याद्याश्रमैः सदैवाः दैवसहितास्तद्यष्टार इति यावत् तानेव पातीति सदैवपः स चासौ रश्चासौ मश्चासावनश्च सदैव परमानः तमिति । अथवा सदैवपश्चासौ **रमानश्च** स तथोक्तस्तं दं प्रभुमित्यर्थः ॥ १२ ॥

## तिम्मणभट्टीयटिप्पणी

॥ श्रीलक्ष्मीनृसिंहाय नमः ॥

ಶ್ರೀ ಮಾಧ್ವಗ್ರಂಥ ಪ್ರಕಾಶನ
೨/15. ಶ್ರೀ ಲಕ್ಷ್ಮೀನರಸಿಂಹ ದೇವಸ್ಥಾನ
-583-101

नारायणमजं पूर्णप्रज्ञार्यपरमप्रियम् ।
नमामि सच्चिदानन्दतनुं क्षीराब्धिजापतिम् ॥ १ ॥

श्लोकरूपा हि यमकभारतस्य जयत्यलम् ।
या सा टीकाऽल्पमतिभिर्दुर्बोधा सपदि स्फुटम् ॥ २ ॥

अतः प्रकाश्यते तस्य वाक्यैरश्लोकलक्षणैः ।
स एवाऽर्थोऽत्र उक्तो यः सुखमल्पधियां धिये ॥ ३ ॥

**ध्यायेदिति** । ध्यायेत्तं परमानन्दं **दंपतीति** ।

उपलक्षणतृतीया इत्थंभूततृतीया वा । दैवेन हरिणा सहिताः सदैवाः ते च ते परमाश्च ते तथा । तेषामानन्दो यस्मात्स तथा तामिति ।....उज्झितेति । परेषां परमानन्दानां मानं परिमाणं उज्झितं स्वानन्दे येन स तथा । अत्र स्वानन्द इति शेषः । यद्वा उज्झितः पराणां शत्रूणां मानः सन्मानो येन स तथा तम् ; यद्वोज्झिते पराणां शत्रूणां मा ज्ञानं अनं क्रिया येन स तथा तम् । दंपत्याद्याद्याश्रमैर्वर्णाश्रमोचितकर्मभिः करणैः सदैवान्विष्णुपूजकान्पातीति सदैवपः रः रतिश्च मा ज्ञानं च अनं चेष्टा च अत्र नुमागम एकत्वद्वावो वा बोध्यः । तानि ददातीति रमानन्दश्च । रमाया अनं चेष्टां ददातीति वा । सदैवपश्चासौ रमानन्दश्च तथा तम् । प्रथमं परमानन्दामित्यत्र परमा श्रीर्येभ्यस्तानानन्दयतीति वा । परा चासौ मा च परमा तस्या आनन्दो यस्मादिति वा । पराणां मया ज्ञानेन आनन्दो यस्मादिति वा । तेषां मा नंदौ ज्ञानसुखे यस्मादिति वा । परम आनन्दो यस्येति वा । परं आनन्दामिति पदद्वयं वा ज्ञेयम् ॥ १ ॥

**भगवत्कृता टिप्पणी**--श्रीशं गुरूणां गुरुमाद्ययोनिं वेदैकवेद्यं निखिलेश्वरेश्वरम् । नमामि विष्णुं जगदेकवन्द्यं ब्रह्मादिभिः प्राप्य तमं सुनित्यम् ॥ १ ॥ आनन्दमुनिमानमन् जयमुनीन्द्रमप्याभजन् स्मरन्नरहरिं गुरुं यमकभारतव्याकृतिम् । तदीयकृतिमाश्रयन्विमलपद्यरूपामहं यथामति तनोम्यलं मम मनो वचः शुद्धये ॥ २ ॥

इह खलु भगवान् परमकारुणिकः श्रीमदानन्दतीर्थमुनिः सकलसज्जनानां प्रत्यहं पठनेन महाभारतपठनजनितफलसिद्ध्यर्थं (यमकानुप्रासादि) लौकिकचित्रकवितापदर्शनार्थं च संक्षेपतो भारतार्थप्रतिपादकं काव्यं करिष्यन् ग्रन्थादौ हरिध्यानरूपमंगलमवश्यं कर्तव्यमिति सुजनाननुशिक्षयति । **ध्यायेदिति** ।....सदैव परमाः दैवेन हरिणा सह वर्तमानाः सदैवाः । तन्मुखप्रेप्स्या इति यावत् । अत एव परमाः उत्तमाधिकारिणो देवाः तेषामानन्दो यस्मात्स तथोक्तस्तम् । सदा समस्तसंपूर्णाश्रमभाजां स्वसाक्षात्प्रेप्स्याणां देवानामानन्दप्रदामिति यावत् । **अपरमेति** ।....अत् विष्णोः तत्प्रसादादिति यावत् । परमा सर्वस्मादुत्तमेति वा । अः परो यस्याः सा अपरा । सा च सा मा लक्ष्मीश्चेति वा ।....दंपत्याद्याद्याश्रमैः । वर्णाश्रमोचितस्वकर्मभिः **सं** सृतं अनुसृतं पूजितमिति यावत् । **यदैवं** परदैवतं विष्ण्वाख्यं तत् । पालकत्वात्पाः ।

वर्णाश्रमोचितस्वकर्मभिराराधकान् जनान् पातीति यावत्। **सं** च तत् **दैवं** च तत् **पं** चेति **सदैवप**मिति विग्रहः। दैवविशेषणत्वान्नपुंसकता। तदुक्तं 'तादिदं परमं दैवमिज्यते यैः स्वकर्मभिः। वर्णाश्रमोचितैस्तान्हि पाति विष्णुर्न चेतरानि' ति। रं रतिः मा ज्ञानं अनश्चेष्टा। द्वन्द्वैकवद्भावः। तत् ददातीति रमानन्दस्तं सर्वेषां च यथायोग्यं रतिज्ञानगतिप्रदमित्यर्थः। अथवा रमाया अनं चेष्टां ददातीति रमानन्दस्तामिति। सदैव पंचासौ रमानन्दश्चेति कर्मधारयः॥ १॥

**नारायणार्यटिप्पणी**--(अत्र प्रथमपत्रं नोपलब्धम्) ध्यायेत्तमिति। शिष्यान्प्रत्युपदेशोऽपि भगवदुपासनत्वान्मंगलम्। 'आत्मानमेवोपासे आत्मानमुपास्वे'ति श्रुतेः।........अनेन अथातो ब्रह्मजिज्ञासा इति सूत्रार्थ उक्तो भवति। ध्यानस्य श्रवणमनननिदिध्यासनोपलक्षणत्वात्। ध्यातृकर्तव्यता-पदार्थस्य लिङ्ग च उक्तत्वात्। अधिकारार्थकाथशब्दार्थस्य अधिकारिणः सुधीरित्यनेनोक्तत्वात्। परमानन्दमित्यनेन ब्रह्मशब्दार्थस्याप्युक्तत्वात्। परमः आनन्दो मोक्षो यस्मादिति बहुव्रीह्याश्रयणेन अतःशब्दार्थस्यापि कथितत्वात्। ........तदेव प्रपंचयति। यत् यस्मात् कारणात् **माता** प्रमाता ध्यानजन्य-साक्षात्कारवान्। **पातिं** परमात्मानं अयत् प्राप्तः। **अपरमानन्दामिति**। न स्तः परौ उत्कृष्टौ याभ्यां तौ अपरौ मा चाऽऽनन्दश्च मानन्दौ अपरौ अनुत्तमौ ज्ञानानन्दौ यस्मात्सः तम्........ **उज्झितपरमानं** उज्झितानि निरस्तानि समयपादे परेषां तत्तद्वादिनां मानानि प्रमाणानि येन व्यासरूपेण। सः तम्।........यद्वा उज्झिताः परेषां माः मानानि येनासौ उज्झितपरमः एतादृशः अनः मुख्यप्राणः यस्य सः तम्। तेषां दुर्भाष्याणामपि खण्डयिता प्राणः यदीयः। 'प्राणाद्वायुरजायत' इति श्रुतेः तस्य भगवत्प्राणोत्पन्नत्वात्। प्राणशब्दवाच्यत्वाच्च।....यद्वा उज्झिताः निरस्ताः पाखण्डादिदुर्वादिनः यैस्ते उज्झितपराः तान् (भगवत्पादाचार्यायान्) मानयति सत्करोति मोक्षेऽपि आनन्दातिशयं करोतीति एतादृशः तम्। ........ अत एव यन्माता यस्य प्रमाता अयमानन्दतीर्थः यः परमात्मा निर्माता यस्येति वा, यः माता जननी यस्येति वा, एतादृशः चतुर्मुखः सन् पातिं परमात्मानं अयत् इत्यपि व्याख्येयम्। वायुजन्मनि मोक्षाभावेऽपि चतुर्मुखः सन् परमात्मनाभि-कमलाद् यदा उत्पद्यते तदैव तस्य परमात्मा जननीरूपश्च भवति। वशरीरादपत्योत्पादकत्वेन तस्य मातृत्वात्। तदनन्तरं तस्य मोक्ष इति

भावः । ............**सदैवाः** स्वविहितकर्मानुष्ठानसाध्यपुण्यसम्पन्नाः तेषां **परस्य** परब्रह्मणः **मा** ज्ञानं आनन्दश्च यस्मात्सः **सदैवपरमानन्दः** तम् । 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति' इति श्रुतेः ।....भगवन्तमेव तैस्तैर्विशेषणैर्विशेषयता न केवलन कर्मणा वा कर्मफलं ज्ञानेन वा ज्ञानफलं किं तु तत्साध्यभगवत्प्रसादेनैवेति सूचितम् । ........जायाया जंभावदंभावौ निपात्याविति वचनात् पूर्वपदजायाशब्दस्य दमित्यादेशः । तस्य पूर्वपदान्तस्थत्वेऽपि न यतिभङ्गदोषः शङ्कनीयः । यतेः पादान्त एव पादावसानेन कृतत्वात् .... ॥ १ ॥

## ॥ यमकभारतम् ॥

**यस्य कराऽलोलं चक्रं कालः परस्य हि करालोलम् ।**
**यस्य गदापवमानस्सन्यो व्यासोऽभवत्सदापवमानः ॥ २ ॥**

**(पदच्छेदः ) यस्य । करालः । अलं । चक्रं । कालः । परस्य । हि । करालोलं । यस्य । गदा । पवमानः सन् । यः । वि । आ । सः । (व्यासः ) । अभवत् । सत् । आपवमानः ॥ २ ॥**

### टीका

स एव भगवान्विष्णुः परमानन्द इत्यपि ।
बोधयन्तो महान्तोऽथ प्रथमं प्रलये स्थितम् ( तिम् ) ॥ १३ ॥
वदन्ति श्रीमदाचार्या यस्येत्यादिगिराऽमरान् ।

**टिप्पणी**—पूर्वश्लोकेनोत्तरश्लोकं संगमयति । **स एप इति** । एकवाक्यत्वसिद्धये । न च भिन्नवाक्यत्वम् । संभवत्येकवाक्यत्वे भिन्नवाक्यत्वाङ्गीकारस्यानुचितत्वात् । अथवाऽभवदिति अत्रापि क्रियापदश्रवणेन पूर्वश्लोकोक्तक्रियाकाङ्क्षाभावात् । स एव इत्यादिना पूर्वश्लोकोक्तमनुवदति प्रलये स्थितिं बोधयितुम् । न चेदं न वक्तव्यमेव यस्य लक्ष्म्यादिप्राप्यत्वं तस्यैव नारायणस्य प्रलये 'एको नारायण आसीदि'त्यादिना अवस्थित्युक्तेः न च 'वासुदेवो वा इदमग्र आसीदि'ति श्रवणात्कथं नारायणस्यैवाऽवस्थानामिति वाच्यम् । तद्वाक्यस्य नारायणाभेदाभिप्रायेण शक्तिरूपाभिप्रायेण वा ईश्वरसर्गप्रस्तावे वासुदेवरूपस्य प्रथमं व्यक्त्यभिप्रायेण वा प्रवृत्तेः । अन्यथ

'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ' इत्यादिवाक्यानां निर्विषयत्वापत्तेः ' अत एवासद्वा इतमग्र आसीत् ततो वै सदजायत ' इति श्रुत्या अनासाद्यत्वेन असन्नामकनारायणात् आसाद्यत्वेन सन्नामकवासुदेवाभिव्यक्तिरूपा जनिरुक्ता भवति । अपिशब्दो भिन्नक्रमः प्रलये स्थितमपीति संबन्धः । नारायणमिति शेषः । बोधयन्त इत्यस्य व्यवहितेनामरान् इत्यनेनान्वयः ।

संगतिमुक्त्वा श्लोकार्थमाह । **स एष इति ।**

## टीका

स एष भगवान्विष्णुर्यतश्चक्रगदाधरः ॥ १४ ॥

सर्वसंहारकं चक्रं दुर्गारूपं हि यत्करे ।
कालात्मकं यतः कालो नरसिंहो भयंकरः ॥ १५ ॥

अनन्तमुकरालास्यकरश्रीमत्पदाम्बुजः ।
जानानो हि मरुत्सर्वं गदारूपो हि यत्करे ॥ १६ ॥

प्रलयेऽपि स वै देवः श्रीमन्नारायणोऽवसत् ( वसन् ) ।
व्याभवद्वासुदेवादिरूपेणाग्रे स एव हि ॥ १७ ॥

**टिप्पणी**—स एष भगवान्विष्णुर्यतश्चक्रगदाधरः अतः प्रलये दुर्गारूपं चक्रं यत्करे तिष्ठति गदारूपो मुक्तो मरुत् यत्करे तिष्ठतीति शेषेणान्वयः । अमुक्तयोः काममरुतोस्तदा तदभिमानाभावात् । अभिमन्यमानयोर्जडयोश्चक्रगदयोः स्वकारणे लयाच्चिद्रूपे एव चक्रगदे ग्राह्ये । अत एव 'मुक्तमाला विमुक्तद्रुहिणगणतनुः'इति त्रिविक्रमाचार्योक्तिः। **स वै देव इति** यत्करे दुर्गारूपं चक्रं गदारूपः पवमानः स वै स एव देवो नारायणः प्रलयेप्यवसत् इत्यन्वयः । व्याभवादिति । 'व्यवहिताश्चे'त्यतो व्याभवदित्यन्वयः । अग्र इति सृष्टेरिति शेषः । स एव नारायण एवाग्रे वासुदेवादिरूपेणाभवदित्यन्वयः ।

## टीका

अथवा व्यस्यत इति व्याम इत्युच्यते हरिः ।
विभक्तोऽभवादित्यर्थश्चतुर्धा पञ्चधापि च ॥ १८ ॥

द्विषड्दशशताद्यात्मा विशेषादेव केवलम् ।
एवं व्यासाभिधानोऽथाभावयत्सादिदं जगत् ॥ १९ ॥
यस्मादापवमानश्च स्वातन्त्र्ये व्यत्य ( लुप्त ) योऽपि च ।

**टिप्पणी**—व्यासोऽभवादिति वा पाठक्रमानुसारेण व्याख्याति । **विभक्तोऽभवदित्यर्थ इति** । अभवदित्यस्य अभावयादिति व्याख्यानं समर्थयते । **स्वातन्त्र्ये लुप्त (व्यत्य) योपि चेति** । 'व्यत्ययो भेदकरणस्वातन्त्र्येष्वि'ति वचनात् अत्राभावयदिति वक्तव्ये स्वातन्त्र्याभिप्रायेण णिविकारभूतयकारलोप इत्यर्थः ।

एवं सामान्यतः सर्वानवतारान्हरेः प्रभोः ॥ २० ॥
उक्त्वा सृष्टिं च जगतः संक्षेपादभिधाय च ।
अधुना भारतं वक्तुमाह वासिष्ठपुंगवम् ॥ २१ ॥
सन् यो व्यासोऽभवदिति विशेषाद्भारताभिध ( धिप ) म् ।
उत्सन्नं भारतं वंशं यो दधार हरिः परः ॥ २२ ॥
स एव भारताऽग्र्यः स्याद्वक्ताऽग्र्यं भारतस्य च ।
सर्वदा सन्नयं व्यासोऽवततार हि मानयन् ॥ २३ ॥
अब्विवेकादापवेति शक्रेणोक्तं वसिष्ठकम् ।
तदन्वये स वै ज्ञानदाता देवादिसज्जने ॥ २४ ॥

**टिप्पणी**—विशेषाद्भारताधिपामिति । व्यासो विविधोऽभवदित्यत्र व्यासावतारस्योक्तत्वेपि विशेषात्तमेवावतारमधिकृत्येत्यर्थः । अब्विवेकादिति । आ समन्तादपः अवति रक्षति अवगच्छति वा आपवो वसिष्ठः तं मानयतीत्यापवमानः । 'ता एवापो ददौ तस्मै स मुनिः शंसितव्रत' इति वचनात् । '**तदन्वये**' इत्यस्य व्यवहितेनावततारेत्यनेनान्वयः । **स वै ज्ञानदातेति** व्याख्यानान्तरमेतत् । आ समन्तात् अप्सु सर्वदेवेषु 'आपो वै सर्वा देवता' इति श्रुतिः । उपलक्षणमेतत् । देवादिसज्जने अवनम् **अवः** अवतेर्गतिकर्मकत्वाद्गत्यर्थस्य च ज्ञानार्थत्वात् । **अवो** ज्ञानं, तस्य **मा** निर्माणम् । मा निर्माण इति धातुव्याख्यानात् । तां नयतीति वा **आपवमानः** । तथा चेत्थं श्लोकार्थः । यः पूर्वश्लोके परमानन्दत्वेन

वर्णितः **स हि** स एव परः श्रीमन्नारायणोऽभवत् अवसत् प्रलयेऽपीति शेषः । स कः **चक्रं** सर्वसंहारकं दुर्गारूपं दुर्गानामकम् । लक्ष्म्या इति शेषः । **काल**: कालात्मकं कालनामकं च यस्य सः **करालोलं** करेणालोल्यते परिभ्राम्यते स्वव्यापारे प्रेर्यते तत्तथा । कुत एतत् । यतो विष्णुश्चक्रधरः पुनः स कः यः **कालः** कालयति द्रावयति छेदयतीति वा कालो नरसिंहः ब्रह्मादिसंहर्तेत्यर्थः । कीदृशः कालः **अलं करालः** भयंकरः । कुतो भयंकरः **यतोऽनन्तसुकरालास्यकरश्रीमत्पदाम्बुजः** । पुनः स कः पवतेऽसौ **पवमानः** सर्वं जानानः । **पवमानः** मरुत् । आवृत्तिः कर्तव्या । **गदा** गदारूपः यस्य करे इति शेषः । कुत एतत् यतो विष्णुर्गदाधरः । हिशब्दः उभयत्र प्रमाणप्रसिद्धिद्योतकः । प्रमाणं तु 'पूर्वं हरेश्चक्रमभूद्धि दुर्गे' ति । ( ता. नि. ३-७५ ) तथा 'गदा तु वायुर्बलसंविदात्मे' ( ता. नि. ३-७६ ) ति । एवं च चक्रगदाधरो नारायणः प्रलये अवसत् । स एव **व्याभवत्** । वासुदेवादिरूपेणाग्रे जगत्सृष्टेः पूर्वं व्यक्तोऽभवत् । अथवा **स** नारायण एव **व्यासोऽभवत्** । व्यस्यत इति व्यासः । विभक्तः चतुर्धा पञ्चधा द्विषड्दशशताद्यात्मा केवलं विशेषादेव न तु भेदात् अभवत् । प्रकटो बभूव । एवंविधः व्यासः विविधरूपः स नारायणः अथ स्वावतारानन्तरं **सत्** अबाध्यमिदं जगत् जडाजडात्मकं **अभवत्** अभावयत् उदपादयत् । स्वोदरनिविष्टं जीवजातं सूक्ष्मस्थूलभेदेन महदादितत्त्वसृष्ट्या तत्कार्यब्रह्माण्डादिसृष्ट्या तदभिमानवच्चकारेत्यर्थः । कस्मात् यस्मात् **आपवमानः** स्वातन्त्र्येण चेष्टमानः इदं सर्वत्र संभावकं तथैव श्रावयति 'नासदासीत्'इत्यादिका च श्रुतिः । अथवा **सन्** व्यासादिसर्वरूपेण विद्यमान एव यो भगवान् कार्यावसरे ब्रह्मादिप्रार्थनां निमित्तीकृत्य भूमौ व्यासो व्यासनामा **अभवत्** प्रकटोऽभवत् । कीदृशः यः **सत्** सन्तम् । सामान्येऽपि नपुंसकमिति न्यायात् । **उत्सन्नं** संतत्यभावात् भारतं वंशं **आपवमानः** अन्तर्णीतणिजन्तमिदम् । दधार संतत्युत्पादनेन उत्तरकालसंबन्धिनं चकारेत्यर्थः । अथवा **सत्** सन्तं अपाठाऽपाठादिना तिरोहितं वेदादिकं **आपवमानः** वेदं विभजमानः, भारतादिकं च कुर्वाणः । पुनः कीदृशः स व्यासः **सत् यो व्यासः** । सर्वदा विद्यमान एव व्यासः **आपवमानः** अविवेकादिन्द्रेणापवेत्युक्तं वसिष्ठं मानयति तत्कुले अवतीर्य तत्कुलं जगति पवित्रीकृत्य तं कीर्तितपुण्यभाजं करोतीत्यर्थः ।

पुनः कीदृशः **आपवमानः आ** समन्तात् अप्सु सर्वदेवेषु ' आपो वै सर्वा देवता ' इति श्रुतेः उपलक्षणमेतत् । देवादिसज्जने अवनं **अवः** अवतेर्गति-कर्मत्वात् **अवो** ज्ञानं तस्य **मां** निर्माणं उत्पत्तिं नयतीति वा आपवमानः । पुनः कीदृशः **सदापवमानः** । सत्सु देवादिसज्जनेषु आपवते तेभ्यो ज्ञाना-दिमोक्षान्तमभीष्टं ददातीति भावः ॥ २ ॥

**ति० टिप्पणी—सन्** वसन् यो हरिः ।....कीदृक् **सत् आपवमानः** पवमानं मर्यादीकृत्य स्थितम् । पवमान इति द्वितीयार्थे प्रथमा । ' सुपां सलुक्....' इति सूत्रात् ।....**आपवमानः** अब्विवेकादापवो वसिष्ठस्तस्य वंशः स एव, तत्र देवादौ मानं ज्ञानं यस्मादिति । सत्सु आपवे मानं यस्मादिति वेति वा ॥ २ ॥

**भगवत्कृता टिप्पणी**—'नृत्यते प्रलये देवो नृसिंहाकृतिरीश्वर ' इति नृसिंहस्य प्रलयस्थितिविवचनात् प्रलये स्थितो विष्णुरेवेति सिध्यतीति भावेनाह । **योऽलं कराल इति** । यः प्रलये स्थितः अलं करालः अतिक्रूरास्यकरचरणा-द्यवयववान् कालो भयंकरो नरसिंह इत्यर्थः । हिशब्दः उक्तार्थे प्रमाण-प्रसिद्धिद्योतकः । एवं प्रलये स्थितस्य विष्णुत्वं प्रसाध्य तस्मात्सृष्टिं वक्तुं प्रथममात्मसृष्टिमाह । **व्यासोऽभवदिति** । .... नारायणनरशौर्यादिरूपेण शतधा विश्वादिरूपेण सहस्रधा पराद्यात्मना बहुधा अजिताद्यनन्तात्मना च व्यासो विभक्तोऽभवदित्यर्थः ।........अथ जगत्सृष्टिमाह । **सदभवदिति** । स एव विष्णुः **सत्** सत्यभूतं जगत् । ........**आपवमान** इति । अपां समूहः आपं तद्विवेचनादापवो वसिष्ठः । ........आपवं वसिष्ठं मानयतीति तथोक्तः ॥ २ ॥

( ना० ) ननु तथापि सदेव सोम्येदमग्र आसीदिति श्रुतौ जगत्कारणं किंचित्सच्छब्दवाच्यं प्रतीयते तच्च बहुभावाद्विकारि प्रकृत्यादिकमेव युक्तं अतः कथमसौ ध्येय इत्यत इत्याह । **यस्य करालोलमिति** । यः परमात्मा सन् सच्छब्दवाच्यः तत्राध्ययनेवोच्यत इति भावः । कथं तर्हि बहुभावस्तस्येत्यत उक्तं । **यो व्यासोऽभवत्** । व्यस्यत्यात्मानमिति व्यासः तत्तत्पदार्थेषु नानारूपैः प्रविष्ट इत्यर्थः । ' सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकं करवाणि ' इति ( छां. उ. ) श्रुतेरिति हिशब्दार्थः । यद्वा **वि** । **आ** । **सः** । इति त्रीणि

पदानि । तथा च सः परमात्मा, **आ,** सम्यक्, समन्तात् सर्वपदार्थप्रवेशनार्थमिति यावत् । विविधप्रकारोऽभवदिति । सर्गादौ वासुदेवादिरूपेण मत्स्यादिरूपैश्चानेकरूपोऽभवदिति वा । अनेकरूपैः सर्वपदार्थेषु स्थितिश्च तत्तत्पदार्थसत्ताप्रदानार्थमित्याह । **सदापवमान इति** । पवमानो वायुः ' पवमानः प्रजापतिरि'ति श्रुतेः हिरण्यगर्भश्च । तथा पवते वायुवशादितस्ततः उड्डीयोड्डीय गच्छतीति **पवमानं** तृणादि एकशेषेण तदुभयनिर्देशः । पवमानमभिव्याप्येत्यापवमानं ब्रह्मादितृणान्तं जगत् । **सत् आपवमानं** येनेति सदापवमानः । आब्रह्मस्तम्बपर्यन्तस्य जगतः सत्ताप्रदातेत्यर्थः । आहोस्वित् पवमानेन वायुना अभिव्याप्तं स्वीकृतं अनुगृहीतं इति यावत् । तदेव सत् समीचीनं यस्येत्यर्थः । वायुनानुगृहीतं यदनुग्रहपात्रमित्यर्थः । उक्तं हि । ' तस्मात्स मारुतिकृते राविजं ररक्ष ' इति ( ता. नि. ) यद्वा सत् अधिकारिजातं आपवमानं मुख्यप्राणपर्यन्तं यस्येति । ' इयदामननात् ' ( ब्र. सू. ३।३।३५ ) इत्यत्रोक्तत्वादिति । ....**परः स हि करालोलम्** । सः **परः** परमात्मा अलमत्यर्थं करालः कालः ( कालपदवाच्यः ) एव । **हि** श्रुत्यादिप्रसिद्ध इत्यर्थः ।

**यस्य गदा पवमान इति** ' बृहद्धत्तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेश ' इति श्रुतौ ' वायुरेव पवमानो दिशो हरित आविष्टः ' इति तद्व्याख्याश्रुतौ ( ऐतरेयोपनिषदि ) उक्तमहिमा **पवमानो** वायुर्यस्य गदा यदीयायुधदेवता सोऽपि तदुपजीवकः ।....**व्यासोऽभवदिति** । व्यस्यति विभजति वेदांश्चेति **व्यासः** । अथवा व्यस्यति निरस्यत्यज्ञानं पाखण्डादिदुरागमांश्च ब्रह्ममीमांसानिर्माणेनेति **व्यासः**; तथा भारतपुराणादिनिर्माणेन स्वगुणान् विस्तारयति चेति, अथवा व्यस्यति विस्तारयति उत्सन्नं भारतं वंशं धृतराष्ट्रपाण्डुविदुरोत्पादनेनेति **व्यासः** ।....**आ** समीचीनः **पवमानो** येनेत्य**ापवमानः** । स्वस्य ज्ञानादिपूर्णतारूपं समीचीनत्वं व्यासशिष्यत्वादेवेति सूचयत्याचार्यः । अथवा **सतः** ब्रह्मादिसज्जनान् **आ** सम्यक् पावयतीत्यापवमानं ज्ञानं शास्त्रं वा यस्मात्स तथोक्तः । ' नारायणाद्विनिष्पन्नं........ ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः ' इति हि पुराणप्रसिद्धिः । ननु शुकाचार्यस्य ज्ञानाधिक्यदर्शनात् कथं वायोरेव समीचीनत्वमित्यतो वाऽऽह । **भवत्सदापवमानः** इत्येकं पदम् । आ व्यासः पवमानः वायुः यस्मिन्निति विग्रहः विशरणार्थस्य सदेः सदिति

रूपं रुद्रवाचकम् । भवति उत्पद्यते सन्=संहर्ता आपवमानः वायुः यस्मादिति त्रिपदबहुव्रीहिः । यस्मादुत्पन्नः शिवरूपः शुकः वायुनाऽऽविष्टः तस्यापि ज्ञानाद्यतिशयो वाय्वावेशानिबन्धनोऽतो युक्तं वायोरेव सर्वाधिकारिसमाचीनत्वमिति भावः ॥ २ ॥

( मूलं )

**यस्य रमा न मनोगं जगृहे विश्वंभरापि नमनोऽगम् ।**
**यस्य पुमानानन्दं भुङ्क्ते यद्धाम कपतिमानानन्दम् ॥ ३ ॥**

( पद० )

**यस्य । रमा । न । मनोगं । जगृहे । विश्वंभरा । अपि । नमनः । ( न । मनः ।) अगं । यस्य । पुमान् । आनन्दं । भुङ्क्ते । यद्धाम । कपतिमानानन्दम् । ॥ ३ ॥**

( टीका )

रमापि नैव जानाति साकल्याद्यन्मनोगतम् ।
न किंचिद्वास्तवं ( वाऽस्तवं ) तस्य नाऽगम्यं कस्यचिन्मनः॥२५॥
सर्वं च मनसा देवी जानती ( न्ती ) स परः पुमान् ।
भुंक्ते स्वपरमानन्दं तपः ( यतः ) स्वाप्ययधाम हि ॥ २६ ॥
प्रजापशुपतिप्राणश्रिया ( श्रीणा ) मानन्ददं परम् ।
अथवा नमनो यस्याऽनन्तं नित्यसुखं लभेत् ॥ २७ ॥
अगम्यं हेतुभिर्वाऽन्यैर्यस्य धाम चिदात्मकम् ।
प्रजापशुपतिप्राणाश्रियां गतिमतिप्रदम् ॥ २८ ॥ ३ ॥

**टिप्पणी—स पुमान्** स परः **पुमान् आनन्दं** स्वपरमानन्दं **भुङ्क्ते** अनुभवति । स कः **रमापि** यस्य **मनोगं** यन्मनोगतं न जगृहे । साकल्यान्नैव जानाति । वा इत्यथवा यस्य तस्य **अगं** अंगान(नु?)रूपं अस्तवं इत्यर्थः । न किंचित् । सर्वे यत्स्तुतिरूपा इत्यर्थः । तदुक्तं 'वेदे रामायणे चैव 'इत्यादि । पुनः स कः **यस्य** यस्यकस्यचिन्**मनः अगं** अगम्यं न । तदुक्तं 'येनाहुर्मनो मतम् ' इति । कथंभूतारमा **विश्वंभरा** विश्वं बिभर्ति

इति सा तथा सर्वं च मनसा जानती। पुनः स कः **यद्धाम** विधेयापेक्षया नपुंसकं **तपःस्वाप्ययधाम** तपसा स्वे स्वतन्त्रे अप्ययः अपिहितः प्रवेशः प्रलयः मुक्तिश्च येषां ते प्रलीना मुक्ताश्च तेषां धाम आश्रयः। कीदृशं धाम कीदृशं स्वरूपं तपः तेजः पुञ्जरूपमिति वा। कीदृशं धाम **कपतिमानानन्दं** कश्च पतिश्च माच अनश्च ते तथा तेषामानन्दो यस्मात्तत् तथा। **प्रजापशुपतिप्राणश्रीणामानन्ददं परम्**। अथवा **यस्य मनः अगं** न गच्छतीत्यगं अनन्तं **आनन्दं** नित्यसुखं **पुमान्** जीवः **न भुङ्क्ते** न लभेत् न प्राप्नुयादित्यर्थः। कीदृशं मनः **अगं** अन्यैर्हेतुभिर्युक्तिभिर्वा अगम्यम्। न गम्यते तदगमिति विग्रहः। अथवा **यद्धाम** यस्य धाम वैकुण्ठादिस्थानम्। **अगं** न गच्छतीत्यगं अजडं चिदात्मकमित्यर्थः। पुनः कीदृशं धाम कपतिमानानंदं। कश्च पतिश्चमा च अनश्च एषां अनं गतिं मतिं च दं प्रदमित्यर्थः ॥ ३ ॥

( ति० ) **कपतिमानानंदम्**। **को** विधिः **पतिरुमापतिर्मा** लक्ष्मीः अनो मुख्यमरुत् एषा**मनं** चेष्टाम्, अन चेष्टायामिति धातोः, **अनं** ज्ञानं, अण रण गताविति धातोः ददातीति तथा ॥ ३ ॥

( भ० ) व्यासस्य भगवदवतारत्वेऽपि इन्द्राद्यवतारेऽर्जुनादाविव न ज्ञानादावूनतास्तीत्याशयेन तस्य मूलरूपसाधर्म्यमुपपादयति। **यस्य रमा....** विश्वं मनसा बिभर्तीति **विश्वंभरा** सर्वज्ञापीति यावत्। ....कस्यचिन्मनो **यस्य अगम्** अगम्यं न। अन्यमनोगतं सर्वं यो वेत्तीति यावत्। तदुक्तं 'द्वैपायनेन यद्बुद्धं ब्रह्माद्यैस्तन्न बुध्यते। सर्वं बुद्धं स वै वेद तद्बुद्धं नान्यगोचरम्' इति। अथवा **यस्य मनोगं** मनसोऽगम्यं वास्तवं किंचिदपि नास्त्येवेत्यर्थः। स पुमान् परमपुरुषो व्यास आनन्दं स्वीयं परमसुखं भुङ्क्ते।....अथवा नमनः अगमिति छेदः। **यस्य नमनः** नमस्कर्ता स्तोता वा पुमान् णमु प्रह्वत्वे शब्दे चेति धातोः। **अगं** कदापि न गच्छतीत्यगं नित्यमिति यावत्। **आनन्दं** स्वरूपसुखं भुङ्क्ते। अथवा **यस्य नमनः अगं** अगम्यं भगवन्नमनादिकं विना अन्यैर्हेतुभिरप्राप्यमानन्दं भुङ्क्त इत्यर्थः ॥३॥

( ना० ) अथ भगवतः ध्येयताप्रयोजकसर्वोत्तमत्वरूपं माहात्म्यमाह ॥ **यस्य रमेति**। स **पुमान्** परमपुरुषः **आनन्दं** पूर्णसुखं भुंक्ते। निरुपपदानन्दशब्दस्य मुख्यानन्दार्थत्वात्। कीदृशमानन्दं **नमनोगं** मनसा

इन्द्रियेण अवबोधकेन वेदादिनाऽग्रम्यतेऽसौ मनोगः तयाविधो न भवतीत्यर्थः। निषेधार्थनकारेण समासः । 'यतो वाचो निवर्तन्ते, अप्राप्यमनसा सह । आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन' इति श्रुतेरिति भावः । स कः । **विश्वंभरा** सकलजगद्धारणपोषणकर्त्र्यपि रमा लक्ष्मीः **यस्य मनोगं** मनसि विद्यमानं न जगृहे । लक्ष्मीज्ञानापेक्षयाप्यनन्तज्ञानवानित्यर्थः । अथवा **रमा** श्रीः **विश्वंभरा** धरा च यस्य । **नमनोगं** । नमतीति नमनं 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । उ ऊर्ध्वं गच्छतीति उगं नमनं च तदुगं चेति नमनोगं । अवनमति उन्नमति वा इत्येतादृशं चामरद्वयं जगृहे । लक्ष्मीधराभ्यामपि तद्ज्ञानविषयो न जायत इत्यत उक्तं यस्य मनः अगं न गच्छतीत्यगं न भवति सर्वार्थविषयमित्यर्थः । तस्या ज्ञानं तु ईशादन्यत्रानालोचनेऽपि सर्वार्थविषयमिति भावः । पुनः स कः । **यद्धाम** यस्य स्वरूपं स्थानं वा वैकुण्ठादिरूपं **कपतिमानानन्दं** कश्चतुर्मुखः पतिः पशुपतिः मा लक्ष्मीः अनः मुख्यप्राणस्तेषामानन्दो यस्मिन्नित्यर्थः । कपत्योर्ब्रह्मेशयोर्मानानन्दौ ज्ञानानन्दौ यस्मिन्निति वा ॥ ३ ॥

## मूलम्

**परमेषु यदा तेजः परमेषु चकार वासुदेवोऽजः ॥**
**मानधि बिभ्रत्सु मनो माऽनधिमासीन्न वासुदेवोऽजः ॥ ४ ॥**

**(पद०) परमेषु । यदा । तेजः । परं । एषु । चकार । वासुदेवः । अजः । मानधि । बिभ्रत्सु मनः । मा । अनधिमा । (मानधिमा) आसीत् । नवासुदेवः । अजः ॥ ४ ॥**

## टीका

परमेष्वेषु रुद्रेन्द्रप्रजापश्रीषु देवराट् ।
ज्ञानरूपं परं तेजश्चकार ज्ञानदेवनः ॥ २९ ॥
शुभावहः स देवानां तेन ज्ञानार्णवं मनः ।
बिभ्रत्स्वत्युत्तमज्ञाना बभूवैका रमा सदा ॥ ३० ॥
इत्थं संप्राप्तविज्ञान ( इत्थमत्युत्तमज्ञान ) सिद्ध्यर्थं योगिनां सदा ।
न वाऽसुविजयो यस्य प्रसादात्स तथोच्यते ॥ ३१ ॥

परमेषु सुरेष्वेषु स्तोतुं क्षीराब्धिशायिनम् ।
भूभारहरणायातिशुद्धं ज्ञानार्णवं मनः ॥ ३२ ॥
विभ्रत्सु परमं तेजश्चकारात्मप्रकाशनम् ।
यदा तदाऽधिका तेषां श्रीरासीदसुर ( रा ) प्रियः ॥ ३३ ॥
अजातोऽपि हरिः सोऽयं वासुदेवोऽभिधीयते ।
व (वा)सुदेवाख्यसंशु ( ब ) द्ध मनसो विषयत्वतः ॥ ३४ ॥
ज्ञानरूपोऽसु ( पः स ) देवोऽयमथवा ज्ञानरूपिणा ।
असुरानसुमुख्येन भीमेनैव जिगीषति ॥ ३५ ॥
सहितः क्रीडते तेन तेन व्यवहरत्यपि ।
तेन द्योतोऽस्य लोकेषु स्तूयते तेन सर्वदा ॥ ३६ ॥
तस्माच्च कमनीयोऽयं तेनैव सह गच्छति ।
अन्यैरपि स वै गम्यस्तत्प्रसादेन नान्यथा ॥ ३७ ॥
एवं स वासुदेवः स्यान्नान्यापत्यत्वतः क्वचित् ।
न वासुदेव एवायं ( यं ) हृषीकाणामधीश्वरः ॥ ३८ ॥
न वासवोऽपि मुक्ता वा जरानुपहतेन्द्रियाः ।
तैरयं क्रीडते देवः स्वीयैर्वा नूतनेन्द्रियैः ॥ ३९ ॥

**टिप्पणी—वासुदेवः** वसन्ति तत्त्वाभिमानित्वेन सर्वत्रेति वासवो देवाः तेषां देवो वासुदेवः देवराट् **अजः** अज गतौ क्षेपणे चेति धातुव्याख्यानात् । अजयति गमयति प्रापयति शुभं अशुभक्षेपणेन देवानामित्यजः । देवानां वा शुभावहः । अथवा **वासुदेवः वेन** वा गति गन्धनयोरिति धातुव्याख्यानात् । ज्ञानेन **आ** समन्तात् **सुष्ठु दीव्यतीति** वासुदेवः ज्ञानदेवनः यदा यस्मात् ' यदा तदेति हेत्वर्थे कालार्थे चापि मण्यते ' इति वचनात् । **परमेषु** येषु पूर्वप्रस्तुतेषु रुद्रप्रजापत्यांषु **परं तेजः** ज्ञानरूपं परं तेजश्चकार । तेन कारणेन **मानधि** मानानि ज्ञानानि धीयन्ते यस्मिन् तत् मानधि । ज्ञानार्णवं **मनः विभ्रत्सु**मध्ये **मा** रमा । **मानधिमा** । मीमांसन्ते ते मानः ज्ञानिनः तेभ्यः मानभ्योऽधि अधिका मा ज्ञानं यस्याः सा मानधिमा अत्युत्तमज्ञाना आसीत् बभूव । सर्वदा एका रमैव । तस्या एव नित्यमुक्तत्वेन तदीयज्ञानस्य जन्मनाशयोरभावात् अन्येषां तत्सद्भावात् इत्यर्थः । पुनः कीदृशः वासुदेवः **न वा असुदेवः** । इत्थं लक्ष्म्याः अत्युत्तमज्ञानसिद्ध्यर्थं योगिनां

ब्रह्मादीनां सदा असुदेवः असूनामिन्द्रियाणां देवो विजयो यस्मात्स तथाभूतो **न जः** जातः लक्ष्म्यपेक्षया तेषां नीचज्ञानत्वासिद्ध्यर्थं तेषां नित्यमिन्द्रियजयं न दत्तवानित्यर्थः । पुनः कीदृशः । **वा** इत्यथवा तेषामसुदेवः असूनां देवो विजयो यस्मात्स तथोक्तः । एवं भूतो **जः** जातः स्वप्रसादेन तानिन्द्रियजय-वतश्चकारेत्यर्थः । अथवा वासुदेवः येषु परमेषु ब्रह्मादिषु क्षीराब्धिशायिनं स्वात्मानं भूभारहरणाय स्तोतुमतिशुद्धं **मानधि** ज्ञानार्णवं **मनः** बिभ्रत्सु परमुत्तमं **तेजः** ज्ञानरूपं यदा चकार तदैव ते स्तोतुं समर्थाः जाता अन्यदा न इति यदा तदा तेभ्यः **मा** श्रीः **मानधिमा** अत्युत्तमज्ञाना आसीत् । तस्याः कादाचित्काज्ञानाभावात् । कीदृशः । **वासुदेवः न जः** वान्ति असुषु ते वासवः इन्द्रियतोषणपराः तेषां देवः प्रियः असुरप्रियः **न जः** जातः । वा इत्यथवा असुभिरिन्द्रियैः रमन्ते तैः सहक्रीडन्तीति असुराः इन्द्रियाणां नियतत्वेन उत्पथगामित्वाभावात् । तत्सखायः लब्धप्राणप्रसादा वा असुरा वा । ' मह-देवानामसुरत्वमेकम् ' इति श्रुतेः । तेषां देवः प्रियः **जः** जातः । पुनः कीदृशः । **अजः** अजातोऽपि हरिः **वासुदेवः** वासुदेवनामा **जः** जातः कस्मात् **वासुदेवाख्यसंबद्धमनसो विषयत्वतः** । कोऽर्थः । वसुदेवस्येदं वासुदेवं तत्संबद्धं मनः अथवा वसत्यस्मिन् इति वसु देवस्य वसु वसुदेवं श्रीहरि-सन्निधानपात्रं ध्यानानुगृहीतं मनः तद्विषयत्वात् तद्ध्येयत्वात् । अथवा वातीति **वाः**, सूतेऽखिलं जगदिति **सुः**, दीव्यतीति **देवः**, वाश्चासौ सुश्चासौ देवश्चासौ तथोक्तः ज्ञानरूपः जगत्कर्ता क्रीडादिगुणविशिष्टश्चेत्यर्थः । अथवा वाति जानाति अखिलमिति **वः** सर्वज्ञः **असुः असुमुख्यः** ' मुख्ये मुख्यः प्रकीर्तितः ' इति वचनात् सर्वज्ञो मुख्यप्राणः तदात्मकेन वा **असुना** भीमेनैव **दीव्यति असुरान्** जरासंधादीन् जिगीषति तेन सह क्रीडते वा, तेन व्यवहरतीति वा तेन **देवो द्योतः** सर्वोत्तमत्वप्राकट्यं वा लोकेषु यस्येति वा, तेन सर्वदा स्तूयत इति वा, **तस्माच्च कमनीयो वा तेनैव सह गच्छतीति वा वासुदेवः** अथवा वासुना वासुप्रसादेनेति यावत् । दीव्यते गम्यते ज्ञायते प्राप्यते चान्यैर्देवादिसद्भिरिति वा वासुदेवः एभिरेव निमित्त-र्वासुदेवो न तु वसुदेवापत्यत्वतः । वा इत्यथवा **न वासुदेवः** सर्वं वाक्यं सावधारणमिति न्यायात् वासुदेव एव न केवलं किं तु असुदेवः असूनां देवः हृषीकाणां अधीश्वरः हृषीकेश इत्यर्थः । अथवा नवाः नूतनाः नित्यतरुणाः

असवो येषां ते तथा जरानुपहतेन्द्रियाः मुक्ताः तैः दीव्यति क्रीडते इति वा **वासुदेवः** अथवा नवासुभिः सर्वदा नित्यतरुणैः स्वीयैरिन्द्रियैः क्रीडत इति वा **वासुदेवः** ॥ ४ ॥

( **भ०** ) **अजः** व्यासरूपो हरिः ज्ञानरूपं तेजः यदा यस्मात् चकार । उद्बोधयामासेति यावत् । कीदृशः अजः **वासुदेवः** । वा गति गन्धनयोरिति धातोः वा ज्ञानं तां सुष्ठु देवयति गमयति इति तथोक्तः । ‘ दत्तव्यासादिरूपेषु ज्ञानकार्यो जनार्दन ’ इत्युक्तेः । **अजः** अयः देवानां शुभावहश्च । ‘ अयः शुभावहो विधिः ’ इति वचनात् । जयोः स्थान-साम्याज्जस्य यः तथा च व्यासरूपस्य ज्ञानकार्यावतारत्वादेवशुभावहत्वाच्च देवेषु ज्ञानोद्बोधनं युक्तमिति भावः । इन्द्रियविजयाभावे कथमेषां देवानां ज्ञान-सिद्धिरित्यतो भगवत्प्रसादादेव सोऽपि संपद्यत इति भावेन व्यासं विशिनष्टि **न वासुदेव इति** । **नवानां** पायुगुह्ययोरैक्याभिप्रायेण नवत्वसंख्यानामसूना-मिन्द्रियाणां **देवो** विजयो यत्प्रसादाद्योगिनां भवति स तथोक्तः । दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिस्वप्नमोदमदकान्तिगतिष्विति धातोः । अत्र विजिगीषापदेन तद्विषयो विजयोऽपि ग्राह्यः । एवं महाभारततात्पर्य-निर्णयानुसारेण दशमाध्यायोक्तव्यासमाहात्म्यमभिधायार्थैकादशाध्यायमारभ्य क्रमेण कथानिरूपयिष्यन्नादौ कृष्णावतारकथां वक्तुमवतारार्थमात्मानं स्तोतु-मुद्यतेषु देवेषु भगवता कृतमात्मप्रकाशनं निरूपयति । **परमोष्विति** ।... तेषु **परं तेज** आत्मप्रकाशनलक्षणं चकार । तन्मनसो गोचरीबभूवेति यावत् । यस्मान्**मानधि मनो बिभत्सु** देवेषु **परं तेजश्चकार** तस्मादेव वसु-देवाख्यसंशुद्धदेवमनसो विषयत्वादेव निमित्तादजोऽपि हरिर्वासुदेव इत्युच्यते न तु वसुदेवजातत्वनिमित्तात् । तथात्वे अजत्वविरोधादिति भावः । यथोक्तं भागवते । ‘ सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः । स त्वं च यस्मिन्भगवान्वासुदेवो ह्यधोक्षजो मे मनसा विधीयते’ इति ।........ ........अस्मिन्पक्षे न वासुदेवोऽज इत्यत्र न वासुदेवः, अज इति विभागः । **अजो** नेत्यस्य **अजः** अयः सुराणां शुभावहो न भवतीत्यर्थः । तथाचासुरप्रिय इति भावः .... वासुना देवो द्युतिर्लोके प्रसिद्धिर्यस्येति वा ॥ ४ ॥

(ना०) **मानधि** उदधिशब्दवत् ।....**अज इति** । अजगतिक्षेपणयोः । पचाद्यच् । निग्रहसमर्थ इत्यर्थः । ‘ अजेरजच ’ [ उ. २१५ ] इति

निपातनात् 'अजेर्व्यघञपोः' [ पा. २।४।५६ ] इत्यार्धधातुकेऽपि वीभावाभावः। नौति स्तौतीति **नवः असुदेवः** प्राणेश्वरो यस्येति वा। **नवेन** स्तोत्रा **असुनैव दीव्यत** इति ॥

## मूलम्

[1] **सोऽजनि देवक्यन्ते यस्मादनुकम्पनावदेव क्यन्ते ।**
**अवदन्देव क्यं ते भुवनं हि सुराः सदैव देवक्यन्ते ॥ ५ ॥**

**(पद०) सः । अजनि । देवक्यन्ते । यस्मात् । अनुकम्पनावत् । एव । क्यन्ते । अवदन् देव । क्यं । ते भुवनं । हि । सुराः । सदा एव । देवक्यन्ते ॥ ५ ॥**

## टीका

न वासुदेव एवं यः स एवाविर्बभूव ह ।
समीप एव देवक्याः न मलोत्थः कथंचन ॥ ४० ॥
अथवा देवकात्काराद्दैत्या देवकिनो मताः ।
तेषामन्ताय भगवान् बभूव मधुसूदनः ॥ ४१ ॥
यस्मात्क्यन्ते वदन्देवाः कं सुखं तद्वतां हि यः ( हरिः ) ।
अन्ते ( न्तो ) ऽपरिमितानन्दो यतोवाच इति श्रुतिः ॥ ४२ ॥
तत्रावोचन् कृपा तस्य यथाऽस्मसु ( स्त्सु ) भवेत्तथा ।
कम्पनावच्च वचनं यथा स्यादिति वा भवेत् ॥ ४३ ॥
कम्पमाना अवोचंस्त इत्येतदुदितं भवेत् ।
अथवा कम्पमानाः स्युरसुरा अवदंस्तथा ॥ ४४ ॥
कमिन्द्रियं ननो यत्ते तन्नियम्यं जगत्त्विदम् ।
को विरिंचोऽथवा तेन नियम्यं क्यमुदीर्यते ॥ ४५ ॥
सदैव यः स देवेभ्यो ददाति प्रार्थितं महत् ।
तस्मिन्सदैवदे विष्णाववदन्विबुधा इदम् ॥ ४६ ॥
अव देव जगन्नाथ भुवनं किं यथा भवेत् ।
नृजन्मभिः सुखस्यान्ते दैत्यैः प्राप्तेऽरिहन्निति ॥ ४७ ॥

---

१ आर्यागीतिः ॥

**टिप्पणी**—एवं न वासुदेवो यः सः स एव **देवक्यन्ते** देवक्या अन्ते समीप एवाजानि आविर्बभूव । न तु कथंचन मलोत्थः । अथवा देवान् कान्कुर्वन्ति पीडयन्तीति देवकिनो दैत्याः तेषां अन्ते । तादर्थ्ये सप्तमी । तेषां नाशाय भगवान्मधुसूदनः आविर्बभूव । कस्मात् यस्मात् ते सुराः देवाः **क्यन्ते** कं सुखं येषां ते किनः सुखिनः ( लक्ष्म्यादयः ति० ) तेषामन्तोऽवसानं ( अवधिभूतः ति० ) उत्तरावधिः सीमेत्यर्थः ना० ) **क्यन्तः** ' यतो वाचो निवर्तन्ते' इति श्रुतेः । अपरिमितानन्द इति यावत् । तत्र सामीपिकाधिकरणे सप्तमी । तत्समीपे । **अनुकम्पनावदेव** यथा तस्य सत्सु कृपा भवेत्तथा भूतं वचनमवदन् । अथवा **अनु** वचनश्रवणानन्तरमेव असुराणां **कम्पना** कम्पः विद्यते यस्मिंस्तत्तथा असुरकम्पहेतुभूतं वचनमवदन् । तस्मादित्यर्थः । असुरवधार्थं ब्रह्मादिप्रार्थनावचनादाविर्बभूवेत्यर्थः । अथवा **कम्पनावत्** वचनं कम्पमानाः सन्तो वचनमवदन् किमवदन् हे देव जगन्नाथ **कयं** कामिन्द्रियं मनः ' मन एव मनुष्याणां कारणं बन्धमोक्षयोः । ' ' मनः परं कारणमामनन्ति ' इत्यादेः मुख्यकारणं मनः तदभिमानी तच्छब्देनोच्यते । केन मनोभिमानिना रुद्रेण । अथवा को विरिंचः तेन यम्यते नियम्यते तदधीनमिति यावत् । तत् **कयं** निरुक्तत्वात् अकारलोपः एतादृशं भुवनं जगत् **किं** कमस्यास्तीति **कि** सुखि यथा भवेत्तथा रक्ष इत्यवदन् । कस्मिन्सति । अन्ते नृजन्मभिः सुखस्यान्ते दैत्यैः प्राप्ते सतीत्यर्थः । कथंभूते देवे **अन्ते** अन्तं करोति नाशयतीति अन्तिः तस्य संबुद्धिः । **अन्ते** हे अरिहन् । कथंभूते । **सदैवदे** देवेभ्यः प्रार्थितं महत् अभीष्टं ददातीति सदैवदः तस्मिन्नित्यर्थः ॥ ५ ॥

( ति० ) देवकिनो दैत्याः देवान् कृण्वन्तीति ॥ ५ ॥

( ना० ) कदा देवक्यन्ते । दीव्यत्यक्षैरिति देवकः शकुनिर्मूलरूपदैत्यः स स्वामी यस्येति देवकि द्वापरयुगं तस्यान्ते ' द्वापरान्ते कुरूद्वह ' इत्युक्तत्वात् । कं शिरो जलमाख्यातम् ' इति वचनात् कं जलं ' तृतीयोऽतिशये ' [ महा० व्या० ] इति वचनात् किं अतिशायितजलं अन्ते यस्येति क्यन्तः क्षीरसमुद्रः ततः परस्य शुद्धोदकसमुद्रत्वात् । तस्मिन् **क्यन्ते** । कानि शिरांसि यस्येति **की** । ' भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः ' इति वचनात्

भूम्नि इनि प्रत्ययः । यद्य"प्येकाक्षरात्कृतो जाते सप्तम्यां च न तौमताविति"ति वचनात् एकाक्षरादेरिनिनौ निषिद्धौ । तथापि क्वचिद्भवतोऽपीति प्रतिप्रसव-वचनेन तत्प्राप्तिः उदाहृतश्च कार्यीति कृदन्तात्तदुदाहृतिः। एकाक्षरोदाहरणं तु कीत्येतत्प्रकृतं वोध्यम्। सहस्रशीर्षा शेष इत्यर्थः।तस्यान्ते समीपे तदुपरिविद्यमान इत्यर्थः। सदैव निरन्तरमेव दयते पालयति देङ्पालने ददातीति वा सदैवदिः। सदैवान् सभाग्यान् पुण्यवतो वा पालयति ददातीति वा।एमा(का?)देशो विषय-सप्तमी। **अवदन्** प्रार्थितवन्तः इति पुराणादौ प्रसिद्धमित्यर्थः किं प्रार्थितवन्तः हे स्वामिन् भुवनमवेति । भारक्लिन्नां पृथिवीं रक्षेत्यर्थः। अनुकम्पनावदिति भुवनविशेषणं वा ( शेषणेन ) वा त्वत्कृपाविषयमेवेत्यर्थः। गोब्राह्मणहितायेति वचनात्। गोरूपधरायामवश्यं कृपा विधेयेति भावः। एतेन 'भूभारोत्तारण-च' इति भगवदवतारकृत्यमुक्तम्। पुनः किंनिमित्तं **देवक्यन्ते**। देवकः पितृव्यः अस्यास्तीति **देवकी** कंसः देवक्याः पिता। इनिप्रत्ययार्थः संबन्धश्च पितृत्वरूपः तस्यान्तो नाशः सप्तम्यर्थश्च निमित्तम्। कंसवधनिमित्तमित्यर्थः। देवक्याः स्वभगिन्याः अन्तो यस्मादिति देवक्यन्तः अन्तश्चात्र प्रसक्तः 'भगिनीं हन्तुमारेभे' इत्युक्तत्वात् ईदृशः कंसः मशकार्थो धूम इतिवत्तदर्थमित्यर्थः। कीदृशे। **अनुकम्पनावदे** अनुकम्पनं कृपां अवद्यतीत्येतादृशे निष्करुण इत्यर्थः। तथा **वक्यन्ते** वबयोरभेदात् वकी पूतना वा तस्याः अन्तनिमित्त-मित्यर्थः। 'अहो बकीयं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी'। तत्र वकीशब्देन हिंसकत्वेन पूतनोक्ता। अथवाऽक्षैर्दीव्यतीति देवकः शकुनिः स एव येषामस्तीति **देवकिनः** कौरवास्तेषामन्तार्थं 'कौरवाणां विनाशाय' इत्युक्तत्वात्। तथा **देवकी** युधिष्ठिरभार्या सा अन्ते समीपे यस्येति देवक्यन्तो युधिष्ठिरः। तन्निमित्तं। 'पाण्डवानां हितार्थाय' इत्युक्तेः। देवश्चासौ कश्चेति **देवकः** मुख्यप्राणः। 'कः प्रजापतिरुद्दिष्टः को वायुरिति शब्दितः'। सोऽस्ति जनकत्वेन यस्येति **देवकी** भीमसेनः। देवैः स्तूयमानत्वाद्देवकः इन्द्रः तज्जन्योऽर्जुनश्च **देवकी** अल्पाख्यायां कप्रत्ययः। अल्पौ देवौ **देवकौ** अश्विनौ। प्राक् नीचत्वाद्देवैः सोमपेभ्यो वहिष्कृतौ ततः शर्यातियज्ञे च्यवनभार्गवेण सोमपौ कृतौ तत्संवन्धिनौ **देवकिनौ** नकुलसहदेवौ। कित निवासे रोगापन-यनेचेति धातोः कर्तरि डः। रोगापनायकौ **कौ** देवानां कौ चिकित्सकौ **देवकौ** देवभिषजौ जनकौ ययोस्तौ **देवकिनौ** माद्रेयौ वा। तेषां संबंधा-

मेकशेषः । तत्समीपे तदन्तनिवृत्त्यर्थं वा मशकार्थो धूम इतिवत् । तन्नाशे उपस्थिते वा जातः । पाण्डवानां हितार्थायेत्युक्तेः कुत्सायां वा कप्रत्ययः । कुत्सिता देवा **देवकाः** तृतीयोऽतिशये । अत्यन्तमपभ्रष्टदेवताः दैत्या इत्यर्थः । तामसयज्ञादिभोक्तृत्वात्तेषाम् । देवान् किरतीति च । कृविक्षेपे । अन्तः तन्नाशार्थमित्यर्थः । ' दैत्यानां निधनाय च ' इत्युक्तेः । देवान् देवं परमात्मानं वा कायन्ति प्रतिपादयन्तीति **देवकाः** वेदाः कै गै रै शब्दे । ' आदे च उपदेशेऽशिति' [६।१।४५] इत्यात्वम् । 'आतोऽनुपसर्गे कः' [पा.३।२।३] । सोऽस्ति जनको यस्येति **देवकी** धर्मः । तस्यान्ते उपस्थिते सतीति वा ' धर्मसंस्थापनार्थाय च ' इत्युक्तत्वात् । कीदृशे हरौ क्यन्ते **किनः** पूर्णसुखाः लक्ष्म्यादिदेवास्तेषा**मन्त** उत्तरावधिः सीमेत्यर्थः । ततोऽधिकः पूर्णसुखः कोऽपि नास्तीत्यर्थः । क्यं । ते । इति भिन्नं वा पदम् । **ते** तव **क्यं** कं इन्द्रियं मनस्तन्नियम्यं तदीयेन केन चतुर्मुखेन वा नियम्यमिति भुवनविशेषणं वा अथवा **स** हरिः **देवक्यन्ते** देवकीगर्भे यदाऽजनि तदा सुराः इति अवद-न्नित्यन्वयः । किमिति हे **सदैवे देवकि** । ते **अन्ते** अभ्यन्तरे **भुवनं हि** । दैवेन परमात्मना सहिते देवकि त्वद्गर्भे सर्वं जगदस्तीत्यर्थः । विश्वंभरो हरिर्यदा गर्भे तदा सर्वमपि विश्वं तद्गर्भसंभृतमस्तीति तदा देवैर्गर्भस्तुतिः कृते-त्युक्तं भवति । तदुक्तं ' सा देवकी सर्वजगन्निवासनिवासभूता नितरां विरेजे ' इत्यादि ॥ ५ ॥

## ( मूलम् )

**नीतो वसुदेवेन स्वततेन सगोकुलं ( सु ) सवसुदेवेन ।**
**तत्र यशोदा तनयं मेने कृष्णं स्वकीयमवदातनयम् ॥ ६ ॥**

## ( पद० )

**नीतः । वसुदेवेन । (अवसुदेवेन) स्वततेन । सः । गोकुलं । सवसुदेवेन । ( सक्सु । देवेन ) ( सुअव । सुदे । वेन । ) तत्र । यशोदा । तनयं । मेने । कृष्णं । स्वकीयम् । अवदातनयम् ॥६॥**

## टीका

नीतोऽसौ वसुदेवेन स्वतातेनाथ गोकुलम् ।
कंसस्य सुकरं दातुमागते ह्यवमेऽनुजे ॥ ४८ ॥

बद्धेनाऽपि हरिर्नीतो गोकुलं सद ( ध ) नं प्रति ।
स्वयं ततेन देवेनानुगृहीतेन न स्वतः ॥ ४९ ॥
आख्यं वा वसु यत्तेन यस्य क्रीडादिसप्तकम् ।
स ब्रह्माऽवसुदेवः स्यात्स्वतातोऽपि स उच्यते ॥ ५० ॥
स्वः स्वतन्त्रो हरिस्तातो यस्य तेन विरिंचिना ।
देवेन गोकुलं नीतो यत्र नन्दो वसूत्तमः ॥ ५१ ॥
एवं सर्वेश्वरं विष्णुं यशोदा पितरं विधेः ।
भर्त्रा सु ( स )वसुदेवेन सह मेने स्वकं सुतम् ॥ ५२ ॥

अवदाता विमुक्ताः स्युस्तेषामपि च नायकम् ॥ ६ ॥

**टिप्पणी**—अथ **स** कृष्णः मधुरायाः सकाशात् **स्वततेन** स्वतातेन **वसुदेवेन । सवसु** सधनं । वसुना वसूत्तमेन नन्देन च सहितं । गोकुलं नीतः । कथं भूतेन **वसुदेवेन** वसुना शृंखलारूपेण दीव्यति गच्छतीति वसुदेवः तेन । क्रीडाशृंखलया बद्धेनाऽपि नानेन स्वसामर्थ्येन नीतः किं तु **स्वततेन** स्वस्मिन् वसुदेवे ततेन व्याप्तेन देवेन हरिणाऽनुगृहीतेन ( तत्प्रेरणयेत्यर्थः ना० ) अथवा आख्यं वसु परब्रह्म तेन सह दीव्यति क्रीडादिसप्तकं करोतीति **अवसुदेवो** ब्रह्मा तेन । **स्वततेन** स्वः स्वतन्त्रो विष्णुः **ततः** तातो यस्य स तथोक्तः । तेन विष्णुपुत्रेण देवेन । **सः** कृष्णः गोकुलं नीतः । एवं सर्वेश्वरं विधेः पितरं विष्णुं भर्त्रा **सवसुदेवेन** सारः **सः** स चासौ **वसुश्चासौ** देवश्चेति सवसुदेवः तेन, सह **यशोदा तत्र** गोकुले **कृष्णं** स्वतनयं स्वकं सुतं मेने । कीदृशं कृष्णं अवदाताः विमुक्तास्तान्नयतीति **अवदातनयः** । तं, मुक्तनायकम् ॥ ६ ॥

(ति०) **अव** अवमे अनुजे **सुदे** सति । सुशब्दप्रातिपादकदे सतीत्यर्थः। कंसायेत्यत्र शेषः । ननु गोकुलं सु इत्यत्र वकारस्यैव सत्त्वात् कथं अवेति पदमिति चेत् । सत्यम् । अकारस्य लुप्तत्वात् । कुतः वष्टिभागुरिमतावष्टम्भात् । भागवतचतुर्थस्कन्धतात्पर्ये वाधिमित्यस्य अवाधिमिति व्याख्यातत्वान्न कुसृष्टिः ।

( भ० ) इतःपरं हरिवंशाद्युक्तं कृष्णचरितं क्रमेण संक्षेपतो दर्शयत्युत्तरश्लोकैः । .... कथाविशेषं सूचयन्नाह । **सुवसुद इति** । सु शोभनं वसु

कररूपं ददातीति सुवसुदस्तस्मिन् । अवे अवमे अनुजे नन्दगोपे बृहद्वना-न्मधुरां गन्तुं यमुनातीरं प्रति आगते सतीति शेषः । अथवा अव इत्येतदेवावर्त्यं अव गताविति धातोः **अवे** आगते सतीति व्याख्येयम् .... अस्यां योजनायां नेत्यस्य स्वत इत्यध्याहृतेनान्वयः । न स्वतः स्वसामर्थ्येन नीत इत्यर्थः .... **नीतोऽवसुदेवेनेति** । अवसुदेवेनेति छेदः । **अः** विष्णुः तदाख्येन **वसुना** धनेन **देवाः** क्रीडाविजिगीषाद्युतिस्तुतिमोदकान्तिगतयो यस्यासौ तथोक्तस्तेन **स्वततेन स्वः** स्वतन्त्रो हरिः**ततः** तातो जनको यस्यासौ स्वततस्तेन विरिंचेन गोकुलं नीतः । तत्प्रार्थनया गोकुलमाजगामेति यावत् । यथोक्तं 'ब्रह्मा प्रणम्याह तमात्मकारण'मिति आरभ्य 'तौ देवकीवसुदेवौ च तेपतुस्तपस्त्वदीयं सुतामिच्छमानौ । त्वामेव तस्मात्प्रथमं प्रदर्श्य तत्र स्वरूपं हि ततो व्रजं व्रज ' ( ता० नि० ११.।२२३—२२९ ) इति ।

( ना० ) **सुगोकुलं** शोभनं गोकुलं प्रति नीतः । कीदृशेन **सुवसुदेवेन** शोभनाः देवाः वसवश्च यस्मात्स तथोक्तः । कश्यपावतारत्वा-त्तस्येति भावः । कुरुपाण्डवपृथग्युक्तिः । .... कीदृशं गोकुलं । **सुवसु** । सु शोभनानि वसूनि यस्मिन्निति वा । **यशोदा वसुदेवेन** सहितेति वा । **वसुषु देवः** उत्तमः द्रोणनामा वसुः तदवतारत्वान्नन्दगोपः तेन सह । सोऽपि कृष्णं तनयं मेने इत्यर्थः । **अवदातनयम्** निर्मलचरित्रम् । .... कीदृशः सः । **अवसुदेवेनः** । **अः** परमात्मैव **वसु** मुख्यं धनं येषां ते **अवसवः** परमैकान्ताः ते च ते **देवाश्च** ब्रह्मादयस्तेषामिनः स्वामीत्यर्थः । विसर्जनीयस्य सत्त्वे तेन स्वेत्यत्र द्विसकारस्को निर्देशः । पक्षान्तरेपु 'अनचि च ' [ ८।४।४७ ] इति द्वित्वेन सकारद्वयमस्त्येव । अथवा **अवसुदे वेनेति** पदच्छेदः । वध्यत इति **वः** तेन बद्धेन वसुदेवेनेत्यर्थः । वबयोरभेदात् । अन्येभ्योऽपि दृश्यत इति वध्यतेर्डः । कस्मिन् सति । **अवः** अवरः कनिष्ठबन्धुर्नन्दगोपः तस्मिन् **सुदे** सुष्ठु धनं गोरसादि धनदे कंसाय दातुमागते सतीत्यर्थः ॥ ८ ॥

**ववृधे गोकुलमध्याद्यो देवो विश्वमद्भुताकुलमध्यात् ।**
**तत्र च पूतनिकाया बधमकरोद्यन्निजाः सुपूतनिकायाः**
**॥ ७ ॥**

( पद० ) ववृधे । गोकुलं । अधि । ( आद्यः । देवः । )
( आ द्योदेवः ) आत् । यः । देवः । विश्वं । अद्भुताकुलं ।
अध्यात् ( अधि । आ । अत् ) तत्र । च । पूतनिकायाः ।
वधं । अकरोत् । यन्निजाः । सुपूतनिकायाः ॥ ७ ॥

## टीका

अज्ञदृष्ट्यैव भगवान्ववृधे सोऽपि गोकुले ॥ ५३ ॥
विष्णु (ष्णो) र्देवोऽन्यथा विश्वमध्यादत्कथमद्भुतम् ।
आकुलं चाथवा तस्माद्गोकुलं ववृधेऽधिकम् ॥ ५४ ॥
अकारवाच्यश्च योऽसौ गोकुलप्रतिपक्षगम् ।
अद्भुतं चाकुलं चापि सर्वमध्याददञ्जसा ॥ ५५ ॥
जघान पूतनां तत्र यस्य भक्ताः स्वभावतः ।
शापतो नीचकायाश्च पूतकाया भवन्ति हि ॥ ५६ ॥
पूर्वं, पुंसां समूहो वा यद्भक्तानां विशुद्ध्यति ॥ ॥ ७ ॥

**टिप्पणी**—स देवः कृष्णः **गोकुलमधि** गोकुले इत्यर्थः । 'अधिशीङ्स्थासां कर्मे'ति अधियोगात्कर्मसंज्ञा । अज्ञदृष्ट्यैव ववृधे न तु स्वरूपापेक्षया कुतः **आत्** विष्णोः उभयत्र भावप्रधानो निर्देशः विष्णुत्वादित्यर्थः । न हि व्याप्त आकाशो वर्धते तद्वत् । अत एव विष्णोरित्युक्तम् । विष्लृ व्याप्ताविति धातुव्याख्यानात् । वृद्धौ विष्णुत्वायोगात् । बाधकान्तरं चाह । **यो देव इति** । स कः **यो देवः** भगवान् **अद्भुताकुलं** अद्भुतं च तत् आकुलं च तत्तथा । एवंभूतं **विश्वम् अध्यात्** । अध्यादत् भक्षितवान् । अध्यादिति अडभावः छान्दसः ' अदः सर्वेषाम् ' [ ७।३।१०० ] इति अद उत्तरस्यापृक्तसार्वधातुकस्याडागमविधानात् । ' सर्वे विधयश्छन्दसि विकल्प्यन्ते ' इति वचनात् । यदि परमात्मा कृष्णो वृद्धिमान् स्यात् तर्हि जगत्संहर्ता न स्यात् भवति च जगत्संहर्ता तस्मान्न वृद्धिमान् । न च विपर्यये पर्यवसाने ( व्याप्तिः यो वृद्धिमान् सः ) जगत्संहर्ता न भवति यथा देवदत्त इति व्यतिरेकव्याप्त्याश्रयणात् । अथवा **आद्विष्णोः** सकाशात् गोकुलं **अधि** अधिकं ववृधे । कृष्णावतारेण गोकुलस्याधिका वृद्धिर्जातेत्यर्थः । कीदृशं अद्भुताकुलं । व्याख्यात-

चरमेतत् । अथवा यो देवः कृष्णः गोकुलप्रतिपक्षगं ( **अगोकुलं** गोकुलं विरुद्धम् ) अद्भुताकुलं सर्वमञ्जसा अध्यादत् पुनरन्वयः । स कृष्णः **तत्र** गोकुले **पूतनिकायाः** पूतनैव पूतनिका स्वार्थे कः '  प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ' [७।३।४४] इतीत्वं । तस्याः वधमकरोत् पूतनां जघानेत्यर्थः । स कः **यन्निजाः सुपूतनिकायाः** यन्निजाः यस्य निजाः यन्निजाः यस्य स्वभावतो भक्ताः शापतो **निर्नीचः** ( निकृष्टः ना. ) **कायो** देहो राक्षसादियेषां ते तथोक्ताः नीचकायाः पूर्वं पश्चाद्भगवदनुग्रहेण **सुपूताः** पूतकाया इति पूतनिकाया भवन्ति । हि प्रसिद्धमेतत् । ' लेभे गतिं धात्र्युचितामित्यादिना पूतनाकंसनरकशिशुपालादिनिग्रस्वभावभक्तानामुर्वरयादीनां सद्गत्युक्तेः । अनेन भक्तानुकम्पित्वं भगवतो वर्णितम् । अथवा यन्निजाः यस्य निजाः यद्भक्ताः **सुपूतनिकायाः** सुपूतः निकायः समूहो येषां ते तथोक्ताः । न च निकाय शब्दस्य ' निवासचितिशरीरोपसमाधानेष्वादेश्च कः ' [ ३।३।४१ ] इति निवासाद्यर्थे साधितत्वात्कथं समूहार्थत्वमिति वाच्यम् । प्रयोगतोऽनुगन्तव्याः शब्दानां शक्तय इति वचनात् समूहार्थत्वमपि द्रष्टव्यम् ॥ ७ ॥

( भ० ) ....**आद्यो देवो** विष्णुः ।........**अध्यात्** । आधिक्येन समन्तात् **अत्** संहर्त्ताऽऽसीत् **पूतनिकामाः** पूतः = शुद्धः ॥ ७ ॥

( ना० ) .... गोकुलमध्ये अततीति **गोकुलमध्यात्** । यो देवो .... **अधि** आधिक्येन **आ** समन्तात् अत्तीति अध्यात् । विचित्रसर्वजगत्संहारक इत्यर्थः ॥ ७ ॥ या. द्यो देवः स्वर्गस्वामी । आ गोकुलं अधि । ईषत् गवा अज्ञदर्ष्टीनां कुलं समूहं इन्द्रियसंमूढजनमधिकृत्य अज्ञदृष्टेयेति यावत् ववृधे ।

**अधुनोच्छकटं लोली पादाङ्गुष्ठेन वातपेशशकटं लोली ।**
**अतनोद्रक्षामस्य स्वाज्ञानाद्गोपिका सदेरक्षामस्य ॥ ८ ॥**

**( पद० ) अधुनोत् । शकटं । लोली । पदाङ्गुष्ठेन । वातपेशशकटं । (टंलो) लोली । अतनोत् । रक्षां । अस्य । स्वाज्ञानात् । गोपिका । सदा । ईरक्षामस्य ॥ ८ ॥**

## टीका

शकटं पातयामास तद्रं रक्षो बभञ्ज ह ॥ ५७ ॥

नैतच्चित्रं यतो विष्णुर्विनाश्य सकलं जगत् ।
शेतेऽनन्तं समादाय तद्भोगे लीन एव हि ॥ ५८ ॥
वातं पिबन्ति ये तेषामीशः शेषः शमात्मकः ।
कटो ह्यास्तरणायासौ रमयत्येव तं हरिः ॥ ५९ ॥
आतपेशोऽथवा सूर्यस्तद्रथं लोलयत्यसौ ।
अकाराख्यस्य वै विष्णो रक्षां सा गोपिकाऽकरोत् ॥ ६० ॥
अज्ञानाद्धि स्वसंबन्धा(द्धा)दीरक्षामस्य सर्वदा ।
ईरः क्षामः कृशो यस्मादीरक्षामस्ततो हरिः ॥ ६१ ॥
स्वः स्वतन्त्रस्तदज्ञानाद्गोपी तं रक्षतीति वा
ईरक्षोऽयमिमां लक्ष्मीं सर्वदा रक्षति प्रभुः ॥ ६२ ॥

अमो ह्यमितसामर्थ्यात्तस्य रक्षाऽन्यतः कुतः ॥ ॥ ८ ॥

**टिप्पणी**–अधुनोदिति क्रियापदश्रवणात्कर्तृपदमध्याहर्तव्यम् । भगवान् कृष्णः पदाङ्गुष्ठेन शकटं प्रसिद्धमधुनोत् । धूञ् कम्पने । पातयामासेत्यर्थः । न केवलमेतावत्, शकटं शं सुखं कटते आवृणोति । कटे वर्षावरणयोरिति व्याख्यानात् । जीवनसुखनिवारकं एवंभूतं कामरूपधरं तद्रक्षो बभञ्ज ह नैतच्चित्रम् । यतोऽ**ली** अश्चसौ लीचेत्यली लीयते सर्वमस्मिन् लापयति सर्वं यस्मिन्निति वा **ली** सर्वसंहर्ता अकारवाच्यो विष्णुः सकलं जगत् विनाश्य स्वं अनन्तं स्वास्तरणरूपं शेषं आदाय तद्भोगे लीन एव श्लिष्ट एव शेते । तात्पर्यकथनमेतत् । **लः** ( अली ) ला आदाने लाति स्वीकरोति स्वास्तरण-रूपमनन्तमिति **लः** । शयनार्थमिति शेषः । कीदृशः **लः अः ली** ली श्लेषण इति धातोः लीनातीति **ली** लीनः शेषभोगे श्लिष्ट इत्यर्थः । **लः ली**ति वा पदच्छेदः । पुनः कीदृशः **वातपेशशकटं लोली** । वातान् पिबन्ति इति वातपाः पिबतेः 'आतोऽनुपसर्गे कः' ३।२।३ इति कप्रत्ययः । 'आतो लोप इटि च' [ ६।४।६४ ] इत्याकारलोपः । वातपानां नागानामीशः स्वामी शेषो वातपेशः स चासौ शं शमात्मकश्चासौ कटश्च आस्तरणरूपश्च स तथा तं लोलयति यमयतीति लोली तन्नियामक इत्यर्थः । वा इत्यथवा आतपेशशकटं लोली आतपानां मनुष्यदृश्यतेजसामीशः सूर्यः तस्य शकटं तद्रथं लोलयति तद्रथनियामकः । 'उरुं हि राजा वरुणश्चकार सूर्यायपन्थामन्वेत वा उ' (ऋ.) । 'रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः' इति श्रुतिः ।

( यजुर्वेदे ) **अस्य** अकाराख्यविष्णोः **गोपिका** यशोदा **रक्षां** ब्राह्मणमुखे'ना-व्यादजोङ्घ्रिमि'त्यादिरूपाम् **अतनोत्** अकरोत् । किं भीतत्वात् । न । **स्वाज्ञानात्** स्वसंबद्धाज्ञानात् स्वः स्वतन्त्रः अयं विष्णुः इत्यज्ञानान्निमित्ताद्वा । कथंभूतस्यास्य । **सदा** सर्वदा **ईरक्षामस्य** ईरः मुख्यवायुः क्षामः कृशः नीचो यस्मात्स तथा तस्य । सर्वान्त्रक्षति सूत्रात्मा वायुस्तमपि रक्षतीत्यर्थः । 'अपाङ्प्राङेति स्वधया गृभीत इति मन्त्रमुदाहृत्य ( ऐतरेय ) उपनिषदा तया प्राणनियामकत्वेन व्याख्यातत्वात्प्रमितोऽयमर्थः । वा इत्यथवा ई लक्ष्मीं रक्षतीति **ईरक्षः** सदा नित्यमुक्तत्वेन तत्स्थापकः । 'मम योनिरप्स्वँन्तःसमुद्र' इति श्रुतेः । स चासौ **अमश्च** अमितसामर्थ्यश्च न विद्यते मा मितिर्मर्यादा देशतः कालतः गुणतश्च यस्य सोऽ**मः** । तथा तस्य ईरक्षामस्य रक्षाऽन्यतः कुतः तस्मात्स्वाज्ञानमेव भगवद्रक्षा करणे निमित्तमित्यर्थः ॥ ८ ॥

**तिम्मणभट्टीयटिप्पणी—शकटंलोली** अत्र मुमागमो बोध्यः । द्वितीया वा । एतस्मिन्पक्षे लोलीति भिन्नं पदम् ॥ ८ ॥

**भगवत्कृता––लः अलीति** वा पदच्छेदः । लाति उपादत्ते इति लः । शेषभोगे अली अलीनोऽव्यक्तः सन्नेव वर्तत इत्यर्थः अथवा **वा, आत-पेशशकटं, लोलीति** छेदः । वाशब्द एवार्थे । तस्य पदाङ्गुष्ठेनैवेति पूर्वेणैव योजना । आतपेशः सूर्यस्तस्य शकटं रथं लोलयतीति तथोक्तः । तथा च कालचक्रे समारोप्य सूर्यरथभ्रामकस्य हरेर्नैतच्छकटनिपातनं चित्रमिति भावः ॥ ८ ॥

**नारायणार्यटिप्पणी**––यो देवः **वातपेशशकटं लोली** वातं पिबन्तीति वातपाः सर्पाः तेषामीशः शेषः स एव शः सुखरूपो मुक्तः कटः । मंचकः तं लोलयति आन्दोलयति तत्र शयानः सन् तत्राङ्गपरिवर्तनेन तमपि चंचलीकरोति पंचाशत्कोटिभूमण्डलमपि यच्छिरसि सर्षपायति सोऽपि यदङ्गपरिवर्तनादिना न सोढुं समर्थस्तस्य शकटलोलनं नाद्भुतमित्यर्थः ॥८॥

**मुखलालनलोला तन्मुखगं जगदचष्ट सालनलोलातत् ।**
**नाध्यैन्मायामस्य जगत्प्रभोः स्व (स्वा) धिकततमायामस्य ॥९॥**

**( पद० ) मुखलालनलोला । तन्मुखगं । जगत् । अचष्ट ।**
**सालनलोलातत् । न । अध्यैत् । मायां । अस्य । जगत्प्रभोः ।**
**स्व (स्वा) धिकततमायामस्य ॥ ९ ॥**

## टीका

मुखं लालयती विष्णोर्मुखे जगदचष्ट सा ॥ ६३ ॥
**सालनं** सारणं तच्च लोलं चातच्च कथ्यते ।
सपालकं चलत्तस्माद्व्यतिरिक्तं च सर्वदा ॥ ६४ ॥
नाध्यगच्छद्धरेरस्य महिमानं जगत्प्रभोः ।
अत्युत्तमोह्यतिव्याप्तो यस्यायामोऽर्भकस्य च ॥ ६५ ॥ ॥ ९ ॥

**टिप्पणी**—सा गोपिका यशोदा **सालनलोलातत्** सालनं सारणं रलयोरभेदात् । सपालकं ब्रह्मादिलोकपालसहितं तच्च तल्लोलं चलत् चञ्चलं एकप्रकारेणानवस्थितं अतच्च तस्माद्धरेरन्यत् सर्वदा तद्व्यतिरिक्तं एवंभूतं **जगत्** । **तन्मुखगं** तस्य विष्णोः कृष्णस्य मुखे गतं वर्तमानं **अचष्ट** अपश्यत् । **सा** गोपिका **अस्य** कृष्णस्य **जगत्प्रभोः** जगदेकस्वामिनो **मायां** महिमानं सामर्थ्यं **नाध्यैत्** नाध्यगच्छत् नाज्ञासीदित्यर्थः । एवं विश्वरूपदर्शनेऽपि तन्महिमानं न सस्मारेति वा । तन्मायामोहितत्वात् । तथा चोक्तं ' प्रायो ज्ञातात्मतत्त्वां पुनरपि भगवानावृणोदात्मशक्त्ये ' ति ( ता. नि. १३. ४. ) किंभूतस्य **स्वधिकततततमायामस्य** अर्भकस्य बालकस्य सतोऽपि स्वधिकः अत्युत्तमः तततमः आतिशयेन ततः आतिव्याप्तः आयामो विस्तारो यस्य स तथोक्तस्तस्य । ' मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ' ( गीता ९.४. ) इत्यादेः ॥ ९ ॥

( भ० ) स्वाधिकतमेति पाठे सु, आ इत्युपसर्गद्वयं ग्राह्यम् ॥ ९ ॥

**तस्य सुशर्माण्यकरो दरिणो गर्गः सदुक्तिकर्माण्यकरोत् ।**
**अवदन्नामानमयं जगदादिं वासुदेवनामानमयम् ॥१०॥**

**( पद० ) तस्य । सुशर्माण्यकरः ( सुशर्माणि । अकरः । ) दरिणः । गर्गः । सदुक्तिकर्माणि । अकरोत् । अवदत् । नामानमयम् । ( नामानं । अयं । ) ( नाम । अनमयं । ) जगदादिं । वासुदेवनामानं । अयं ॥ १० ॥** याद्रु० ॥

## टीका

सुसुखिप्राप्यविष्णुर्यत्करोऽसौ गर्ग ईशितुः ।
शङ्खपाणेः सदुक्तीश्च जातकर्मादि चाकरोत् ॥ ६६ ॥

सुशर्मा विष्णुरण्यो यत्करेणेत्यपि योजना ।
सुशर्माणि च कर्माणि ह्यः (हि, अः) करे यस्य सोऽथवा ॥६७॥
सुशर्माभिः करो यस्य प्राप्योऽसौ गर्ग एवहि ।
सोऽवदद्ध्या ( ध्य· ) नमं नित्यं ( ध्यानगम्यंतं ) यमयन्तं च कारणम् ॥ ६८ ॥
जगतो वासुदेवाख्यमजातमपि कुत्रचित् ॥ ॥ १० ॥

**टिप्पणी**—असौ गर्गः **तस्य** कृष्णस्य किंभूतस्य **दरिणः** दरोऽस्यास्तीति दरी शङ्खपाणेः । **सदुक्तिकर्माणि** सत्यश्चता उक्तयश्च सदुक्तयः सन्नामानि कृष्ण इत्यादीनि, कर्माणि च जातकर्मादीनि च तानि तथोक्तानि तान्यकरोत् । कथंभूतो गर्गः । **सुशर्माण्यकरः** सु सुष्ठु शर्म सुखं येषां ते सुशर्माणः सुखुखिनः तैरण्यः प्राप्यः अण् गतावित्ति धातोः अण्यतेऽसौ अण्यः सुशर्माण्यः सुखुखिप्राप्यः एवंभूतो विष्णुः करे यस्य तत्प्रसादेन सुशर्माण्यकरः। अथवा सुशर्मा सुसुखी विष्णुरण्यः प्राप्यः करेण कर्मणा ज्ञानपूर्वेण यस्य सः तथा । अथवा सुशर्माणि च सुनामानि च नारायणादीनि अणानि कर्माणि । भूम्युद्धरणानि यस्य सः सुशर्माणी स चासावश्च अकारवाच्यश्च सः सुशर्माण्यः करे कर्मणि उद्देश्यो यस्य सः । अथवा सुशर्मभिः सुक्षत्रिययादवैः अण्यः प्राप्यः करः पूजारूपो यस्य स तथा यादवपूज्यः यादवपुरोहित इत्यर्थः । तदुक्तं ' गर्गः शूरसुतोक्त्या व्रजमायात्सात्वतां पुरोधाः सः ' [ ता. नि. १३.१ ] इति । स गर्गः **वासुदेवनामानं** वासुदेवाख्यं कृष्णं । **नामानमयम्** । मननं मानं मनसा चिन्तनं ध्यानमिति यावत् । न मानं अमानं अध्यानं बहिश्चित्तता । तेन मा ज्ञानं यस्य सोऽमानमः न अमानमः नामानमः द्वै नञौ प्रकृतमर्थं गमयत इति हेतोः ध्यानैकगम्यः यच्छाति नियच्छति जगदिति **यः** जगान्नियामकः । नामानमश्चासौ यश्चेति नामानमयः तं तथा । **जगदादिं** जगतः आदिं कारणं । तथा **अयं** एति याति वा शरीरमिति यः इणो यातेर्वा क्रमेण ' एरच् ' [ ३।३।५६ ] इति अच् यणादेशः यातेः के लोपे च कृते य इति रूपसिद्धिः । **न यः** जनिमानिति अयः तं अजातमपि पूर्वोक्तविशेषणसमुच्चयेऽपि शब्दः । कुत्राचिदपि कस्मिन्नवतारे इति वा । **अवदत्** । उक्तवान् । तदुक्तं ' अजायमानो बहुधा विजायते ' । ' वसुदेवसुतो नाऽयं नायं गर्भेऽवसत्प्रभुः । नाऽयं दशरथाज्जातो न चापि जमदग्नितः । ' नित्यानन्दस्वरूपोऽयं

क्रीडते नित्यदर्शन ' इति ॥१०॥ ( ति० ) **अनमयं** । नास्ति नमः नमनं यस्य सः अनमः । नमतीति नमः न नमः अनम इति वा । अनमश्चासौ यः यमनश्च स तथा ॥ १० ॥ नियामकश्च ( भ० ) या०

(ना०) **सुशर्माण्यकरः** सुशर्मणा पूर्णसुखेन विष्णुनाऽण्यौ प्राप्यौ 'अण् गतौ' करौ हस्तौ यस्येत्यर्थः । स्वकरयुगेन बालकं धृतवानित्यर्थः । सुशर्माणि कर्माणीति वा । तत्कर्मकर्तुः स्वस्य मोक्षप्राप्तिर्भवतीत्यर्थः । अः विष्णुः करे यस्येत्यकरः इति ।....जगदादिमित्युक्त्या वसुदेवापत्यत्वनिमित्तो न वासुदेव-शब्दोऽस्य किं तु सर्गाद्यकाले वासुदेवात्मकत्वादित्युक्तं भवति । तदेतदाह । **नामेति** । श्रुत्यादिप्रसिद्धमेतदित्यर्थः । कीदृशम् **अनमयं** । जगच्चेष्टनादि-व्यापारप्रचुरम् । अनमाः अनम्याः दुर्धर्षा अपि दैत्यादयस्तेषां यन्तारं वा । अनमं नमनानिच्छुजीवं याति प्राप्नोतीति वा कमपि नमयतीत्यर्थः । **अनं** चेष्टकं **अयं** शुभं मङ्गलरूपं वा । अयः शुभावहो विधिरित्यभिधानात् ॥१०॥

**तस्य सखा बलनामा ज्येष्ठो भ्राताऽथ यन्निजाबलना मा ।**
**यस्य च पर्यङ्कोऽयं पूर्वतनो विष्णुमजसपर्य कोऽयम्॥११॥**

**( पदं ) तस्य । सखा । बलनामा । ज्येष्ठः । भ्राता । अथ । यत् । निजाबलना मा । (अमा) यस्य । च । पर्यङ्कः । अयं पूर्वतनः । विष्णुं । अजसपर्य कोऽयम् ( कः । अयं । ) ॥ ११ ॥**

## टीका

यः सखा तस्य च ज्येष्ठो भ्राता स बल ईरितः ॥६९॥
गर्गेणैव सखित्वं तत्प्रियत्वान्नो समत्वतः ।
अवताराग्रजत्वात्तु ज्येष्ठत्वं नोत्तमत्वतः ॥७०॥
यदावरणरूपा मा जगन्माताऽप्यनन्तधा ।
स्वयं च यस्य पर्यङ्कः कोऽयं ब्रह्मार्चितं प्रति ॥ ७१ ॥ ॥ ११ ॥

**टिप्पणी—तस्य** कृष्णस्य **सखा** तथा **ज्येष्ठो भ्राता बलनामा** बल इति नाम यस्य स तथा गर्गेणेरित इति शेषः । कृष्णसखत्वं नोपकर्तृत्वेन किं तु तत्प्रियत्वेन तत्प्रीतिपात्रत्वेन । तथा ज्येष्ठभ्रातृत्वं च नोत्तमगुणत्वेन किंत्ववताराग्रजत्वेनावगन्तव्यम् । कथंभूतस्य तस्य **यन्निजावरनामा** ववयो

रलयोश्च सावर्ण्यात् । **मा** लक्ष्मीः यस्य ( शेषस्य ति० ) निजा चासौ आवरणा आव्रियते अनेनेति आवरणा । ङीवभावश्छान्दसः । यस्य यवनिका-रूपेत्यर्थः । तथोक्तम् । 'माया यवनिकाच्छन्ने'ति । कीदृशी **मा अमा** न विद्यते मा मितिर्यस्याः सा अनन्तधा । अनन्तरूपिणी सती भगवत्परि-चारिकेत्यर्थः । तदुक्तम् । 'श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः । ' 'रमेव बहुरूपिणीति च । पुनस्तस्य कस्य । **अयं** बलनामा **ज्येष्ठो भ्राता पूर्वतनः** मूलरूपी शेषः । **यस्य च पर्यङ्को** मञ्चकः । न हि स्वयं यस्य पर्यङ्कत्वेन मूलरूपे परिचारकः स एव तदवतारकृष्णापेक्षया शेषावतारो बलस्तस्मादुत्तमो भवितुमर्हति । कृष्णस्य परब्रह्मत्वात् । स्वस्य शेषत्वात् । शेषब्रह्मणोश्चानन्तानन्तगुणतस्तारतम्यवत्वात् तारतम्यस्य च स्वाभाविकत्वेन कदाप्यनपायात् । तदुक्तम् । 'न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप ' इत्यादौ । यस्य च पर्यङ्कोऽयं शेषः सखा बलनामा । यदावरणा च रमा । सोऽयं कृष्णः क इति च जिज्ञासा-यामाह । **यं विष्णुं** वदन्तीति शेषः । कथंभूतं यं **अजसपर्यम्** । अजेन सपर्यते स तथा अथवा अजात्सपर्या पूजा यस्य स तथा, तं ब्रह्मार्चितं पुनः कीदृशम् । **कोऽयं** ब्रह्माणं वायुं वाऽवति रक्षति **को** ब्रह्मा सूत्रात्मा वायुश्च ऊयते कन्यायां सूत्राणीव ग्रथ्यते यस्मिन्निति वा कौः स चासौ यच्छतीति यश्च स तथा तम् । ब्रह्मवाय्वोः रक्षकं तदाधारं वा पूर्वव्याख्याने अवतिरूपता उत्तरव्याख्याने ऊयतिरूपता द्रष्टव्या । फलितमाह । **यमिति** । स्वामिनं तद्रक्षकत्वेन तदाधारत्वेन च ॥ ११ ॥

( भा० ) **यन्निजावलना** यस्य निजावरणरूपा स्वाभाविकपरिवार-रूपा । कृष्णं प्रति **अयं** ( बलः या० ) ( शेषः ति० ) **कः** ( किं शब्द आक्षेपे या० ) न कोऽपि नोत्तमो नापि सम इति भावः ॥ ११ ॥

(ना०) **ज्येष्ठो भ्राता सखा** च । न च पौण्ड्रकादिवत् भ्रातृमात्र-मित्यर्थः ।.... **यन्निजावरणा** । **मा** । मा लक्ष्मीः प्रकृतिर्यदीयस्वरूपस्यावरणं यया सा । बहुव्रीहित्यादनुपसर्जनाधिकारविहितः टिन्निमित्तकोऽपि न भवति । ....प्रकृतिबद्धत्वान्नायं, तदुत्तमस्य नित्यमुक्तत्वादिति भावः ॥ ११ ॥

## मूलं

**तेन हतो वातरयस्तृणचक्रो नाम दितिसुतोऽवातरयः ।
हरमाणो बालतमं स्वात्मानं कण्ठरोधिनाऽबालतमम् ॥१२॥
( पदच्छेद ) तेन । हतः । वातरयः । तृणचक्रः । नाम । दितिसुतः । अवातरयः । हरमाणः । बालतमं । स्वात्मानं कण्ठरोधिना । अबालतमम् ॥ १२ ॥**

## टीका

तेन कृष्णेन निहतो वायुवेगो दितेः सुतः ।
अवातरय एवासौ भूत्वा श्वासनिरोधतः ॥ ७२ ॥
हरमाणोऽणुदेहं च स्वतन्त्रात्मानमम्बरे ।
अवाट् च सोऽतमश्चेति ह्यबालतम ईरितः ॥ ७३ ॥
स्वतो न वाहको यस्य व्याप्तं मानं च यस्य तम् ॥ ॥१२॥

**टिप्पणी–तेन** कृष्णेन **तृणचक्रः** तृणावर्तो नाम **दितिसुतः** दितेः सुतः ' षष्ठ्या आक्रोशे ' [ ६।३।२१ पा. ] इति षष्ठ्या अलुक् । भिन्नं वा पदम् । **हतो** निहतः । कथंभूतः । **वातरयः** वातस्य रय इव रयो यस्य स तथा वायुवेग इत्यर्थः । पूर्वमिति शेषः । पुनः कीदृशः । **कण्ठरोधिना** कण्ठं रुणद्धीति तेन कृष्णेन । **अवातरयः** न विद्यते वातरयो वायुवेगो यस्य स तथा । अवातरय एवासौ भूत्वा स्थितः इति स्थितपदाध्याहारेण समानकर्तृकता द्रष्टव्या । हत इत्यनेन समानकर्तृकत्वाभावात् । हननक्रियाकर्ता कृष्णः तत्कर्म दैत्यः न तु तत्कर्ता, भवनक्रियां प्रति तु कर्ता तथा च समानकर्तृकत्वाभावात् ( को प्राप्तिः ? ) स्थितपदाध्याहारे तु स्थितिभवनयोः समानकर्तृकत्व (त्वा)लाभात् क्रिययोः पौर्वापर्यसंभवात् न काप्यनुपपत्तिः । (कोपपत्तिः) कण्ठनिरोधत इति पाठापेक्षया श्वासनिरोधत इति व्याख्यानं सुलभं द्रष्टव्यम् । तथात्वेऽवातरय एव इति प्रतिषेधात् कस्मादित्याकाङ्क्षामुत्थाप्य तन्निवारकतया योजनीयम् । कीदृशो दितिसुतः । **बालतमं** अणुदेहं । **स्वात्मानं** स्वश्चासावात्मा चेति, स्वात्मानं स्वतन्त्रात्मानं हरमाणः अम्बर इति शेषः । कथंभूतं स्वात्मानं । **अबालतमम्** वहतीति वाट् न विद्यते वाट् स्वप्रसादेन विना स्वसामर्थ्येनैव वाहको यस्य सोऽवाट् वाहकरहितः **अता** ( अत सातत्यगमन

SRI VE
GRA



इति धातोः भ० ) व्याप्ता **मा** मानं यस्य सोऽतमः अवाट् चासावतमश्चाव[१]-ऽतमः । डलयोरभेदात् ळ इति [१]श्रुतिः । तम् । गरुडादीनां वाहकत्वं तु तत्प्रसादेनैवेति भावः ॥ १२ ॥

( ना० ) न ताम्यति ग्लायतीत्यतमः । तमु ग्लानाविति धातोः तेन दैत्येन दुर्वाह्यः भयकम्पादिग्लानिरहितः अवाट्चासावतमश्चेति **अबालतमः** तम् । ववयोर्डलयोश्चैक्यात् अग्निमीळ इत्यादिवत् ॥ १२ ॥

**सोऽवनिमध्ये रङ्गन्नरिदरयुग्वालरूपमध्येरंगन् ।**
**अमुषन्नवनीतमदः स्व(स)गोकुले गोपिकासु नवनीतमदः ॥१३॥**

**(पदच्छेद) सः । अवनिमध्ये । रङ्गन् । अरिदरयुक् । बाल-रूपं । ( वाट् । अरूपं । ) अधि । आ । ईरं । गन् । अमुषत् । नवनीतं । अदः । स्व (स) गोकुले । गोपिकासुनवनीतमदः । ( गोपिकासुनवनी । तमदः । )**

## टीका

बालरूपं ततोऽधीति चा ईरमिति च द्वयम् ॥ ७४ ॥
गन्नित्येव पदच्छेदस्तत्रेत्थं योजना मता ।
स चारिदरयुग्विष्णुर्वालरूपं समीरणम् ॥ ७५ ॥
अधिरुह्य समन्ताद्रन्कौ रङ्गन्नमुषध्यदः ( त्पयः ) ।
वाहकोऽसावरूपश्च ( स्य ) बालरूपः समीरणः ॥ ७६ ॥
शुनाश्चिच्छेपमितिवदागन्नित्यथवा पदम् ।
अथापि स्तूयते विष्णुर्गोपिकाभिः सुरैरपि ॥ ७७ ॥
नित्यं प्राप्तपरानन्दो नवनी स्तुतिमान्मतः (रात्मनः) ॥ ॥१३॥

**टिप्पणी**—**अरिदरयुक्** चक्रशङ्खपाणिः **सः** कृष्णः **बालरूपम् ईरं** समीरणं **अधि** अधिरुह्य । कथमिदं लभ्यते । इत्थम् । उपसर्गाः क्रियासं-निधाने तद्विशेषका भवन्ति असंनिधाने तु ससाधनां क्रियामाहुः यथा प्राचार्यः प्रान्तेवासीत्यादौ । **आ** समन्तात् **गन्** गच्छन् छान्तादेशाभावश्छान्दसः । तदनुवादश्चायमित्यदोषः । **अवनिमध्ये** कौ रङ्गन् जानुभ्यां भूमिं घर्षयन्

ळ. टि. १ श्रवणम्

**अदः** प्रसिद्धं नवनीतं उपलक्षणमेतत्। नवनीतादि। अत एव पय इत्युक्तम्। अथवा कार्यकारणवाचिनां शब्दानां प्रयोगमभिप्रेत्य पय इत्युक्तम्। तथोक्तं महाभाष्ये। 'संप्रसारणे संप्रसारणमित्यत्र काकाज्जातः काकः श्येनाज्जातः श्येनः तद्वत्संप्रसारणाज्जातः संप्रसारण' इति। अथवा योगवृत्तिमभिप्रेत्य पय इत्युक्तम्। तथाहि पीयते तत्पयः। पानं च द्रवद्रव्यस्य नवनीतं च विलय(लाप) नेन पीयते उभयथापि पयः शब्दो नवनीतवाची।अत एव भगवताऽऽचार्येणोक्तम्। स क्रुध्यतां नवनीतादिमुष्णंश्चचार देवो निजसत्सुखाम्बुधिः' इति। **अमुषत्** पुषादित्वादङ्। सोपस्कराणि वाक्यानि भवन्तीति न्यायात्। कं बालरूपमीरम् इत्याकाङ्क्षामुत्थाप्य यः **अरूपं** प्राकृतरूपरहितं विष्णुं वहतीति **वाट्** अरूपस्य वाहकः। कर्तृकर्मणोः कृतीति कर्मणी षष्ठी। अथवा शुनश्चिच्छेपमितिवत् 'शुनश्चिच्छेपं निदितं सहस्रादि'ति मन्त्रे शुनःशेपं इति पदच्छेदवत् **एरंगन्** इत्यत्र **आ, गन्, ईरं,** इति पदच्छेदः कर्तव्य इत्यभिप्रायः। प्रयोजनं तु पूर्व-व्याख्याने 'व्यवहिताश्च' [१।४।८२] इति सूत्रानुसरणेन व्यवहितान्वयः। अस्मिन्पक्षे तु न सूत्रानुसरणं व्यवधानस्यैवाभावादिति सूचनम्। अथापीत्यनेन अज्ञलोकदृष्टया नवनीतादिचौर्यं निन्द्यमिति ध्वनयति। ज्ञानदृष्टया तु नवनीता-दिचौर्यस्य स्वयोग्यताधिकपुण्यह्रासकारणक्रोधहेतुत्वेन प्राशस्त्यमुक्तं भगवताऽऽ-चार्येणैव। अथापि एवमपि। कीदृशः कृष्णः। **स्वगोकुले** स्वाधीने गोकुले स्वसेवार्थमवतीर्णो(र्णे) वा गोकुले **गोपिकासुनवनीतमदः**। नूयते स्तूयतेऽनया सा नवनी स्तुतिः। णु स्तुतौ इति धातोः करणे ल्युट् टित्वान् ङीप्। शोभना चासौ नवनी च सुनवनी गोपिकानां सुनवनी गोपिकासुनवनी तया इतः प्राप्तः मदः हर्षो यस्य स तथा। मदी हर्षे इति धातोः। अथवा गां स्वर्गं पान्तीति गोपाः स्वर्गपालाः ब्रह्मादयः तेषां पङ्क्तयो गोपिकाः। तत्समूहा इति यावत्। तासां नवनी तया इतः मदो यस्य स तथा। यदुक्तं 'गोपिकाभिः सुरैरपि। नित्यं प्राप्तपरानन्दो नवनी स्तुतिरात्मनः' इति। अथवा श्रूयत इति पदाध्याहारेणान्वयः ॥१३॥

(ति०) **तमदः** तः ततः मदः आनन्दो यस्य स इति ॥१३॥

( भ० ) एवं निहितनवनीतमोषणेऽपि **गोपिकासुनवनी**। गोपिकानां सु शोभनं नवनं स्तवनमस्यास्तीति तथोक्तः गोपिकाभिः स्तुत एवासीदिति भावः। .... .... नित्यप्राप्तपरमानन्दस्य नवनीतमोषणादिकं

केवलळीलारूपमेवेति भावेनोक्तम् । **इतमद इति** । इतः नित्यं प्राप्तो मदःसुखं यस्यासाविति ॥ १३ ॥

( ना० ) **सोऽवनिमध्ये अरिदरयुक्** चक्रशंखपाणिः यः **बाल-रूपं** सूत्रात्मना स्वपुत्रम् ईशं मुख्यप्राणं **अधि** अधिरूढः **आ** समन्तात् सर्वत्र यथेष्टं गच्छतीति **गन्** गमेर्विशः क्विपि अनुनासिकलोपः ' मो नो धातोः । ' [ ८।२।६४ ] इति मस्य नः ' वरदो वायुवाहन ' इत्युक्तत्वात् । ........ **गोपिकासु नवः** अभिनवः **नीतः** प्रापितः **मदः** कामोन्मादो येनेत्यर्थः । गोपिकानां शोभनं नवन स्तवनं यस्मिन्निति **गोपिकासुनवनीति** भिन्नं पदं गोपीभिः स्तूयमान इत्यर्थः । तमं ग्लानिं द्याति नाशयतीति **तमदः** । नवं स्तवं नयन्तीति **नवन्यः** सेनानीशब्दवत् । तेषां **तमदो** ग्लानिहर्तेत्येकं वा पदम् । **तः** ततः **मदो** यस्येति वा । पूर्णानन्द इत्यर्थः ॥ १३ ॥

**तन्माता कोपमिता तमनुससारात्मवादवाको ( [1]आत्मवाको ) पमिता । जगृहे सानमनं तं देवं तच्चिन्तयैव सानमनन्तम् ॥१४॥**

**( पद० ) तन्माता । कोपं । इता । तं । अनुससार । आत्म-वादवादकोपमिता । जगृहे । सा । अ ( आ ) नमनं । तं । देवं । तच्चिन्तया । एव । सानं । अनन्तं ॥ १४ ॥**

## टीका

अङ्गैः कृष्णे हि ( ऽति ) दोषोक्तौ सकोपा तेषु गोपिका ॥७८॥
ससारानुहरिं दोषराहित्यस्था ( ख्या ) पनाय हि ।
यथा कर्मादिवादांस्तु परित्यज्यात्मवादिनी ॥ ७९ ॥
निखिला (लं) (वेदवागेनं) (गमनं) वेदा नमन्त्येनं निर्दोषानन्त-
सद्गुणम् । जगद्व्यापारसाहितमन्यानमनर्माश्वरम् ॥ ८० ॥
**जग्राह** जगृहे सैवं गच्छन्तं पुरतो हरिम् ॥ ॥ १४ ॥

( टि० ) अङ्गैः कृष्णेऽतिदोषोक्तौ **कोपं इता** तेषु सकोपा **तन्माता** तस्य कृष्णस्य माता यशोदा **तं** हरिं **अनुससार** । किमर्थं दोषराहित्यख्यापनाय हि । स्वस्येति शेषः । सा गोपिका यशोदा पुरतो [1] गच्छन्तं हरिं **जगृहे** जग्राह । किंभूता **आत्मवादवाकोपमिता** । कर्मादि-

१ **अनन्तं** अनतीत्यनत् तम् । (याद्०) ( आत्मनो वाकः वेदः )

वादांस्तु परित्यज्यात्मनः परमात्मनः वादः शक्तितात्पर्याभ्यां प्रतिपादनं यया सा आत्मवादा सा चासौ वाका वाचा आत्मवादवाका तया उपमिता उपमेयभावं प्राप्ता । अथवा **आत्मवादवाका उपमिता** इति द्वे पदे । वाचेति चकारस्थाने ककारः चकारस्य चप्रतीकत्वात् । विग्रहस्तावत्पूर्ववदेव । तया उपमिता । कोऽर्थः । यथा श्रुतिः कर्मादिप्रतिपादनेनालंबुद्धिमप्राप्य स्वस्यालंबुद्धिसंपादकं हरिं विषयमवलम्ब्य कृतार्था भवति । 'सर्वे वेदा यत्पदमामनन्ति' 'तमेवैकं' जानथ आत्मानम् । अन्यावाचो विमुञ्चथा-मृतस्यैष सेतुरि'ति । तथा यशोदा स्वसुतविषयेऽतिदोषोक्तौ अज्ञान्संबोधयन्ती एकवारं द्विवारं क्षन्तव्यमिति । अनन्तरं कियद्वारं क्षन्तव्यं त्वया न तर्ज्यतेऽतोनयमयं करोति त्वया एकवारं तर्जनीयः अनन्तरं कथं करिष्यति त्वमेववावलोकयेति स्वस्य प्रोत्साहने कृते तं तर्जयितुं प्रवृत्ता तं धावन्तं गृहीतुमसमर्था अनन्तरं पुत्रस्य मातृवश्यतां दर्शयितुं स्वयमेव स्थितं जग्राहे-त्यर्थः । कीदृशं तं । **आनमनं** आ समन्तान्नम्यते शब्द्यते वेदैरित्यानमनस्तम् । निखिला वेदा नमन्ति निखिलवेदप्रतिपाद्यम् । पुनः कीदृशम् । अनमनं न विद्यते नमनं नीचीभवनं यस्य स तथा तम् । दोषी नीचो भवति तथा अल्पगुणश्च । भगवांस्तु निर्दोषः तथानन्तसद्गुणश्चेति तात्पर्यार्थः । पुनः कीदृशम् । **सानम् । अनन्त**मिति वा पदच्छेदः । सानमित्यस्य व्याख्या जगद्व्यापारसहितामिति । अननं चेष्टनं आनः जगद्व्यापार इति यावत् । तेन सहितम् । **अनन्तम्** देशतः कालतो गुणतश्च, तद्व्याख्यानं वा अनन्तसद्गुणामिति । देशकालाभ्यां व्याप्तेरपि गुणत्वात् । अनमनमित्यस्य व्याख्यानान्तरं **अन्यानमनमिति** स्वाधीनमित्यर्थः । तस्य तात्पर्यमश्विरामिति । नहीश्वरः पराधीनो भवति ईश्वरत्वव्याहतेः । न चाग्राह्यं परमात्मानं यशोदा कथं जगृह इत्यत आह । **तच्चिन्तयैवेति** । तदिच्छयैव न तु स्वसामर्थ्ये-नेत्यर्थः ॥ १४ ॥

( ना० ) **अनन्तम्** विश्वं रमाब्रह्मादि जगत् तेनैव **सानं** अननं आनः तेन सहितं । यदिच्छयैव विश्वं जीवति चेष्टते च इत्यर्थः ।

**अथ सान्तरितामानं विष्णुं विश्वोद्भवं सदान्तरितामानम् ।**
**अनयद्दामोदरतां योऽरमयत्सुन्दरीं निजामोदरताम् ॥ १५ ॥**

**(पद०) अथ । सा अन्तः । इता । अमानम् । (अन्तरितामानं)**

**विष्णुं विश्वोद्भवं । सदान्तरितामानं । अनयत् । दामोदरतां । यः । अरमयत् । सुन्दरीं । निजामोदरतां ॥ १५ ॥**

## टीका

तदिच्छयैव साऽथान्तः प्राप्ताऽज्ञानं हि गोपिका ॥ ८१ ॥
व्याप्तं पूर्णबलं सर्वप्रणेतारं च सर्वदा ।
अस्योद्भवादिकर्तारं यस्यान्तरुदरे स्थिताः ॥ ८२ ॥
आ च मा च तथाऽनश्चान्तरितामान एव सः ।
यद्वा यस्योदरे विश्वमारमाप्राणमार्पितम् ॥ ८३ ॥
एवमन्तरितामानं बन्धायोग्यं च सर्वदा ।
दामोदरत्वमनयन्मानं प्राप्ताऽमुना हि सा ८४ ॥
बध्नाति या गुणैस्त्रेधा देवदानवमानवान् ।
साऽपि तद्गुणबद्धा मा को वै बध्नाति तं प्रभुम् ॥८५॥ ॥१५॥

**टिप्पणी**—तच्चिन्तयैवेत्यनुवर्तनीयम् । तदिच्छयैव भगवदिच्छयैव **अन्त**र्मनसि **अमानं** अज्ञानं साक्षात्परब्रह्मेति ज्ञानाभावं **इता** प्राप्ता यशोदा **अथ** करग्रहानन्तरं तं कृष्णं **दामोदरतां** दाम उदरे यस्य स तथा तस्य भावस्तत्ता ताम् । **अनयत्** प्रापयामास । दाम्ना बबन्धेत्यर्थः । कीदृशं तं कृष्णम् । **विष्णुं** वेवेष्टीति विष्णुः विष्लृ व्याप्ताविति धातोः व्याप्तः तम् । अनेन बन्धायोग्यत्वमुक्तम् । न हि व्याप्तो बन्धयोग्यः व्याहतेः । [1]वर्णाविभक्त्यापि अर्थान्तरमाह । पूर्णबलं सर्वप्रणेतारं च सर्वदेति । **वि**र्विशिष्टः **ष**ः प्राणो बलं यस्य तथा । विर्विशिष्टः प्राणो विशिष्टव्यापारो यस्य । अन चेष्टायामिति धातोः । णकारो बलं षकारः प्राण आत्मेति श्रुतेः । अथवा षकार एव प्राणवाची तथा श्रुतेः षश्च णश्च षणौ विशिष्टौ षणावस्य त[2]च्छीलो विष्णुःषकारस्याकारलोपः (स्तथात्वकारणौ यो) निरुक्तत्वात् । णकारस्थालोपस्तु[2] उस्यार्धधातुकत्वेन[3] 'अतो लोप' [६।४।४८] इत्यनेन भविष्यति । एवं व्याख्यानेऽपि बन्धायोग्यत्वमुक्तं भवति । न हि पूर्णबलो बन्धयोग्यः । नापि सर्वनियामकः । व्याहतेरेव । पुनः कीदृशं । **विश्वोद्भवम्** । उद्भवशब्देन स्थित्यादिकमपि लक्ष्यते । अस्योद्भवादिकर्तारं । विश्वस्योद्भवो यस्मादिति विग्रहः । अनेनापि बन्धायोग्य-

१ वर्णानां विभजनेन. २ ताच्छील्ये उप्रत्ययः (ति०) ३ अकारलोपः

त्वमुक्तं भवति । न हि बन्धभाजि संसारमोचकत्वं घटते । पुनः कीदृशम् । **सदान्तरितामानम्** । **आ** च ब्रह्मा च ( आकारस्तु प्रजापतिः ) मा च लक्ष्मीश्च अनश्च प्राणश्च ते आमानाः सदा अन्तरिताः उदरे स्थिताः आमाना यस्य सोऽन्तरितामानः तन् । अनेन प्रकृतिमहदहंकारादिसर्वावरणसहितं जगत् उदरे तिष्ठतीत्युक्तं भवति । तेनापि बन्धायोग्यत्वमुक्तम् । अथवा मा च अनश्च मानौ मानाभ्यां आ आमानं आरमाप्राणं । सदान्तरितं आमानं विश्वं यस्य स तथा तमिति । तं कं **यो निजां सुन्दरीं** प्रियां लक्ष्मीं **अरमयत्** । स्वगुणैर्ज्ञानानन्दादिभिर्बध्नाति । कां निजां यां **निजामोदरतां** अरमयत् । गुणैस्त्रेधा देवदानवमानवान् बध्नाति सार्वकालिके लट् नेनिजतीति **निजाः** शुद्धाः सात्त्विकाः ब्रह्मादयो देवाः । णिजिर्शौचे इति धातोः । मा न विद्यते सम्यक् ज्ञानं येषां ते **अमाः** मिथ्याज्ञानिनो दैत्याः उदरं संशयो येषां ते **उदराः** अर्शआद्यच् । ' उदरं संशयः प्रोक्त ' इति वचनात् । मिश्रज्ञानिनः निजाश्च अमाश्च उदराश्च निजामोदराः तेषां समूहो निजामोदरता योगविभागात्तल् । तामरमयत् । श्रीरूपेण सत्त्वगुणेन ब्रह्मादिसात्त्विकान्वबन्ध । तदुक्तं श्रीदेव-बन्धिका प्रोक्तेत्यादौ । किमुक्तं भवतीत्यत आह । शापतः ( शयानः ) सृतित-श्चान्यान्मोचयन्नहिबन्धभाक् । उक्तवक्ष्यमाणशेषोऽयं विश्वोद्भवमित्यत्र सृतिमो-चकत्वस्योक्तत्वात् । अथवा वक्ष्यमाणशेष एव । तत्र शापसृतिमोचकस्योक्त-त्वात् । अथवा या **निजा मा उदरताम्** । **अरमयत्** तां सुन्दरीं यो रमयति । **उदरतां** उद्गता अरेभ्यो दोषेभ्य इति **उदराः** ब्रह्मादयः तथा उद्गता अरान् दोषान् ते **उदराः** दोषिणो दैत्यादयः तथा उदरे कर्मणिरताः **उदरा** मध्यमा उदराश्च उदराश्च उदराश्च उदरास्तेषां समूहो **उदरता** ताम् । देवमानुषदानवान् अरमयत् सत्त्वादिगुणैरिति शेषः । तदुक्तं 'सत्त्वं सुखे संजयति रजः कर्मणि भारत । ज्ञानमावृत्य तु तमः प्रमादे संजयत्युतेत्यादौ । एवं-भूतामपि सुन्दरीं योऽरमयत् स्वगुणैर्बबन्ध स कथं दाम्ना बध्यते इति भावः । **स्वेच्छयैव** स्वस्येच्छयैव दामोदरशब्दनिरुक्तये क्रीडार्थं व्यापकत्वाद्बन्धायोग्यत्वं प्रदर्श्य अनन्तरं एकवत्सपाशकान्तरं भगवान् प्राप्तोऽभूदिति तात्पर्यार्थः । तदुक्तं भगवताऽऽचार्येण 'समस्तदामसंचयः सुसंधितोप्यपूर्णताम् । ययावनन्त-विग्रहे शिशुत्वसंप्रदर्शके ' इति । तथा ' स (एव) एकवत्सपाशकान्तरं गतोऽ-खिलंभरः ' [ ता. नि. १३.१७ ] इति । कथंभूता यशोदा **मानं** पूजां पूज्यत्वं **इता** प्राप्ता अमुनेति शेषः । कथं एकवत्सपाशकान्तरं गतत्वात् ॥ १५॥

( ति० ) यद्वा **अन्तरितं** व्यवहितं **आ** सम्यक् **मानं** परिमाणं यस्येति तम् ॥ १५ ॥

( भ० ) अथवा अन्तः । इता । मानन् । इति पदच्छेदः । अन्तः सर्वान्तः प्रेरकेण दामान्तः स्थितेन वा । दामबद्धेनेति यावत् । अनेन कृष्णेन मानं इता प्राप्ता । सुतानां मातृवश्यताधर्मप्रदर्शनाय वन्धायोग्योऽपि यदा यशोदया बद्धस्तदा तेन सीमानं प्राप्तेत्यर्थः ।....**योऽरमयदिति । अमरयदिति** पाठे नित्यमुक्तामकरोदित्यर्थः ॥ १५ ॥

**चक्रे सोऽर्जुननाशं प्राप्नोति यत्स्मृतिः सदार्जुनना शम् ।**
**तौच गतौ निजमौकस्तेनैव नुतेन यन्निजा ( जोऽ ) निजमोकः ॥ १६ ॥**

**( पद० ) चक्रे । सः । अर्जुननाशं । प्राप्नोति । यत्स्मृतिः । सदार्जुनना । शम् । तौ । च । गतौ । निजं । ओकः । तेन । एव । नुतेन यत् । निजा (जः।अ) निजमोकः ॥१६॥**

**टीका**

शापतः स्तिमितश्चान्यान्मोचयन्नहि बन्धभाक् ।
चक्रे सोऽर्जुननाशं यद्यत्स्मर्ता धवलः पुमान् ॥ ८६ ॥
शुद्धः सुखमवाप्नोति धवलोऽर्जुन उच्यते ।
तद्वृक्षगौ च यौ देवौ नारदस्य प्रसादतः ॥ ८७ ॥
एष्यत्कृष्णपदस्पर्शं स्मरन्तावु ( र्शम्मरणावु ) पलभ्य तम् ।
स्तुत्वा तस्य प्रसादेन स्वं स्थानं स्वर्गतौ हि तौ ॥ ८८ ॥
चशब्दात्तत्र यौ दुष्टौ स्वमोको निरयं गतौ ।
निजो हरेस्तदीयः स्यादनिजस्तद्विरुच्यते ॥ ८९ ॥
भगवत्क्रिययैवैतद्यन्निजानिजमोचनम् ॥ १६ ॥

**टिप्पणी**—सः कृष्णः **अर्जुननाशं** अर्जुनवृक्षनाशं चक्रे । अर्जुनयोर्नाशमिति विग्रहः । स कः । **यत्स्मृतिः** यस्य कृष्णस्य स्मृतिः स्मरणं यस्य स यत्स्मृतिः । यत्स्मर्ता । **अर्जुनना** अर्जुनश्च धवलश्चासौ ना पुमांश्च अर्जुनना सात्त्विको जीवः **शं** शुद्धं सुखं स्वरूपसुखं प्राप्नोति । आवरणनाशेन व्यक्तमनुभवति । संसारेऽपि सुषुप्तौ स्वरूपसुखाविर्भावेत तदनुभवस्य विद्यमानत्वेऽपि

नाखण्डितोऽनुभवः । पुनरावरणशक्त्युद्बोधकभगवदिच्छया तिरोभावसद्भावात् न तथाऽयं मोक्षीयोऽनुभव इत्याह । **सदेति** । अखण्डितमित्यर्थः । तौ च तद्वृक्षगौ च यौ देवौ नलकूबरमणिग्रीवौ नारदस्य प्रसादतः एष्यत्कृष्णपद-स्पर्शस्मरणौ । शापकालापेक्षया एष्यन् भविष्यन् कृष्णः तस्य पदस्पर्शस्य स्मरणं ययोस्तौ तथा तं कृष्णं उपलभ्य आवरकवृक्षशरीरपातानन्तरं साक्षात्कृत्य **नुतेन तेनैव** नुतिजनिततत्प्रसादेनैव **निजं ओकः** स्वं स्थानं स्वः **गतौ** । चशब्दात्तत्र तयोराविष्टौ यौ दुष्टौ द्वेषिणौ दैत्यौ धुनिचमू तौ च **निजं ओकः** स्थानं निरयं पुनरयनवर्जितं अनावृत्ति तमः गतौ कस्मात् यदि दैत्यौ तमः प्राप्तौ तर्हि तद्योगेन सापराधौ देवौ कथं स्वर्गं गतौ इत्याकाङ्क्षानि-वृत्त्यर्थमाह । **यदिति** । **निजस्य** भक्तस्य **अनिज**मोकः **अनिजाद**भक्तात् **मोको** मोचनमिति यावत् तत्तेनैवानादिभगवत्प्रसादेनैव न तु स्वसामर्थ्येन । कोऽर्थः । यद्यपि दुर्जनयोगेन भक्तः सापराधस्तथापि अनादियोग्यतां तन्नि-मित्तामनादिर्नी भक्तिं निमित्तीकृत्यागन्तुकद्वेषमविगणय्य भक्तवात्सल्याद्भक्ति-फलमेव ददाति न द्वेषफलम् । द्वेषफलं तु द्वेषिण एव ददाति । तथोक्तम् । 'अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवहितो हि सः ' । क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं ( प्र ) निगच्छति । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति । ( गी. ९।३०-३१ ) दुर्जीवयोगेन तमः-प्राप्तिरूपं नाशं न प्राप्नोति । सज्जीवयोगेन अनादिद्वेष्यपि मोक्षं न प्राप्नोति । तदप्युक्तम् ' तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रम-शुभानासुरीष्वेव योनिषु ॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥ मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ [ गी. १६-१९-२० ] ॥१६॥

( ति० )....**यन्निजः** यस्य हरेर्भक्तः नुतेन स्तुतेन तेनैव कृष्णेन तत्कृपयैव **अनिजमोकः** अनिजात् अस्वाभाविकात् तरुजन्मादितः मोको मोचनं यस्य स तथा भवतीत्यर्थः ॥ १६ ॥

( भ० ) **यदिति** । निजो हरिभक्तः । अनिजस्तद्द्वेषी । तयोर्मोको मोक्षस्तत्तद्योग्यो भवतीति यत् **तत्तेनैव** तत्क्रिययैव न यादृच्छिकमित्यर्थः ॥१६॥

## मूलम्

**अथ वृन्दावनवासं गोपाश्वकुर्जगत्क्षिताऽवनवासम् ।**
**तत्र बकासुरमारः शौरिरभून्नित्यसंश्रितासुरमारः ॥ १७ ॥**

**( पद० ) अथ । वृन्दावनवासं । गोपाः । चक्रुः । जगत्क्षिता । अवनवासं । तत्र । वकासुरमारः । शौरिः । अभूत् । नित्य-संश्रितासुरमारः ॥ १७ ॥**

## टीका

गोपगोपीगवां वृन्दस्यावनं यत्र वै हरेः ॥ ९० ॥
यद्वा तद्वृन्दसंसेव्यमासमन्तावदञ्जसा ।
वृन्दैरासेव्यमानो वा यत्र सन्निहितो हरिः ॥ ९१ ॥
तद्धि वृन्दावनं गोपास्तत्रावासमचीक्लृपन् ।
जगत्क्षितासहाकारवाच्यस्य वनशब्दिते ॥ ९२ ॥
उदके कालियस्थाने वासो वासेन येन सः ।
उच्यतेऽवनवासेति जघ्ने चात्र वकासुरम् ॥ ९३ ॥
मरणं यत्परित्यागः स मुख्योऽसुर्यमाश्रितः ।
नित्यमेव स वै कृष्णः श्रियं च रमयत्यसौ ॥ ९४ ॥ १७ ॥

( **टि०** ) **अथ** गोकुलवासानन्तरं भगवतः वृन्दावने चिक्रीडिषया स्वरोमकूपेभ्यः सृष्टव्याघ्रसमवलवृकजनितस्वपीडानन्तरं **गोपाः** गां पान्ति रक्षन्तीति गोपाः नन्दादयः **जगत्क्षिता** सहार्थे तृतीया जगत् क्षयति निवसति यस्मिन्स जगत्क्षित् तेन जगत्क्षिता । क्षि निवासगत्योरिति धातोः । जगन्निवासेन कृष्णेन तथा तद्विशेषावेशवता रामेण च सह **वृन्दावनवासं** वृन्दस्य गोपगोपिगवां समूहस्यावनं रक्षणं यस्मिन् तत् तथा अव रक्षण इति धातोः । यद्वा **वृन्देन** गोपगोपीसमूहेन **आ** समन्तात् **वन्यते** संभज्यते सेव्यते यत्तत्तथा वन संभक्ताविति धातोः । यद्वा **वृन्दस्य** पूर्वोक्तस्य **आवनं** वर्णविपर्यासेन आनवं आ समन्तान्नवं ( नूतनं ) अंजसा वासार्थं तत्तथा । यद्वा **वृन्दै**र्ब्रह्मादि मुक्तामुक्तसमुदायैरावनः **आ** समन्ताद्**वन्यते** संसेव्यमानो हरिर्यत्र संनिहितस्तत्तथा । तस्मिन्**वृन्दावने** वासं **चक्रुः** । अचीक्लृपन् । कथंभूतं वृन्दावनवासं **अवनवासम्** । **अस्य** अकारवाच्यस्य भगवतः कृष्णस्य वने वनशब्दिते उदके कालीयस्थाने कालीयह्रदे **वासः** विषोदकपानसन्नपशुसंरक्षणाय तस्मिन् प्रवेशलक्षणो यस्मिन् येनेति वा स तथा तम् । यदि वृन्दावन-वासं गोपाश्चक्रुस्तर्ह्येव कालीयह्रदे पशुसंरक्षणार्थं कालीयोच्चाटनार्थं भगवत-

प्रवेशः प्रसक्तीकृतः । **तत्र** वृन्दावने **शौरिः** शूरस्य गोत्रापत्यं कृष्णः **बकासुर-मारः अभूत्** । तत्र बकासुरं जघ्ने इत्यर्थः । कथं भूतः शौरिः **नित्यसंश्रितासुरमारः** अस्यतीत्यसुः असुक्षेपण इति धातोः । स्वगमनेन जीवस्य देहवियोगं संपादयतीत्यर्थः । नित्यं संश्रितः असुः मुख्यप्राणो यं सः नित्यसंश्रितासुः । रमां रमयतीति रमारः । नित्यसंश्रितासुश्चासौ रमारश्च स तथा ॥ १७ ॥

( ति० ) .... **अवनवासं** अशब्दवाच्यस्य **कृष्णस्य** वने उदके कालीयस्थाने गोपिकावासेन वाससा सहवासो यस्मिंस्तम् । अत्र वासपदमावृत्य योजनीयम् । ( पयः की लालममृतं जीवनं भुवनं वनम् इत्यमरः )

( ना० ) .... **अवनवासं** अस्य हरेः वने कालीयहृदोदके तेन सह वासो यस्मिंस्तत् । .... **नित्यसंश्रितासुरमारः** । नित्यं निरन्तरं संश्रितः असुराणां मारः मारणं यं तथाविधः दैत्यहननं तस्य नित्यकर्मेति भावः । ........ नित्यं संश्रितेऽसुरमे रमयतीति वा । **अमारः** स्वयं मरणरहितः । तत्र हेतुर्नित्यसंश्रितासुरिति भिन्ने वा पदे यत्त्यागो मरणपदार्थः स प्राणो यदुपजीवकः कथं तस्य मृतिः स्यादिति भावः ॥ १७ ॥

## मूलम्

**अहनद्वत्सतनूकं योपाल्लोकं स्वयत्नवत्सतनूकम् ।**
**सोपाद्वत्सानमरस्सहाग्रजो गोपवत्सवत्सानमरः ॥ १८ ॥**

**( पद० ) अहनत् । वत्सतनूकं । यः । अपात् । लोकं । स्वयत्नवत् । सतनूकं । सः । अपात् । वत्सान् । अमरः । सहाग्रजः । गोपवत्सवत् । सानमरः ॥ १८ ॥**

## टीका

अतो वत्सासुरादींश्च जघ्ने च मधुसूदनः ।
ऊ रुद्रः कोविरिञ्चस्तावलपौ विष्णोः सदैव हि ॥ ९५ ॥
ताभ्यां सहैव यो लोकस्तं यो रक्षत्ययत्नतः ।
स कृष्णो वत्सपालोऽभूदजरोऽप्यमरोऽपि च ॥ ९६ ॥
गोपसूनुवदेवात्र बलभद्रेण संयुतः ।
अनः प्राणो रमा मा तत्सहितं लोकमेव यः ॥ ९७ ॥
रमयति .... ॥ १८ ॥

**टिप्पणी**–कृष्णः **वत्सतनूकं** वत्सस्य तनूरिव तनूर्यस्य स तथा । तं वत्सासुरं । उपलक्षणमेतत् । वत्सासुरादींश्च अहनत् जघ्ने **अहनादिति** शपो लुगभावः छान्दसः । स कृष्णः वत्सान् **अपात्** ररक्ष । कीदृशः **अमरः** उपलक्षणमेतत् । अजरश्च । पुनः कीदृशः **सहाग्रजः** । अग्रजेन बलभद्रेण सहितः किंवत् **गोपवत्सवत्** गोपालानां वत्साः बालका इव ते यथा ते वत्सान् ररक्षुस्तथेत्यर्थः । वतिना ' प्रजायते हि यत्कुले यथा युगं यथा वयः । तथा प्रवर्तनं भवेदिवौकसां हि संभवे ' ( ता. नि. १३.९ ) स विप्रराजगोपकस्वरूपकस्तदुद्भवाः । तदा तदा विचेष्टते क्रियाः सरान्विशिक्षयन् ' ( ता. नि. १३.१२ ) इत्यन्तं चेष्टातात्पर्यकथनं सूचयति । पुनः कीदृशः **सानमरः** । अनश्च मा च अनमे ताभ्यां सहितः सानमो रुद्रादिस्तं रमयतीति सानमरः । सः यः **लोकं** ब्रह्मादिमुक्तामुक्तसमुदायं **स्वयत्नवत्** सुष्टु अयत्नः अप्रयत्नः अप्रयासः यत्र यस्यां क्रियायां तद्यथा भवति तत्तथा, अयत्नतः । **अपात्** ररक्ष । कीदृशं लोकं **सतनूकं** । उश्च कश्च उकौ तनू नीचौ ( हरेः सकाशादल्पौ ति० ) च तौ उकौ च तनूकौ ताभ्यां सहितं सतनूकम् । ब्रह्मरुद्रबाहिर्भावेन लोकशब्दस्य संकुचितार्थत्वनिरासार्थमिदमुक्तम् ॥ १८ ॥

( भ० ) गोपवत्स एवायं किं न स्यात्कि तद्वदित्युक्त्येत्यत उक्तम् **अमर इति** । अजर इत्यपि ग्राह्यम् । जरामरणशून्यस्य वत्सत्वमसंभव्येव अतो लोकदृष्टिव्यपेक्षया तद्वदित्युक्तमिति भावः ॥ १८ ॥

( ना० ) उश्च कश्च उकौ शिवचतुर्मुखौ । *उकारःप्रोक्तः रुद्रः । कःप्रजापतिरुद्दिष्टः इति निघण्टुः । .... **सानमरः** । आनमनं आनमः तेन सहिताः सानमाः प्रणताः तान् रमयति सुखयतीति वा ॥ १८ ॥

## मूलम्

**स विभुः श्रीमानहिके ननर्त यस्य श्रमानमामानहिके ।**
**अकरोन्नद्युदकान्तं कान्तं नीत्वोरगं सनाद्युदकान्तम् ॥१९॥**

**( पद० ) सः । विभुः । श्रीमान् । अहिके । ननर्त । यस्य । श्रमानमा । मा । ( न । हि । के ) अनहिके । अकरोत् । नद्युदकान्तं । कान्तं । नीत्वा । उरगं । सः । ना । आद्युदकान्तं । ( नाद्युदकान्तं ) ॥१९॥**

---

* उकारः शंकरः प्रोक्तः ( एकाक्षरकोशे ) ।

A. S. Bheemasena Char
T. R. Temple, Gold Smith Street.

## टीका

....एष वै कृष्णो ननर्ताहिशिरस्यलम् ।
जगत्येकार्णवे यस्य महाहिशयनस्य च* ॥ ९८ ॥
श्रमेणानमति कापि शोभा ह्येतत्कुतोऽद्भुतम् ।
सः परः पुरुषः कान्तं यामुनोदं तदन्तकम् ॥ ९९ ॥
चकार तमहिं नीत्वा द्वीपं रमणकं प्रति ।
समुद्रो (द्रे) ह्याद्युद ( स्यत्वन्ते यस्या ) स्त्वस्यान्ते
यस्य द्वीप एव तम् ॥ १०० ॥ १९ ॥

**टिप्पणी—सः श्रीमान् विभुः** कृष्णः **अहिके** अहेः कालियस्य सर्पस्य **के** शिरसि ननर्त । स कः यस्य **अनहिके** । नहनं **नाहिः** बन्धनं । द्वीपेन न विद्यते नहिर्यस्य तत् **अनहि** निर्मर्यादं **कं** उदकं यस्मिन्सोऽनाहिकः प्रलयार्णवः तस्मिन् । अल्पो अहिः आहिकः न आहिकः **अनहिकः** महाहिः शेषः तस्मिन् । **यस्य** एतीति यः ' एरच् ' तस्य शयानस्य भगवतो **मा** शोभा **श्रमानमा** श्रमेण जगत्संहरणेन निमित्तेन न नमतीति श्रमानमा जगत्संहरणेऽपि यस्य श्रमो नास्ति । तत एव शोभापगमोऽपि यस्य नास्तीत्यर्थः । तस्य भगवतः कृष्णस्य कालीयेन स्वभोगेन वेष्टने कृतेऽपि कथं श्रमः स्यात् । कथंतरां शोभापगमः स्यात् । कथंतमां च गात्रविक्षेपरूपनर्तनासंभवः स्यादिति भावः । **सः ना** परः पुरुषः कृष्णः **नद्युदकान्तं** नद्याः यमुनायाः उदकमन्तं तत्समीपदेशं च नद्युदकान्तं **कान्तं** निर्विषं **अकरोत्** चकार । किं कृत्वा । **उरगं** कालीयं **आद्युदकान्तं** आदौ उदकं यस्य सः आद्युदकः स एवान्ते अपरपार्श्वे यस्य सः आद्युदकान्तः यस्योभयोः समुद्रोदकं यच्च मध्ये अत एव द्वीपशब्दवाच्यं ' द्व्यन्तरुपसर्गेभ्योऽप ईत् ' [ ६।३।९७ पा. ] इति स्मरणात् । तं रमणकं प्रापयित्वेति भावः ॥१९॥

( ति० ) **श्रमानमा न हि** । श्रमेण जगत्संहारादिश्रमेण आ ईषत् सम्यग्वा नमा प्रह्वीभूता न हि स **ना** परः पुरुषः । **आद्युदकान्तं** प्रति आद्युदकः समुद्रस्तस्यान्ते विद्यमानं रमणकं द्वीपं प्रति ।....॥१९॥

---

* न इति पाठश्चेत् न आनमतीत्यन्वयो भवति । यद्वा ' कापि ' इत्याक्षेपार्थकः ।

( म० ) **नद्युदकान्तं** । नद्युदेति लुप्तविभक्तिकं पदम् । **नद्युदं** यामुनोदकं कालियविषदूषितं **कान्तं** मनोहरं सर्वसेव्यम**करोत्** चकार । नद्युदं च तत् कान्तं चेति कर्मधारयो वा । बुद्ध्या विवेकेन पूर्ववदेवान्वयः । कथं कान्तं चकारेति तत्राह । **कान्तामिति** । **कस्य** यामुनोदकस्य**अन्तम्**- अन्तकम् । स्वाविषेण तद्रूपकामिति यावत् । **उरगं** कालियं । **आद्युदकान्तं** । समुद्रे आदिभागे स्थितस्योदकस्यान्तं अन्ते विद्यमानं रमणकाख्यं द्वीपमिति यावत् । **नीत्वा** प्रापयित्वेत्यर्थः ॥ १९ ॥ ( नादः घोषः अस्यास्तीति नादी समुद्रः तस्य उदकमध्यस्थद्वीपं प्रति ॥ १९ ॥

( ना० ) **सः श्रीमान्** लक्ष्मीपतिः ।....**के** प्रलयोदकेऽपि **श्रमानमा** श्रमेणानमति ग्लानिं प्राप्नोत्येतादृशो **न** भवति **हि** इति प्रसिद्धमित्यर्थः ।.... यद्वा **के**ऽपि पुरुषाः **यस्य श्रमानमामाः न हि** । **आ** समन्तात् **मा** शोभा **आमा** श्रमेणाऽऽनमा आनम्या आमा येभ्यस्ते । तथाविधाः न सन्ति । तस्यानेन सर्पेण किं कर्तव्यमिति भावः । **हिक** इत्येकं पदम् । हयतीति **हि** हिगतौ वृद्धौ चेति धातोः क्विपि हीति रूपम् । आनित्यमागमशासनमित्युक्तत्वात् 'ह्रस्वस्य पति कृति तुक्' [ ६।१।७१ पा० ] इति तुगभावः । **हि** च तत् **कं** चेति **हिकं** तस्मिन् । वृद्धत्वेन सर्वतः प्रसृतं यत् कं तस्मिन् प्रलयोदक इत्यर्थः । **स ना** परमपुरुषः । **नद्युदकान्तं** शुद्धोदस्य मध्यप्रदेशं । **कान्तं** रमणीयं गोगणादिसेव्यम**करोत्** । किं कृत्वा **उरगं** सर्पं **आद्युदकस्य** शुद्धोदकस्य मध्यं **नीत्वा** प्रापयित्वा ॥१९॥

## मूलम्

**हत्वा धेनुकमूढं वलात्प्रलम्बं च खेट् सधेनुकमूढम् ।**
**व्रजमावीदमृताशः पीत्वा वह्निं चरस्थिता (रा)दमृताशः ॥२०॥**

**( पद० ) हत्वा । धेनुकमूढं । वलात् । प्रलम्बं । च । खेट् । सधेनुकं । ऊढं । व्रजं । आवीत् । अमृताशः । पीत्वा । वह्निं । चरस्थिता(रा*)दं । ऋताशः ॥**

## टीका

प्रलम्बं धेनुकं मूर्खं हत्वा तद्वरदाधिपः ।
वलाविष्टेन रूपेण स्वयं च सह धेनुभिः ॥ १०१ ॥

* ( ल. टि. ) यादु० पा०

स्वसंश्रितं व्रजं कृष्णो जुगोपामृतभोजनः ।
पीत्वाऽग्निं सत्यसर्वाशः चराचरभुजं हरिः ॥ १०२ ॥ २० ॥

**टिप्पणी**—अमृतमश्नातीति **अमृताशः** । अमृतभोजनः **ऋताशः** ऋता आशा यस्य स तथा सत्यसर्वाशः श्रीकृष्णः । **व्रजं** गोकुलम् । **आवीत्** रक्षितवान् । किं कृत्वा **बलात्** बलाविष्टेन रूपेण । तथा स्वयं च कृष्णरूपेण **धेनुकमूढं** धेनुकश्चासौ मूढश्च तं । **प्रलम्बं च हत्वा** स्वयं धेनुकं हत्वा बलेन प्रलम्बं च घातयित्वेत्यर्थः । पुनः किं कृत्वा **वह्निं** च **पीत्वा** दावानलं प्राश्य । कीदृशं वह्निं । **चरस्थितादं** । चरं च स्थितं च चरस्थिते ते अत्तीति चरास्थितात् तं चरास्थितादं । कथंभूतं व्रजं । **सधेनुकं** धेनुभिः सहितं । पुनः कीदृशं **ऊढं** स्वसंश्रितं स्वात्मानं शरणं प्राप्तम् । वह प्रापण इति धातोः । कथं भूतः कृष्णः **खेट्** । खमिन्द्रियं मनः । खमाकाशं तदभिमानित्वात् । तच्छब्दाभ्यां खाभ्यां रुद्रगणपतिभ्यां इज्यतेऽसौ खेट् । तद्वरदाधिपः प्रलम्ब-धेनुकवरदाधिपः ॥ २० ॥

( भ० ) **चरस्थितादं** । चराः मृगादयः स्थिताः स्थावराः वृक्षा-दयस्तदत्तारं वनवह्निम् ।....॥२०॥

( ना० ) **खेट्** । **खस्य** आकाशाभिमानिनो गणेशस्यापि ईट् ईश्वरः नियन्ता ॥ २० ॥

## मूलम्

**गिरिणा रक्षापि कृता व्रजस्य तेन स्वरक्षरक्षापिकृता ।**
**शक्राय व्यञ्जयता स्वां शक्तिं विश्वमात्मनाऽव्यंजयता ॥२१॥**

**( पद० ) गिरिणा । रक्षा । अपि । कृता । व्रजस्य । तेन । स्वरक्षरक्षापिकृता । शक्राय । व्यञ्जयता । स्वां । शक्तिं । विश्वं । आत्मना । अव्यं । ( व्यञ्ज ) जयता ॥ २१ ॥**

## टीका

व्रजस्य तेन रक्षापि गिरिणा हरिणा कृता ।
स्वरानन्दः स एवाऽश्च तस्मै क्षीरं क्षरन्ति याः ॥ १०३ ॥
स्वरक्षरा हिता गावस्तत्क्षयाय प्रचोदिताः ।
इन्द्रेण वारिवाहाः स्वरक्षरक्षा इतीरिताः ॥ १०४ ॥

तेषामापिः स एवेन्द्रः पाता कृष्णेन तत्कृता ।
यद्वा स्वरक्षरो वायुः क्षापी रुद्रस्तु तत्कृता ॥ १०५ ॥
स्वसामर्थ्यं व्यञ्जयता शक्राय जयताखिलम् ॥
स्वेन रक्ष्यम् .... .... ॥ २१ ॥

**टिप्पणी—तेन** कृष्णेन **गिरिणा** गोवर्धनेन **व्रजस्य रक्षाऽऽपि** रक्षणमपि **कृता** कृतम् । कथंभूतेन तेन **स्वरक्षरक्षापिकृता स्वः** आनन्द-रूपश्चासौ **अश्च** अकारवाच्यश्च **स्वरः** । स्वराय क्षरन्ति क्षीरं यास्ताः **स्वरक्षराः** । ताः क्षिण्वंति वारिधा(रि)राभिस्ते **स्वरक्षरक्षाः** । मेघाः तेषा**मापिः** 'उपसर्गे घोः किः' [३।३।९२] आपालकः स्वामी **स्वरक्षरक्षापिः** इन्द्रः तं करोतीति स्वरक्षरक्षापिकृत् तेन । गोनाशकसांवर्तकमेघपालकेन्द्रस्रष्टेत्यर्थः । यद्वा स्वं स्वयमेव रमणीयं भगवन्तं क्षरति भक्तेभ्यो ददाति ज्ञानदानेन **स्वरक्षरो** वायुः । क्षर विनाशसंततदानयोरिति धातोः । क्षपयति नाशयति इति **क्षापी** रुद्रस्तौ करोतीति स तथा तेन । पुनः कीदृशेन **शक्राय स्वां शक्तिं व्यञ्जयता** । स्वस्मरणार्थमेव इन्द्रयागे प्रवृत्तान् गोपान् छलेन गिरिमहे अवतार्य ततो याग-विघ्नकरे कृष्णे गोपागमनेन मेघैः संततं सप्तदिनं वर्षे कृतेऽपि निर्बाधं गोकुल-मगम्यं मां स्मृत्वा शरणमागच्छतियाति बुद्ध्या गिरिणा व्रजरक्षा भगवता कृतेति भावः । पुनः कथंभूतेन **आत्मना** स्वेन **अव्यं** रक्ष्यं **विश्वं** जयता स्वभावे-नैव विश्वाजितेत्यर्थः ॥ २१ ॥

( ना० ) ....**स्वरक्षरा** गाः क्षपयन्तीति स्वरक्षरक्षाः मेघाः । क्षै क्षये । 'आदे च उपदेशे शिति' [ ६।१।४५ ] इत्यात्वं क्विबन्तः । तेषां पाता पिः । पातेर्डिः । इन्द्र इत्यर्थः । तं कृन्तति तदीयाहंकारं छिनत्तीत्यर्थः इति वा....॥ २१ ॥

## मूलम्

**रेमे गोपीष्वरिहा स मन्मथाक्रान्तसुन्दरीपीष्वरिहाँ ।**
**पूर्णानन्दैकतनुः स विश्वरुक्पावनोऽप्य(प्या)नंदैकतनुः ॥२२॥**

**( पद० ) रेमे । गोपीषु । अरिहा । सः । मन्मथाक्रान्तसुन्दरी-पीषु । अरिहा । पूर्णानंदैकतनुः । सः । विश्वरुक्पावनः । अपि । अ (आ) नंदैकतनुः ॥ २२ ॥**

## टीका

....स वै कृष्णो रेमे गोपीषु शत्रुहा ॥ १०६ ॥

हन्ता रुद्रवरोन्मत्तशङ्खचूडाख्यदुर्मतेः ।
सुन्दर्यस्ता इपि (पी) यश्च सुन्दरीपि (पी) य ईरिताः ॥ १०७ ॥

इपिश्रियो हि यासां ता इपि (पी) यः परिकीर्तिताः ।
स्त्रीगुह्यमिपिशब्दोक्तामिः ( कं इः ) पाता सोऽस्य यत्ततः ॥१०८॥

आक्रान्ता मन्मथेनैताः कन्या अक्षतयोनयः ।
रेमे तासु च गोविन्द उद्वाह्य वरदः पुरा ॥ १०९ ॥

अलिहाऽसेवयैवेशः स्वयं सेव्योऽखिलैर्जनैः ।
यत्पूर्णानन्दसान्द्रैकतनुः कामादिरोगहा ॥ ११० ॥

यद्वा संपूर्णविज्ञानप्रकाशः पावनः परः ।
सर्वेषां च गतिज्ञानप्रदोत्तमतनुः प्रभुः ॥ १११ ॥ २२ ॥

( टि० ) **अरिहा** शत्रुहा **स** कृष्णो **गोपीषु** गोपपरिग्रहरूपासु रेमे । स कृष्णो **मन्मथाक्रान्तसुन्दरीपीषुव रेमे ।** मन्मथेन कन्दर्पेण आक्रान्ताश्च ताः सुन्दर्यश्च ता इपियश्च मन्मथाक्रान्तसुन्दरीपियस्तासु अक्षतयोनिषु कन्यास्वित्यर्थः । कथमिदं लक्ष्यते इत्यत आह । स्त्रीगुह्यमिपिशब्दोक्तामिति । ई शोभां पिबति पाति वा यत् तदिपि तच्चाक्षतयोनित्वेन । अन्यथा शोमापगतेः । तथा च इपिना अक्षतगुह्येन ईः श्रीः शोभा यासां ताः इपियः तासु च गोविन्दः पुरा वरदः रामात् द्विजत्वगमनादपि पूर्वमेवास्माकं तव सङ्गोऽस्त्विति वरदः रेमे । कथंभूतः कृष्णः **अरिहा** वेणुनादं श्रुत्वा भर्त्रादीन् विसृज्य रात्रावेव स्वसमीपमागतगोपीभीषकरुद्रवरोन्मत्तशंखचूडाख्यदुर्मतेः हन्ता । पुनः कीदृशः । **आरिहा** । अलिहाऽसेवयैवेशः स्वयं सेव्योऽखिलैर्जनैः । कस्मात् यस्मात् **पूर्णानन्दैकतनुः** । पुनः कीदृशः **विश्वरुक्पावनः** विश्वाश्च ताः रुजश्च रोगाः तान् पावयति गमयतीति विश्वरुक्पावनः । कामादिरोगहा । यद्वा विश्वा संपूर्णा रुक् ज्ञानं प्रकाशश्च यस्य स तथा, पावनः शोधकः भक्तानां नैर्मल्यकरः । पुनः कीदृशः । **अनंदैकतनुः** । अनं ज्ञानं गतिं च ददातीति अनन्दा द्वितीयाया अलुक् तादृशी एका मुख्या उत्तमा तनुर्यस्य स तथोक्तः ॥ २२ ॥

( ति० ) **विश्वरुक्पावनः** । विश्वरुग्भ्यः पावयतीति तथा ॥ २२ ॥

( भ० ) कामिपुरुषवद्गोपीनामुपसाधा तासु रेमे किमित्यत उक्तम् । **आरिहेति** । अलिहा । लिह् आस्वादने भावे क्विप् । लिट् लेहनं सेवनं तदभावोऽलिट् तेन असेवनेन । तदुपसर्त्ति विनैव प्रत्युत ताभिरेवोपसन्नो भूत्वेत्यर्थः ।....यादृपत्ये तु **आनन्दैकतनुरिति** पाठमङ्गीकृत्यानन्दयतीत्यानन्दा एका मुख्या तनुरवतारो यस्येति व्याख्यानम् ।

( ना० ) **मन्मथाक्रान्तसुन्दरीपीपु** मन्मथेन कामेनाक्रान्ताश्च ता सुन्दर्यश्च मन्मथाक्रान्तसुन्दर्यः । तासु ईः महालक्ष्मीः तया प्यायिताः तदाविष्टा इत्यर्थः 'प्यायः पी' [ ६।१।२८ ] इति सूत्रेण प्यायतेः पीभावः । लक्ष्म्यावेशं विना भगवदङ्गसंगे नान्यस्त्रीणामधिकारः । अतस्तत्र रमावेश इति भावः । यद्वा सुन्दरीं महालक्ष्मीं पात्यसौ सुन्दरीपः परमात्मा तमात्मानमिच्छन्तीति सुन्दरीप्यः तासु परमात्माङ्गसंगं कामयमानासु । सुन्दरीपमिच्छन्तीत्यत्र 'सुप आत्मनः क्यच्' [ ३।१।८ ] इति क्यचि 'सनाद्यन्ता धातवः' [ ३।१।३२ ] इति धातुसंज्ञाया सुन्दरीपीयतेः कर्तरि क्विपि च अतो 'लोपो व्योर्वलि' [ ६।१।७६ ] इति यलोपे सुन्दरीपीरिति दीर्घेकारान्तशब्दः । सह खेन वर्तत इति सखः तमिच्छन्तीति सखीरितिवत् । सुन्दरीत्यत्र स्त्रियाः पुंवद्भावेऽपि तृतीयोतिशये [ महाव्याकरण ] इतीकारेण सवर्णदीर्घः । सुन्दर्या लक्ष्म्या वा प्यायितासु । सुन्दरीशब्देनैव निरुपपदेन लक्ष्मीरुक्ता .... । **अनन्दैकतनुः** नन्दः सुखं तद्विरुद्धं दुःखं अनन्दः तदेवैकं केवलं येषां ते अनन्दैकाः । हार्दिकमयीं दौषैकदृक्पुरोभागीत्यादाविव केवलार्थस्यैकशब्दस्य 'पूर्वकालैक ....' [ २।१।४९ पा० ] इति सूत्रेणाग्रहणात् तस्य परनिपातः । उक्तं चैतत् टीकाकारैः सदागमैकविज्ञेयमिति व्याचक्षाणैः । तथा च केवलदुःखस्वभावा असुराः तनवः क्षीणा येनेत्यर्थः । अनन्देषु लोकेषु एके अन्ये विरोधिनस्तनवः क्षीणा यस्येत्यर्थः । 'अनन्दा नाम ते लोका अन्धेन तमसा वृताः' इत्युक्तेः । ( ईशा. ३ ) नन्दात् नन्दगोपात् एका केवला तनुः यस्येत्येतादृशो न भवतीत्यर्थः । तत्र केवलेति हेतुगर्भविशेषणम् प्राकृतदेहवत्त्वे हि तदुत्पत्तिः स्यादिति भावः । अनं गतिं ज्ञानं वा ददतीत्येतादृशी तनुर्यस्येत्यप्याहुः ॥ २२ ॥

## मूलम्

**अथ हतयोर्गलिकेश्योः श्वफल्कजप्रापितः पुरीं गलिकेश्योः ।**
**भङ्क्त्वा धनुराजवरं जघान तेनैव च स्वयं राजवरम् ॥२३॥**
**( पद० ) अथ । हतयोः । गलिकेश्योः । श्वफल्कजप्रापितः ।**
**पुरीं । गलिकेशी । ओः । भङ्क्त्वा । धनुः । आजवरं ।**
**जघान । तेन । एव । च । स्वयं । राजवरम् ॥ २३ ॥**

## टीका

गलिः केशी च यौ दैत्यसूदनेन निषूदितौ ।
तिर्यग्भ्यः कुत्सितौ नित्यं दैत्यौ शिववरोद्धतौ ॥ ११२ ॥
इति ज्ञापयितुं सम्यक् प्रकृत्योर्व्यत्ययः कृतः ।
गलिकेश्योरिति ह्यत्र व्यत्ययः कुत्सने स्मृतः ॥ ११३ ॥
गलिनौ सुगलौ केशौ गलिकेशीति केशवः ।
स्तुवत्सुकण्ठवल्लेशवानित्येवाभिधीयते ॥ ११४ ॥
ओ रुद्रस्य धनुर्भङ्क्त्वा तच्छब्देन जघान ह ।
कंसं राजवरं यद्वा धनुःखण्डेन तद्बलम् ॥ ११५ ॥
अजो ब्रह्माऽथ रुद्रः स्यादाजस्तद्वरवद्धनुः ॥ २३ ॥

( टि० ) **अथे**त्यनन्तरं वत्सासुरादिवधानन्तरं **गलिकेश्योः** गलिश्च * केशिश्च गलिकेशी तयोः गलिकेश्योः गलिकेशवतोरिति वक्तव्ये गलिकेश्योरिति व्यत्ययः तयोः कुत्सितत्वसूचनार्थः । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संबन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः' इति वचनात् । ननु कयोः ( कर्क ) प्रकृत्योर्व्यत्ययः 'अत इनिठनौ' [ ५।२।२५ ] इति इनेर्विधानात् । उच्यते । 'केशाद्वोऽन्यतरस्याम्' [५।२।१०९] इति (दिनि?) वस्य केशशब्दात् विशिष्य विधानात् पक्षे मतुपः प्राप्तेः कथंचिद्विरन्यतरस्यांग्रहणेन (न?) प्राप्नोति । ननु (एवं?) स्वरसं गलशब्दस्य तु गलधातोः कृति निष्पन्नत्वात् 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इति इनेर्निषेधात् इनिर्न प्राप्नोति । तथा च कुत्सितयोर्गलिकेशिनोः अरिष्टकेशिनोर्दैत्ययोः

---

* ( ल० टि० ) असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः इति काव्यप्रकाशे । अथ गलिर्दुष्टवृषः शक्तोप्यधूर्वहः इति हेमचंद्रः ।

**हतयोः** सतोः धनुर्यागमहोत्सवव्याजेन **पुरीं** मधुरां **श्वफल्कजप्रापितः** श्वफल्कजेनाक्रूरेण प्रापितः कृष्णः स्वयं **ओः** रुद्रस्य **धनुर्भङ्क्त्वा तेनैव** तच्छब्देन **राजवरं कंसाख्यं** राजश्रेष्ठं **जघान**। विच्छिन्नधैर्यं चकार। अथवा खण्डितधनुषैव राज्ञः कंसस्य **वरं** वलं ववयोरलयोरभेदः। सैन्यं **जघान** हिंसितवान्। कीदृग्धनुः **आजवरं** अजस्यापत्यमाजो रुद्रोः तस्य वरः यस्य तत्तथा। कथंभूतः कृष्णः **गलिकेशी** प्रशस्तौ गलौ ययोस्तौ गलिनौ सुगलौ ब्रह्मरुद्रौ यस्य सः गलिकेशी तद्वत्वं तत्स्वामित्वेन ॥ २३ ॥

( ति० ) यद्वा गलन्तीति गलिनश्च ते केशाश्च तेऽस्य सन्तीति। ........ **गलिकेश्योरि**त्यत्र केशिन् शब्दस्य नकारान्तत्वव्यत्ययः तिर्यग्भ्यः कुत्सितत्वज्ञापनार्थः ॥ २३ ॥

( भ० ) **गलिकेशी**। गलिनौ सुगलौ। प्राशस्त्यार्थ इनिः। सुस्वरयुक्ततया प्रशस्तकण्ठौ केशौ कश्च ईशश्च केशौ तौ ब्रह्मरुद्रावस्य स्त इति तथोक्तः। स्तुवत्सुकण्ठब्रह्मेशवान् ब्रह्मरुद्राभ्यां सुस्वरेण स्तूयमान इति यावत् ॥ .... **तेनैव** तच्छब्दमात्रेणैव **राजवरं** कंसं **जघान** हतप्रायमकरोत् ॥ २३ ॥

( ना० ) अथेति। **अथानन्तरं गलिकेश्योः** गलः गलकंवलः सास्नेत्यर्थः। सत्या सत्यभामा भीमो भीमसेनः नवा पुनर्नवेत्यादाविव नामैकदेशग्रहणम्। सोऽस्यास्तीति गली सास्नादिमान् वृषभासुरः। एवमुक्त्या—वृषभासुर इत्यत्र वृषभशब्दो न पुरुषर्षभ इत्यादाविव श्रेष्ठवाचकः किं तु पशुवाचक-इति सूचितम्। तथा केशिनामिति नान्तशब्दानुकरणं नकारान्तं परित्यज्य केशिरितीकारान्तं वदता तस्य कुत्सितत्वरूपोऽपकर्षः सूचितः तेन नैतौ पूतनादिवत् सञ्जीवाविष्टाविति ध्वनितम्। गली च केशिश्च गलिकेशी तयोः व्यत्ययः कुत्सनेस्मृतः ' सुप्तिङुपग्रहलिङ्गनराणां कालहलच् स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्धयति वाहुलकेन ' त्युक्तत्वात्। .... द्वितीयपादे गलिकेशी। ओः इति द्वे पदे। ओ *रिति शिववाचकस्य उशब्दस्य षष्ठ्यन्तरूपं तत्संवन्धिनोस्तद्भक्तयोरेतयोः विशेषः ( षणं ) .... **आजवरं** ब्रह्मणैव धनुस्तेन शिवाय दत्तं ततः कंसेन गृहीतामिति वा ॥ २३ ॥

---

* ( ल० टि० ) उकारः शंकरः प्रोक्त इति शब्दभेदप्रकाशे।

**मृत्नन्गजमुग्रबलं सबलो रङ्गं विवेश सृ(श्रु)तिमुग्रवलम् ।**
**हत्वा मल्लौ बलिनौ कंसं च विमोक्षितौ ( ता ) ततौ लौ**
**( रौ ) बलिनौ ॥ २४ ॥**

**( पद० ) मृत्नन् । गजं । उग्रबलं । सबलः । रङ्गं । विवेश । सृतिमुक् । रबलं । हत्वा । मल्लौ । बलिनौ । कंसं । च । विमोक्षितौ । ततौ । रौ । बलिनौ ॥ २४ ॥**

## टीका

मर्दयंस्तु गजं रुद्रवंरयुक्त बलान्वितः ॥ ११६ ॥
मल्लरं ( गे ) गं विवेशाऽथ रमणीयं वरेण ह ।
भक्तानुग्रहणेनैव मोचयामास तातकौ ॥ ११७ ॥
रमणौ वरिणौ चाथ मल्लौ कंसं निहत्य च ।
तद्बन्धतः स वै सर्वविद्याधीशः सुराधिपः ॥ ११८ ॥ **२४ ॥**

( टि० ) **उग्रबलं** उग्रस्य रुद्रस्य बलं यस्य स तथा । तं रुद्रवरयुक्तं गजं कुवलयापीडं **मृत्नन्** मर्दयन् **सबलः** बलान्वितः कृष्णः **रंगं** मल्लविहार-स्थानं विवेश । कथंभूतः कृष्णः **रबलं** । रं रमणीयं ज्ञानं बलं परिपालक-रूपं यस्य स तथा तं परिपक्वज्ञानिनं भक्तं । **सृतिमुक्** संसारान्मोचयतीति सृतिमुक् । अन्तर्णीतणिजन्तमिदम् । तेन कृष्णेन **बलिनौ** वरिणौ मल्लौ तथा **कंसं च हत्वा ततौ** मातापितरौ **विमोक्षितौ** तद्बन्धनत इति शेषः । कथं भूतौ ततौ **लौ** रौ रमणौ रमणीयौ ॥ २४ ॥

( ति० ) .... **श्रुतिमुगिति** पाठे विद्याधीश इत्यर्थः ॥ २४ ॥

( भ० ) **विमोक्षिता** बभूव मोचयामासेति यावत् । मोचयामास यौ ततावितिं पूर्वटीकोक्तेः । विमोक्षितावितिं पाठे तेनेति शेषेण योजना । **लौ** । रौ । रमणौ कृष्णे रतियुक्तौ ॥ २४ ॥ लौ = कारायां गृहीतौ ला आदाने । या० श्रुतिं मुंचाति उच्चारयतीति श्रुतिमुक् जातः ।

## मूलम्

**प्रादात्सांदीपनये मृतपुत्रं ज्ञानदीपसांदीपनये ।**
**गुर्वर्थेऽज्ञानतमःप्रभेदिता नित्यसंभृताऽऽज्ञानतमः ॥ २५ ॥**

**(पद०) प्रादात् । सांदीपनये । मृतपुत्रं । ज्ञानदीपसांदीपनये । गुर्वर्थे । अज्ञानतमःप्रभेदिता । नित्यसंभृताऽऽज्ञानतमः ॥२५॥**

**टीका**

प्रादाच्च सांदीपनये सुतं तस्मै मृतं हरिः ।
ज्ञानदीपस्य ये सम्यग्दीपकास्तान्नयेत्तु यः ॥ ११९ ॥
स्वयं च सकलाज्ञानतमश्छेत्ता हरिः सदा ।
सम्यग्भृता च यस्याऽऽज्ञा तया यच्चरणौ नतौ ॥ १२० ॥
रमा विद्यास्वरूपाऽऽसौ गुरुवृत्तिमदर्शयत् ॥ २५ ॥

( टि० ) स कृष्णः **सांदीपनये** तन्नाम्ने **गुर्वर्थे*** गुरुदक्षिणार्थं मृतं पुत्रं **प्रादात्** । कीदृशाय **ज्ञानदीपसांदीपनये** । संदीपयन्तीति संदीपाः संदीपा एव सांदीपाः ज्ञानदीपस्य सांदीपाः सम्यक्प्रकाशका देवाः तान्नयति प्रापयति तज्ज्ञानोपदेशेनेति ज्ञानदीपसांदीपनिः तस्मै । स्वयं कीदृशः । **अज्ञानतमः प्रभेदिता** । अज्ञानं तम इव सम्यग्ज्ञानप्रतिरूपत्वात् । तत् प्रभेदिता छेत्ता । पुनः कीदृशः । **नित्यसंभृताज्ञानतमः** नित्यं संभृता सम्यक् धृता आज्ञा यया सा तथा । नित्यसंभृताज्ञा आनता मा यस्य स तथा ॥ २५ ॥

( ना० ) मृतं पुत्रं बहुकालं सामुद्रमत्स्येन निगीर्णं पुत्रं प्रादात् । किमर्थमित्यतस्तं विशिनष्टि । **ज्ञानदीपसांदीपनय इति** । ज्ञानं दीप इवेति ज्ञानदीपः अर्थप्रकाशकरूपत्वात् । तं संदीपयन्ति उद्धारयन्तीति ज्ञानदीपसंदीपाः वेदाद्याः सदागमाः । तान्नयति स्वस्मिन्नर्पयतीति ज्ञानदीपसंदीपानिः तस्मै । नयतेर्डिप्रत्ययान्तस्य रूपं तेन धात्ववयवैकाच्त्वाभावात् सेनान्ये इत्यादाविव 'एरनेकाच........' [६।४।८२] इति यण् न । किंतु वामनिः भामनिरित्यादाविव गुणः । एतेन गुरुदक्षिणार्थमित्युक्तं भवति । ज्ञानदीपस्य संदीपनं संदीपस्तस्य नयो न्यायस्तन्निमित्तमिति वा । गुरुदक्षिणाया न्यायप्राप्तत्वादिति भावः ........ ॥ २५ ॥

---

* गुरुवृत्तिप्रदर्शनार्थम् ( ति० )

## मूलम्

**जित्वा मागधराजं तोषितमकरोत्सदात्मयोगधराजम् ।**
**अनुकुर्वन्निजसदनं चक्रे रम्यां[म्यं] पुरं सुबोधनिजसदनम्[मं] ॥२६॥**
**[पद०] जित्वा । मागधराजं । तोषितं । अकरोत् । सदा ।**
**आत्मयोगधराजं । अनुकुर्वन् । निजसदनं । चक्रे । रम्यां ।**
**पुरं । सुबोधनिजसदनम् ॥ २६ ॥**

## टीका

अजेयत्वं जरासंधे दत्वा भीतश्चतुर्मुखः ॥ १२१ ॥
यदि मद्वचनं कृष्णोऽनुसरेत्तर्हि नो*ऽनयः ।
इति मागधराजं तं जित्वा चक्रे सुतोषितम् ॥ १२२ ॥
स्वसुतं वैष्णवं योगं धत्ते यः सर्वदोत्तमम् ।
तमजं ये सुबोधेन प्रादुर्भूताः स्वरूपतः ॥ १२३ ॥
ते सुबोधनिजास्तेषां सच्चेष्टा यत्र तत्सदः ।
निजं हि सदनं विष्णोस्तद्वद्द्वारावतीं पुरीम् ॥ १२४ ॥
चक्रे .... .... .... .... .... ॥ २६ ॥

(टि०) भगवान् **मागधराजं** जरासंधं **जित्वा सदात्मयोगधराजं** । सदा सर्वकालं आत्मनो विष्णोः योगं ध्यानादिरूपं धारयति स चासौ अजो ब्रह्मा च सदात्मयोगधराजः तं सदा विष्णूपासकं स्वसुतं ब्रह्माणं **तोषितमकरोत्** । स्वभीतेः परिहृतवान् । शोभनो बोधो येषां ते सुबोधाः ते च ते निजाः नितरां जायन्ते स्वरूपतः प्रादुर्भवन्ति विमुक्ता इत्यर्थः । तेषां सत् विद्यमानं अनं चेष्टनं क्रीडा यत्र तत् **सुबोधनिजसदनं** तादृशं **निजसदनं** वैकुण्ठादिस्थानं तत् **अनुकुर्वन्** तत्साम्यमापादायन् **पुरं** द्वारवतीं रम्यां चक्रे ॥ २६ ॥

( ति० ) यदि हरिरस्मद्दत्तवरं मागधं न जयेत् तर्हि नः नयो न भवेदिति भीतं तुष्टमकरोदिति भावः ॥ २६ ॥

( भ० ) ब्रह्मा हि जरासंधायाऽजेयत्ववरं दत्वा भीतो जातः । कृष्णो यदि मद्वरमनुसरेत् तर्हि लोकस्य अनयः महाननर्थो भविष्यतीति । अतस्तं जित्वा तं तोषयामासेति भावः ॥ २६ ॥

---

* नो नयः ( ति० पा० ) नोऽनयः ( या० भ० पा० )

## मूलम्

**प्रसभं सगजवलस्य क्षत्रस्योच्चैस्स मगधराजवलस्य ।**
**मानं शिशुपालवरं हत्वा भैष्मीमवापा(प) शिशुपालवरम् ॥२७॥**
**( पद० ) प्रसभं । स । गजवलस्य । क्षत्रस्य । उच्चैः ।**
**समगधराजवलस्य । मानं । शिशुपालवरं । हत्वा । भैष्मीं ।**
**अवाप । अशिशुपालवरम् ॥ २७ ॥**

## टीका

....राजसमूहस्य गजादिचतुरङ्गिणः ।
मागधेशयुतस्यापि मानं हत्वाऽऽप रुक्मिणीम् ॥ १२५ ॥
शिशुपालो वरो भैष्म्याः क्रु(म)तोऽस्माभिर्वरोन्नतेः ।
*अजादीनामितीत्थं तु मानस्तेषां वभूव ह ॥ १२६ ॥
शिशवो वासुदेवस्य लोकपाला अजादयः ।
वरस्तेषां कारणं च यस्मिन्स ह तथोच्यते ॥ १२७ ॥ २७ ॥

( टि० ) **सः** भगवान् **प्रसभं** बलात् **भैष्मीं** भीष्मककन्यां रुक्मिणीं अवाप। किं कृत्वा **क्षत्रस्य** क्षत्रियवर्गस्य **मानं** अभिमानं अस्माभिर्ब्रह्मादिवर-सामर्थ्यात् भैष्म्याः शिशुपालो वरः कल्पित इत्यहंकारं **हत्वा** गमयित्वा नाशयित्वा च । हन हिंसागत्योरिति धातोः । कथंभूतस्य क्षत्रस्य **गजवलस्य** गजसदृशसामर्थ्यस्य । अथवा गजप्रभृतिवलस्य । गजादिचतुराङ्गिणः । पुनः कीदृशस्य । **समगधराजवलस्य** मगधराजस्य वलेन सामर्थ्येन. सैन्येन वा सहितस्य । कथंभूतं मानं **शिशुपालवरं** । शिशुपालो वरो यस्मिन्स तथा तं । पुनः कीदृशं । **अशिशुपालवरम्** । अशिशवः विष्णुवालकास्ते च ते पाला लोकपाला ब्रह्मादयस्तेषां वरो यस्मिन्कारणभूतः स तथा तत् ॥२७॥

( भ० ) **उच्चैर्मानम्** उत्कृष्टमहंकारम्

( ति० ) **सगजवलस्य** गजाश्च वलानि च तैः सहितं तस्य ॥२७॥

( ना० ) **सगजवलस्य** गजसैन्यैः सहितस्य । प्रत्येकं गजायुत-शारीरबलाढ्यस्य वा ॥ २७ ॥

---

* ल. टि. अजादीनां वरोन्नतेः इत्यन्वयः ।

## मूलम्

**हंसो डिबिकश्चपलावमुना संसूदितौ यवनकश्च पला ।**
**कीर्तिर्विमला विरता प्रतता विश्वाधिपावनीलाविरता ॥२८॥**
**( पद० ) हंसः । डिबिकः । चपलौ । अमुना । संसूदितौ । यवनकः । च । पला । कीर्तिः । विमला विरता । प्रतता । विश्वाधिपावनी । ईलाविरता ॥ २८ ॥**

## टीका

हरिणा हंसडिबिकौ यवनश्च निषूदिताः ।
परा च कीर्तिरमला विशिष्टा हि रताः सुराः ॥ १२८ ॥
यस्यां सा विरता तेन सा प्रविस्तारिता शुभा ।
पावयित्री च विश्वस्मादधिकं सर्वमेव च ॥ १२९ ॥
ईरेणाविश्च सर्वत्र संतता हि महात्मनः ॥ २८ ॥

( टि० ) **अमुना** कृष्णेन **हंसो डिबिकश्च संसूदितौ । यवनकश्च** संसूदितः । कीदृशौ हंसडिबिकौ । **चपलौ** चञ्चलौ । तेन कृष्णेन **पला** परा **विमला** निर्मला **विरता** विशिष्टाः ब्रह्मादयो रता यस्यां सा तथा । **विश्वाधिपावनी** विश्वस्मात् सर्वस्मात् शोधकात् अधिकं पावयतीति पावनी सर्वमिति शेषः । **ईलाविरता** । ईलः ईशो(रो) वायुः तेना**विः** प्राकट्यं अता प्राप्ता अत सातत्यगमने इति धातोः । 'अनुनासिकस्य क्विझलोः क्ङिति' [ ६।४।१५ ] इति मलोपः । एवंभूता **कीर्तिः प्रतता** प्रतापि(यि)ता विस्तारिता ॥ २८ ॥

( ति० ) .... तथा यवनकः कालयवनः निषूदितः .... ॥२८॥

( भ० ) .... अत्र यवनहननोक्तिर्हननप्रकरणादेव । न तु कथाक्रमानुसारेण । रुक्मिण्याहरणात्प्रागेव तस्य हतत्वात् । **अता** सर्वत्र संतता चेत्यर्थः ॥ २८ ॥ ( या० ) **प्रतता** प्रकर्षेण व्याप्ता । कृतेति शेषः ।

## मूलम्

**सत्याजाम्ववतीर्या भार्या विन्दाद्या भानुसांववतीर्याः ।**
**प्रद्युम्नं मोदरतः प्राप ज्येष्ठं हरिः सुतं मोदरतः ॥ २९ ॥**

**(पद०) सत्याजाम्बवतीर्याः । ( तीः । याः । ) भार्याः । विन्दाद्याः । भानुसांबवतीः । याः । प्रद्युम्नं । मोदरतः । प्राप । ज्येष्ठं । हरिः । सुतं । मोदरतः ॥ २९ ॥**

## टीका

सत्या जाम्बवती चाऽऽर्ये (च द्वे) यासां ताः प्राप केशवः ॥१२०॥
मित्रविन्दादिका भार्या भानुसाम्बवतीः प्रभुः ।
प्रद्युम्नाख्यं सुतं ज्येष्ठं हरिः प्राप रमोदरात् ॥ १२१ ॥
मोदे रतो हि भैष्म्याख्यविषयोत्थे सुखे सुखी ॥ २९ ॥

( टि० ) **हरिः** कृष्णः सत्या जाम्बवती द्वे यासां ताः सत्याजाम्बवत्यः ताः **सत्याजाम्बवतीः** । स्वरूपे प्रत्ययो नेष्ट इति न्यायात् । एवं भूता **याः** याश्च विन्दाद्या नामैकदेशग्रहणमिति न्यायात् **मित्रविन्दाद्याः** ताश्च भार्याः प्राप । कथंभूताः सत्याजाम्बवतीः । **याः भानुसाम्बवतीः** । तन्नामकपुत्रवतीः । **हरिः मोदरतः** माया लक्ष्म्या रुक्मिण्याः उदरतः **ज्येष्ठं सुतं** पुत्रं **प्रद्युम्नं** तन्नामकं **प्राप** । कीदृशः **मोदरतः** भैष्म्याख्यविषयोत्थे सुखे रतः ॥ २९ ॥

( ति० ) **सत्याजाम्बवतीर्याः** सत्या सत्यभामा जाम्बवतीति द्वे ईर्ये ( स्तुत्ये. ना० ) श्रेष्ठे यासां ताः .... ॥ २९ ॥

(भ०)....**सत्याजाम्बवतीर्याः** । सत्या सत्यभामा जाम्बवती च ईर्ये आर्ये यासां तास्तथोक्तास्ता इत्यर्थः । आर्यतायामतिशयज्ञापनायेर्येत्युक्तम् । तृतीयोऽतिशये इति [ महाव्याकरण ] सूत्रात् । .... अत्र सत्याजाम्बवतीपरिणयनोक्तिः परिणयनप्रकरणादेव । हंसडिभिकवधात्प्रागेव तस्य वृत्तत्वात् .... मोदो भोगनिमित्तकः । मुख्नामविषयोत्थं यदित्यादिवचनात् । तत्र रत इत्यर्थः । नन्वेवं तर्हि विषयभोगं विना सुखाभिव्यक्तिः किं तस्य नेत्यतोप्युक्तम् । **मोदरत इति** । विषयनिरपेक्षानित्याभिव्यक्तसुखे रतोऽपि लीलयैव रुक्मिण्यादिविषयान्बुभुज इति भावः । यथोक्तं पूर्वटीकायाम् 'मोदे रतो हि भैष्म्याख्यविषयोत्थे सुखे सुखी' ति । यद्यपीयमपि कथा सत्याजाम्बवत्यादिपरिग्रहतः प्रागेव वृत्ता । तथापि प्रद्युम्नस्य कैलासयात्रानन्तरं पुनः प्रद्युम्नस्य सद्योजननकथाया अपि संग्रहार्थमत्रोक्ता ॥ २९ ॥

## मूलम्

**यत्परिवारतयेशा जाता देवा नृपात्मानाऽरतयेशाः ॥**
**यद्भरितं विषसर्पप्रभृतिध्वान्तं न मारुतिं विषसर्प ॥३०॥**

**(पद०) यत्परिवारतया । ईशाः । जाताः । देवाः । नृपात्मना । (अ) रतयेशाः । यद्भरितं । विषसर्पप्रभृतिध्वान्तं । न मारुतिं । विषसर्प ॥ ३० ॥**

## टीका

यत्परिवारतया यस्य **जाताः** देवा नृपात्मना ॥ १२२ ॥
ईशास्ते सर्वलोकानां येषामीशो रतो मरुत् ।
येन पूर्णं नहि प्राप विषसर्पादिजं तमः ॥ १२३ ॥
भीमम् .... .... .... .... ॥ ३० ॥

( टि० ) **यत्परिवारतया** यत्परिवारत्वेन **देवा** रुद्राद्या **नृपात्मना** उपलक्षणमेतत् । द्विजाद्यात्मना **जाताः** कीदृशाः । **ईशाः** । लोकानामिति शेषः । पुनः कीदृशाः **रतयेशाः** । रतश्चासौ एतीति यः* वायुश्च रतयः स ईशो येषां ते तथोक्ताः । **यद्भरितं** येन कृष्णेन पूर्णं । **मारुतिं** भीमं । **विषसर्पप्रभृतिध्वान्तं** । विषसर्पप्रभृतिजं तमः **न विषसर्प** न प्राप ॥३०॥

( ति० ) यस्त्यागे निलये वायावित्यभिधानात् .... ॥ ३० ॥

(म०) इतःपरं भारतीं पाण्डवकथामुपक्रमते । **यत्परिवारतयेत्यादिना** ॥३०॥ ( यादु. ) अः परमात्मा तस्मिन् रत अरतः ....**अरतयेशाः** ॥३०॥

## मूलम्

**येन हिडिम्बबकाद्या रक्षोधीशा निपातिता बबकाद्याः ॥**
**भीमे प्रीतिममेयां व्यञ्जयता तेन शेषपाति ममे याम् ॥३१॥**

**( पद० ) येन । हिडिम्बबकाद्याः । रक्षोधीशाः । निपातिताः ॥ बबकाद्याः । भीमे । प्रीतिं । अमेयां । व्यञ्जयता । तेन शेषपाति । ममे । याम् ॥ ३१ ॥**

---

* ल० टि० ' योवायुरितिशाब्दितः ' ' इति एकाक्षरकोशे '

## टीका

....येनैव कृष्णेन हिडिम्बाद्या निपातिताः ।
रक्षोऽधीशाश्च मांसादाः प्रीतिं व्यञ्जयताऽसमाम् ॥ १२४ ॥
भीमे, तेनैव भीमेन निमित्तेन हता इति ।
शेषोऽनन्तः पतीं रुद्र आभ्यामतिशयो यथा ॥ १२५ ॥
तथा यां निर्ममे प्रीतिं भीमसेने जनार्दनः ॥ ३१ ॥

(टि०) **येनैव** कृष्णेन **तेनैव** भीमेनैव **हिडिम्बवकाद्या रक्षोधीशा निपातिताः** । कीदृशाः । **बबकाद्याः** बं उदकं तन्मयत्वाद्बं मांसं ' अम्मयं तु यतो मांसामि ' ति । बकन्ति बक भक्षण इति धातोः मत्स्याद्याहारिणो मनुष्या बबकास्ते आद्याः खाद्याः भक्ष्या येषां ते तथोक्ताः। नराशना इत्यर्थः। कीदृशेन भगवता । **भीमे** तां **अमेयां** मातुमशक्यां असमां असदृशीं **प्रीतिं व्यञ्जयता** । कथं यतो भगवान् भीमं तद्धनने निमित्तीकृतवान् । तां कां । **यां** भगवान् **शेषपाति** शेषश्च पातीति पश्च ( पशुपश्च ति० ) रुद्रश्च नामैकदेशग्रहणेन नामग्रहणमिति न्यायेन तौ शेषपौ ताभ्यां अति अतिशयो यथा भवति तथा शेषपाति । **ममे** निर्ममे ॥ ३१ ॥

(ति०) **बबकाद्याः** बबकं अद्यं येषां ते तथा हिडिम्बबकाद्याः ॥३१॥

( भ० ) **बबकाद्याः** ब कामने वकभक्षणे इति धातोः काम्यत्वाद्-भक्ष्यत्वाच्च बबकं मांसम्....अद्यं अदनयोग्यं (ना०) अद्यं ॥ ३१ ॥

## मूलम्

**अथ कृष्णावरणे तान् प्राप्तान्राज्ञोऽशृणोत्सदावरणेतान् ।**
**द्रष्टुं यातस्सवलस्तांचानैषीत्पृथासुतांस्ततःसबलः ॥ ३२ ॥**

**(पद०) अथ । कृष्णावरणे । तान् । प्राप्तान् । राज्ञः । अशृणोत् । सदावरणेतान् । द्रष्टुं । यातः । सवलः । तां । च । अनैषीत् । पृथासुतान् । ततः । सबलः ॥३२॥**

## टीका

द्रौपदीवरणे चाथ प्राप्तान्राज्ञोऽशृणोद्धरिः ॥ १२६ ॥
तानेव भग्नमाना ये रुक्मिणीहरणे पुरा ।

सत्सु चाऽऽवरणोपेतानतस्तज्ज्ञानवर्जितान् ॥ १२७ ॥
स्वयमप्यगमत्तत्र द्रष्टुमेव बलान्वितः ।
तां कृष्णामनयत्कृष्णः पांडवांश्च गजाह्वयम् ॥ १२८ ॥
ततो गजाह्वयात्कृष्णः सवरो वरदानतः ॥ ३२ ॥

( टि० ) अथ कृष्णः **तान् राज्ञः कृष्णावरणे** द्रौपदीस्वीकरणार्थं प्राप्तान् **अभृणोत्** । कीदृशान् । **सदावरणेतान्** सत्सु भगवदादिषु विषये ( सदा ) आवरणेन अज्ञानेन इतान् युक्तान् । अत एव भगवत्सर्वोत्तमत्व-ब्रह्मादितत्परिवारत्वज्ञानवर्जितान् । स्वयं **च तां** कृष्णां **द्रष्टुं** द्रष्टुमेव **सबलः** बलान्वितो **यातः** तत्रागमत् । ततः कृष्णः **तां** कृष्णां **पृथासुतान्** पाण्डवांश्च गजाह्वयं **अनैषीत्** निनाय ॥ ३२ ॥

( भ० ) **ततो** गजाह्वयात्पुन**स्तां पृथासुतांश्च सबलः** सवरः । तेषामाशीर्वादरूपं वरं दत्वेति यावत् । **इन्द्रस्थलवासांश्चक्र** इत्युत्तरेणान्वयः ।

## मूलम्

**तानिन्द्रस्थलवासांश्चक्रे कृष्णः पु (प)रो निजस्थलवासान् ।**
**स्वबलोद्रेचितमानैर्जुगोप धर्मं च तैः पराचितमानैः ॥ ३३ ॥**

**(पद०) तान् । इन्द्रस्थलवासान् । चक्रे । कृष्णः । पु (प)रः । निजस्थलवासान् । स्वबलोद्रेचितमानैः । जुगोप । धर्मं च । तैः । पराचि ( अचि ) तमानैः ॥ ३३ ॥**

## टीका

पार्थानिन्द्रस्थलस्थांस्तांश्चकार परमेश्वरः ॥ १२९ ॥
स्वभृत्येषु स्थितो यस्मादाज्ञारूपो रवो हरेः ।
तत्रैवास्यन्ति ये नित्यं न चलन्ति कुतोऽपि तान् ॥ १३० ॥
निजत्वेन स्थितं विश्वं वाय्वादीनां महात्मनाम् ।
तस्यांशे लवशब्दोक्त आसीनानिति वा भवेत् ॥ १३१ ॥
हरिः स्वबलसंवृद्धैः पार्थैर्धर्मं जुगोप तैः ।
उत्तमैरार्जितो मानो येषां तैर्जितशत्रुभिः ॥ १३२ ॥ ३३ ॥

(टि०) पूर्वश्लोकात्ततः **सबल** इत्यनुवर्तते । तत इत्यस्य तन्त्रन्यायः । **ततस्तदनन्तरं ततः** गजाह्वयात् **पुरः** पुरतः नगरात् **कृष्णः तान्** पाण्डवान् **इन्द्रस्थलवासान्** इन्द्रस्थले इन्द्रप्रस्थे वासो येषां ते तथोक्तास्तान् **चक्रे** । कीदृशान् तान् **निजस्थलवासान्** निजेषु भृत्येषु ब्रह्मादिषु तिष्ठतीति निजस्थः स चासौ लवश्च आज्ञारूपो धर्मानुशास्तिरूपो रवः शब्दः 'अहरहः संध्यामुपासीत' त्यादिः तस्याऽऽज्ञात्वं च श्रुतिस्मृती ममैवाज्ञे इत्यादि-प्रमाणात् । निजस्थलवे आस्यन्ति नित्यं तिष्ठन्ति ते निजस्थलवासाः संपूर्ण-वेदविहितकर्मानुष्ठातारस्तान् । तदुक्तं न्यायविवरणे 'चरन्ति देवा विहितं समस्तमर्धमेव मुनयो दशांशतो मनुष्याः' इति । यद्वा निजं तिष्ठन्तीति निजस्थं निजत्वेन स्थितं विश्वं । निजस्थविश्वलवस्य आसा अवस्थानं येषां ते तथोक्तास्तान् स्वांशैर्महदादितत्त्वानि तत्कार्यदेहेन्द्रियादींश्च व्याप्य स्थिता-नित्यर्थः । तदुक्तम् । 'ता एता देवताः सृष्टा' इत्यादौ । **कृष्णः स्वबलोद्रेचितमानैः** स्वबलेन स्वसामर्थ्येन उद्रेचितः उद्रेकं प्रापितो मानो नियम्यनियामकत्वादिरूपो येषां ते तथोक्तास्तैः स्वबलसंवृद्धैः **तैः** प्रार्थैः **धर्मं जुगोप** । कीदृशैः तैः **पराचितमानैः** परैः उत्तमैः आचितः सम्यग्विस्तारितो मानः पूजारूपो येषां ते तथा तैः भगवद्भक्तनृपवर्यपूजितैरित्यर्थः । कीदृशैः **पराचितमानैः** पराचितः पराकृतः मानः अहंकारो वैरिणां यैस्तैः तथोक्तैरिति जितशत्रुभिरित्यर्थः ॥ ३३ ॥

( भ० ) .... **निजस्थलवासान्** निजेषु भृत्येषु तिष्ठतीति निजस्थः स चासौ लवो रवः शब्दश्चेति निजस्थलवो भगवदाज्ञारूपस्तस्मिन्नेवास्यन्ति तिष्ठन्ति न पुनस्ततः कदाचित्कुतश्चिदपि चलन्तीति निजस्थलवासास्तान् । भगवदाज्ञानुसारेणैव प्रवर्तमानानित्यर्थः । **परः** सर्वोत्तमः या० ॥ ३३ ॥

( ना० ) एवं च इन्द्रस्थलवासो न कौरवाणां दाक्षिण्येन किं तु भगवदाज्ञयैवेति भावः । **निजस्थले** वैकुण्ठे **वासयो**ग्यानिति वा । **पराञ्चि-तमानैः** परेषां शत्रूणां अंचितः दूरीकृतः मानः अभिमानः यैस्तैः ॥ ३३ ॥

## मूलम्

**वालिवधानुनयाय प्रणयी सख्यं सुसंदधेऽनुनयाय ।**
**वासवजेन विशेषात्तेनैव पुनर्नृजन्मजेन विशेषात् ॥ ३४ ॥**

( पद० ) वालिवधानुनयाय । प्रणयी । सख्यं । सुसंदधे । अनुनयाय । ( नु नयाय ) । वासवजेन । विशेषात् । तेन । एव । पुनः । नृजन्मजेन । विशेषात् ॥ ३४ ॥

### टीका

वालिनो यो वधः पूर्वमपराधं विना कृतः ।
तत्क्लेशवारणायेशः प्रीत्या सख्यं सुसंदधे ॥ १३३ ॥
तेनैव वालिनेन्द्रेण नृषु जातेन, तस्य च ।
नहि खेदस्तथापांशो न्यायादनुनिनाय तम् ॥ १३४ ॥
न खेदकारणं तस्य सर्वलोकैककर्तरि ।
योऽप्यन्तेऽस्ति गरुत्मन्तं शेषं च नृहरिःस्वयम् ॥ १३५ ॥ ३४ ॥

( टि० ) कृष्णः **तेनैव वासवजेन** वालिना **पुनर्जन्मजेन** पार्थेन **विशेषात् सख्यं सुसंदधे** । किमर्थं । **वालिवधानुनयाय** । वालिनः अपराधं विना यो वधः तस्य अनुयाय तत्प्रीति । (त्प्रती)काराय । यद्यपि भगवता वधे कृते वालिनः क्लेशो नास्ति तथापि **अनुनयाय** न्यायानुसरणाय । किमर्थं क्लेशाभावः यतो भगवानन्ते प्रलये **विशेषात्** विश्च शेषश्च विशेषौ शेषगरुडौ अत्ति । कथं भूतः कृष्णः । **प्रणयी** स्नेहवान् इन्द्रावतारे वालिनीति शेषः ॥ ३४ ॥

( भ० ) .... **अनुनयाय** सान्त्वनाय । तज्जनितवालिक्लेशवारणायेति यावत् । .... नु इदानीं कृष्णावतारे .... ननु वृथा हतोऽयं मयेति खेदेन सख्यं कृतवान्किं नेत्याशयेनाह । **नयायेति** । नयो न्यायः लोकन्यायशिक्षणायेत्यर्थः ।: ३४ ॥ ति० **नयाय नु** नीतये हि ॥ ३४ ॥

### मूलम्

**मातुः परिभवहाऽन्यै राज्ञा द्युसदामितश्च परिभवहान्यै ।**
**अभवन्नरकमुरारिर्योऽवासी (त्सी) दत्समस्तनरकमुरारिः ॥ ३५ ॥**

**( पद० ) मातुः । परिभवहा । अन्यैः राज्ञा । द्युसदां । इतः । च । परिभवहान्यै । अभवत् । नरकमुरारिः । यः अवासीदत् । समस्तनरकं । ( अवात्सीत् अत्समस्तनरकं । ) उरारिः ॥ ३५ ॥**

## टीका

इन्द्रः स्वर्गसदां राजा तेनेतः शरणं हरिः ।
पराजयविनाशाय मातुरन्यैश्च केशवः ॥ १३६ ॥
मुनिभिः परितो हन्ता भवस्य नरकादिहा ।
अभवद्यो ह्यने ( हि ते ) नैव महिम्ना स नृणां च कम् ॥१३७॥
इन्द्रियेशं मनः प्राप यस्येलाऽली स वै हरिः ।
उकारःस्यादिकारार्थे तृतीयोऽतिशये यतः ॥ १३८ ॥
महेला कोलमहिला या हीलामाविशद्रमा ।
अथवा सत्यभामाऽली सापि भूरिति हीरिता ॥ १३९ ॥ ३५ ॥

( टि० ) दिवि सीदन्तीति द्युसदो देवास्तेषां **द्युसदां राज्ञा** स्वामिना इन्द्रेण तथा **अन्यैः** मुनिभिश्च शरणं **इतः** प्राप्तः । इन्द्रमाज्ञाप्य मुनिभिः परिहृतः परिकृतः* **मातुः** अदित्याः **परिभवहान्यै** पराजयविनाशाय **नरकमुरारिः** नरकासुरमुरयोः हन्ता **अभवत्** । कथंभूतः **परिभवहा** संसारनाशकः परत्र, इह नरकासुररूपपरिभवहा यः कृष्णो अनेनैव महिम्ना **समस्तनरकं** समस्तनराणां कं इन्द्रियेशं मनः **असीदत् वा** प्रापैव । भगवन्तं विना अन्यो रक्षको नास्तीति समस्तभक्तानां मनांसि तमेव गच्छन्तीति भावः । कीदृशः **उरारिः** : उरा इरा ' तृतीयोऽतिशये ' [ महाव्या० ] महेला का इला मा लक्ष्मीर्हि इला कस्मात् या हि लक्ष्मीः इलां भूमिमाविशत् । अथवा महेला सत्यभामा सा इला भूरित्युच्यते महेला श्रीः रुक्मिणी । अथवा महेला सत्यभामा । आरिः आलिः सखी यस्य स उरारिः महेलालिः ॥ ३५ ॥

( भ० ) स एवरा **उरारिः** । रलयोरभेदात् । वराहरूपीति यावत् । तथा च यः पूर्वं वराहरूपेण नरकं धरायां जनयामास स एवेदानीं कृष्णरूपेण तदरिरभवदिति भावः । यद्वा **कमि**ति द्वितीया सप्तम्यर्थे । **मनसि अवात्सीत्** अवसदित्यर्थः । उक्तमाहात्म्यवत्तया समस्तज्ञानिध्येयोऽभवदिति भावः । **अत्समस्तनरकम्** । अत् व्याप्तं यन्माहात्म्यं तेन .... ॥ ३५ ॥

## मूलम्

**नीतो दिवि देववरै रेमे सत्यासमन्वितोऽदेववरैः ।**
**सर्वर्तुवने शशिना निशि सत्यां वासरे वनेऽशशिना ॥ ३६ ॥**

**( पद० ) नीतः । दिवि । देववरैः । रेमे । सत्यासमन्वितः । अदेववरैः । सर्वर्तुवने । शशिना । निशि । सत्यां । वासरे । वने । अशशिना ॥ ३६ ॥**

## टीका

स जगाम दिवं देवैरर्चितं सत्यया सह ।
असुरोच्चबलैर्यद्वा वरो येषाम एव तैः ॥ १४० ॥
अर्चितः स ततो गच्छन् रेमे नित्यसुखाम्बुधिः ।
सदा सर्वर्तुसंपद्भिः संसेव्ये नन्दने वने ॥ १४१ ॥
शशिना निशि सत्यां वै वासरे सति भानुना ।
शशवान्नहि भानुर्यद्वासरस्य स कारणम् ॥ १४२ ॥ ३६ ॥

( टि० ) **देववरैर्दिवि नीतः** पूजितश्च कृष्णः स्वर्गतो निर्गच्छन् । **सत्यासमन्वितः सर्वर्तुवने** सर्वर्तुभिर्विननीये संसेव्ये **वने** नन्दननाम्नि । **रेमे** चिक्रीडे । कथंभूतैः देववरैः । **अदेववरैः** अश्चासौ देवश्च क्रीडादिगुणविशिष्टश्च तेन वरं वलं येषां ते तथोक्तास्तैः । यद्वा आल्यो देवो वरो [ वरणीयः ] येषां तैरिति । कस्मिन्सति **शशिना निशि सत्यां** । **अशशिना** [ शशिभिन्नेन ति० ] भानुना **वासरे** दिवसे सति ॥ ३६ ॥

( ति० ) **दे** दातरि हरौ । **अववरैः** । अव अवकृष्टं वरं वलं येषां ते तथा तैः । यद्वा **देवो** हरि**र्वरः** श्रेष्ठो येषां तैः ॥ ३६ ॥

( म० ) .... **अदेववरैः** । अदेवाः असुराः । वरशब्द आवर्तनीयः । अदेवेभ्योऽपि वरमुच्चं वरं वलं येषामित्यदेववरास्तैरित्यर्थः । **अशशिना** शशरूपकलङ्कशून्येन **शशिना** चन्द्रेण **निशि, वासरे** दिवासमायां सत्यामिति वा ॥ ३६ ॥

## मूलम्

**सुरतरुमापालिमतात्प्रकाशयन् शक्तिमात्मनः पालिमतात् ।
सुरवरवीरेषु दरी प्रधानजीवेश्वरः परेषुदरी ॥ ३७ ॥**

**( पद० ) सुरतरुं । आप । आलिमतात् । प्रकाशयन् । शक्तिं । आत्मनः । पालिमतात् । सुरवरवीरेषु । दरी । प्रधानजीवेश्वरः । परेषुदरी ॥ ३७ ॥**

टीका

अमरोत्तमवीरेषु निजां शक्तिं प्रकाशयन् ।
सत्यभामामताच्छङ्खपाणिः प्राप सुराङ्घ्रिपम् ॥ १४३ ॥
लोकानां पालका ये तु तद्राट्पाली शचीपतिः ।
अभ्यादत्तन्मतं कृष्णो जित्वा तान्सुरपुंगवान् ॥ १४४ ॥
प्रधानस्य च जीवानामीश्वरः परबाणभित् ।
प्रधानजीवा ब्रह्माद्यास्तेषामीशोऽथवा भवेत् ॥ १४५ ॥ ३७ ॥

( टि० ) **दरी** शङ्खपाणिः **सुरवरवीरेषु** सुरवरेषु अमरोत्तमेषु वीरेषु **आत्मनः शाक्तिं** निजसामर्थ्यं **प्रकाशयन्** । **आलिमतात्** आलिः सखी सत्यभामा तस्याः मतात् तन्मतमवष्टभ्य । **सुरतरुं** पारिजातं **आप** । कीदृशः । **पालिमतात्** । पालयन्तीति पाला दिक्पालास्ते विद्यन्ते यस्य स पाली तेषां राजा इत्यर्थः । तस्य महेन्द्रस्य मतं संकल्पमत्ति नाशयतीति पालिमतात् । असुरावेशेन शचीदाक्षिण्यात् कृष्णं जित्वा पारिजातमानायिष्यामीति यः संकल्पस्तन्नाशक इत्यर्थः । कीदृशः **प्रधानजीवेश्वरः** । पुनः कीदृशः । **परेषुदरी** । परेषां शक्रादीनां शत्रूणां इषून् बाणान् दृणाति छिनत्तीति परेषुदरी ॥ ३७ ॥

( भ० ) **प्रधानजीवेश्वर इति** । प्रधानस्य प्रकृतेर्जीवानां चेश्वर इत्यर्थः । प्रधानजीवानां ब्रह्मादीनामीश्वर इति वा ॥ ३७ ॥

मूलम्

**पुरमभियायारिदरी दत्त्वा भद्रां पृथासुतायारिदरी ।**
**शक्रपुरीमभियातः प्रादाद्वह्नेर्वनं सतामभियातः ॥ ३८ ॥**

**( पद० ) पुरं । अभियाय । अरिदरी । दत्त्वा । भद्रां । पृथासुताय । अरिदरी । शक्रपुरीं । अभियातः । प्रादात् । वह्नेः । वनं । सतां । अभिया । अतः ॥ ३८ ॥**

टीका

शङ्खचक्रधरः कृष्णः पुनर् (पूर्वं) द्वारावतीं ययौ ।
अर्जुनाय सुभद्रां च दत्त्वा शक्रपुरीं ययौ ॥ १४६ ॥

सुयोधनाय वाचा तां बलदत्तां सुरारिभित् ।
ततो गत्वा वनं कृष्णो ददौ खाण्डवमग्नये ॥ १४७ ॥

तत्रत्यानामभीत्यैव जरितर्यादिनां सताम् ।
तत्र युद्धागतानां वाऽभिया शक्रादिनां सताम् ॥ १४८ ॥ ३८ ॥

( टि० ) **अरिदरी** चक्रशङ्खधरः श्रीकृष्णः पुनः **पुरं** द्वारवतीं **अभियाय** परसवर्णः छन्दोभङ्गभयाद्वा ह्रस्वः । अभीयाय । किं कृत्वा **पृथा-सुताय** अर्जुनाय **भद्रां** सुभद्रां **दत्त्वा** । कीदृशीं **भद्रां** भद्रेण बलभद्रेण भद्राय भं ज्ञानं तेन स्वरूपेण द्रः कुत्सितः द्रा कुत्सायामिति धातोः तस्मै सुयोधनाय रां रातां दत्तां वाचेति शेषः । भद्रामिति वक्तव्ये ' समाने लोपः ' [ ? ] इति सूत्रान्निरुक्तत्वाद्वा भद्रामित्युक्तम् । कीदृशः कृष्णः **अरिदरी** अरीन् सुरारीन् दृणातीति । ततः **शक्रपुरी**मिन्द्रप्रस्थं **अभियातः** । ततः कस्मिंश्चिद्दिवसे **वनं** यातः । **वनं** खाण्डवाख्यं वह्नेः संप्रदानस्याविवक्षितत्वात्षष्ठी अग्नये । **प्रादात्** । कया । **सतां** तत्रत्यानां जरितर्यादीनां **अतः** वह्नेः सकाशाम् **अभिया** अभीत्यैव अथवा तत्र युद्धागतानां **सतां** इन्द्रादीनामभिया ॥ ३८ ॥

## मूलम्

**शिवभक्तप्रवराग्र्यं पुमान्नसेहे गिरी(रि) शविप्रवराग्र्यम् ।**
**तं स्वात्मेंद्रवरेण व्यधुनोद्भीमेन धृतरुद्रवरेण ॥ ३९ ॥**

**( पद० ) शिवभक्तप्रवराग्र्यं । पुमान् । न । सेहे । गिरीश-विप्रवरात् । यं । तं । स्वात्मेन्द्रवरेण । व्यधुनोत् । भीमेन । धृतरुद्रवरेण ॥ ३९ ॥**

## टीका

परमः पुरुषो विष्णुर्न सेहे यं स्वयं प्रभुः ।
तं भीमेन जघानाऽऽत्मभक्तश्रेष्ठेन मागधम् ॥ १४९ ॥
शिवभक्तवरे ( ष्वा ) प्याद्यं हरचण्डवरादलम् ।
येषां रुद्रवरास्तेऽपि हता भीमेन राक्षसाः ॥ १५० ॥ ३९ ॥

( टि० ) **पुमान्** परमः पुरुषो भगवान् **यं न सेहे तं गिरीशवि-प्रवरात्** हरचण्डमुनिवरात् शिवभक्तवराद्यं **शिवभक्तप्रवराद्यं** शिवभक्तवरेण्याद्यं **स्वात्मेन्द्रवरेण** स्वस्मिन्नात्मा मनो येषां ते स्वात्मानः स्वभक्तास्तेषा-मिन्द्राः स्वामिनो रुद्रादयः तेभ्यो वरेण **भीमेन व्यधुनोत्** जघान । कीदृशेन भीमेन **धूतरुद्रवरेण** धूतः विफलीकृतः रुद्रवरो येन स तथा तेन । अन्येऽपि दुर्जीवाः भगवता भीमेनैव निपातिता इत्यर्थः ॥ ३९ ॥

( भ० ) **गिरिशो**=रुद्रः.... **धूतरुद्रवरेण** । धूताः हताः रुद्रवराः रुद्रवरोपेताः अन्येऽपि राक्षसा येनासौ तथोक्तस्तेन । .... ॥ ३९ ॥

( ना० ) **धूतरुद्रवरेण** । धूताः निर्धूताः रुद्रवराः येन स तथोक्तः । तत्र हेतुः **स्वात्मेन्द्रवरेण** .... ॥ ३९ ॥

## मूलम्

**यस्याज्ञाबलसारैः पार्थैर्दिग्भ्यो हृतं धनं बलसारैः ।**
**जित्वा क्ष्मामविशेषां प्रसह्य भूपान् समस्तकामविशेषाम् ॥ ४० ॥**

**( पद० ) यस्य । आज्ञाबलसारैः । पार्थैः । दिग्भ्यः । हृतं । धनं । बलसारैः । जित्वा । क्ष्मां । अविशेषां । प्रसह्य । भूपान् । समस्तकामविशेषां ॥ ४० ॥**

## टीका

यस्याज्ञया बलं सारो येषां तैः पाण्डवैः पृथक् ।
दिग्भ्यो धनमुपानीतं सरद्भिः सैनिकैः स्वकैः ॥ १५१ ॥
जित्वा प्रसह्य नृपतीन्वशे कृत्वा वसुंधराम् ॥ ४० ॥

( टि० ) **यस्य** कृष्णस्य **आज्ञया बलं** शारीरं **सारो** वीर्यं येषां ते तथोक्तास्तैः **पार्थैः बलसारैः** सरन्तीति साराणि तानि च तानि बलानि च सैन्यानि च तानि बलसाराणि तैः ( पूर्वनिपातोऽत्र बोध्यः ति० ) **दिग्भ्यो धनं** पृथक् पृथक् **हृतम्** आनीतं । किं कृत्वा **प्रसह्य भूपान् जित्वा क्ष्मां** च **जित्वा** वशे कृत्वा । कीदृशीं क्ष्मां । **अविशेषां** इयमेव तत्स्वामिका इयमेतत्स्वामिकेति विशेषरहितां । पुनः कीदृशीं । **समस्तकामविशेषां** काम्यन्त इति कामास्तेषां विशेषाः समस्तास्ते कामविशेषा विषयसाराः यस्याः सा तथोक्ता तामित्यर्थः ॥ ४० ॥

( भ० ) **बलसारैः** । बलैः स्वसैन्यैः सरन्तीति बलसारास्तैः । .... **अविशेषां** । सामान्यरूपां समस्तामिति यावत् **समस्तकामविशेषां** सकलेप्सितविशेषवतीं **क्ष्मां** भूमिं च .... ॥ ४० ॥

## मूलम्

**अथ पार्थान् क्रतुराजं प्रापयदमरेट् सरुद्रशक्रतुराजम् ।**
**पूजा तेनावापि छिन्नश्चैद्यः स्मृतिं गतेनावापि ॥ ४१ ॥**
**( पद० ) अथ । पार्थान् । क्रतुराजं । प्रापयत् । अमरेट् । सरुद्रशक्रतुराजं । पूजा । तेन । अवापि । छिन्नः । चैद्यः । स्मृतिं । गतेन । अवापि ॥ ४१ ॥**
**( गते । नावा । अपि ( आपि )**

## टीका

प्रापमायास देवेशः क्रतुराजं पृथासुतान् ॥ १५२ ॥
अजे ( न ) रशिवशक्राद्या यत्रेज्याः परितो हरिम् ।
अग्रपूजानुनैवाप्ता प्रतिपक्षोऽत्र चेदिपः ॥ १५३ ॥
हतस्तेनैव हरिणा तम एव प्रपेदिवान् ।
तस्य संसर्गदोषेण स्वभृत्ये कुस्मृतिं गते ॥ १५४ ॥
तत्तारणाय नावा .... .... .... ॥ ४१ ॥

( टि० ) **अमरेट्** अमरैः इज्यतेऽसौ **अमरेट्** देवेशः पृथासुतान् **क्रतुराजं** राजसूयसहितं परमाश्वमेधं **प्रापयत्** प्रापयामास । **सरुद्रशक्रतुराजं** रुद्रशक्राभ्यां सहिता तुरः सरुद्रशक्रतुरः त्वरन्ते भगवत्सेवायां, तीर्णा जरामिति च तुरः । अजरा इत्यर्थः । सरुद्रशक्रतुरः **आजः** इज्या हरिपरिवारतया यस्मिन् सः सरुद्रशक्रतुराट् तं सरुद्रशक्रतराजं । **तेन** कृष्णेन **पूजा** अग्रपूजा **अपि** प्राप्ता । तदवसरे भगवन्निन्दकश्चैद्यः शिशुपालः **तेनैव छिन्नः** । हरिणैव ' ममैव वध्यौ भवतं त्रिजन्मस्वि 'ति स्ववरदानात् हतः । **अवापि**

---

यादृ० **अमरेट्** **तेने**त्यावर्तते । **अमरेट्** श्रीकृष्णः **स्मृतिंगतेन** अमुक्तेनापि **तेन** जयाविष्टेन चैद्येन **अवापि** प्राप्तः स्मृतिरहितैरेव भगवान् प्राप्यः । अयं तु स्मृतिस्थोऽपि तं प्रापेत्याश्चर्यमिति भावः ।

'तृतीयोऽतिशये' [ महा व्या० ] अवाप तम इति शेषः । तमस्यपि बहुलं दुःखं अनुबभूवेत्यर्थः । अत एव 'तम एव प्रपेदिवान्' इत्युक्तम् । महत्तम इत्यर्थः । किमर्थं हत इत्यत आह स्वभृत्ये तस्य संसर्गदोषेण कुसृतिं योनिं गते सति **नावा** ज्ञानरूपया संतरणायेति शेषः ॥ ४१ ॥

( भ० ) **तुरो** वेगवान् वायुः .... **सृतिं गते नावेति** । आविष्ट-दैत्यसंसर्गदोषेण स्वपार्षदे जये सृतिं कुगतिलक्षणनदीप्रवाहं गते सति तत्ता-रणाय नावा नैकास्थानीयेनेत्यर्थः । **तेन छिन्न** इति संबन्धः ॥ ४१ ॥

## मूलम्

**निहतौ सौभकरूशौ शीतो भातश्च येन तौ भकरूशौ ।**
**अजयद्रुद्रं च रणे वाणार्थेऽवनतिपतितकचन्द्रं चरणे ॥ ४२ ॥**

**( पद० ) निहतौ । सौभकरूशौ । शीतः । भातः । च । येन । तौ । भकरूशौ । अजयत् । रुद्रं । च । रणे । वाणार्थे । अवनतिपतितकचन्द्रं । चरणे ॥ ४२ ॥**

## टीका

.... .... .... अथ तेनान्यावपि पातितौ ।
करूशसाल्वपौ येन लोकाह्लादकरः शशी ॥ १५५ ॥
आह्लादितस्तता ( था ? ) भातो लोकस्येति दिवाकरः ।
भकश्चन्द्रो रुशद्भानुः *रुशद्वत्सेति हि श्रुतिः ॥ १५६ ॥

---

*लघुटिप्पणी १ [ऋग्वेद अ. १. अ. ८. व १ म. २.] रुशद्वत्सा रुशती श्वेत्या गादारैगु कृष्णा सदनान्यस्याः ।

रुशद्वत्सा । रुशती । श्वेत्या । आ । अगात् ॥

श्वेत्येत्युषसो नामधेयम् । रुशती दीप्ता । श्वेत्या श्वेतवर्णा उषा रुशद्वत्सा रुशत् दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता । यथा मातुः समीपे वत्सः संचरते एवमुषसः समीपे सूर्यस्य नित्यमवस्थानात्तद्वत्सत्वम् । अथवा वत्सो मातुः स्तन्यं रसं पिबन् हरति एवमुषसोऽवश्यायाख्यं ( हिमरूपं ) रसं पिबन् वत्स इत्युच्यते तादृशी सती आगात् आगतवती । अत्र निरुक्तम् [ २-२० ] रुशद्वत्सा सूर्यवत्सा रुशदिति वर्णनाम रोचते ज्वलति कर्मणः । सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वा । इति ( सायणभाष्ये ) ॥ ४२ ॥

रुश एव हि रूशः स्यादधिकं रोचते यतः ।
न हि रुद्रवरोन्मत्तानहनत्केवलं हरिः ॥ १५७ ॥
किं तु तं च रणे रुद्रमजयद्बाणहेतुतः ।
तत्प्राणरक्षणा ऽऽयातं (याऽन्ते) यस्य मौलिगतः शशी ॥ १५८ ॥
पतितश्चरणे विष्णोरवनत्या महात्मनः ॥ ४२ ॥

( टि० ) तेनैव कृष्णेनान्यावपि **सौभकरूशौ** करूशसाल्वपौ **निहतौ** निपातितौ । तेन केन, **येन तौ** प्रसिद्धौ **भकरूशौ** चन्द्रसूर्यौ । कथं । भकश्चन्द्रो रुशद्भानुः । कस्मात् चन्द्रो भकः कस्मात् भानुः रुशत् अत आह " सप्तसु प्रथमा " इति नियामकात् **शीत** इति प्रथमा पञ्चम्यर्थे भावप्रधानो निर्देशः शीतत्वादित्यर्थः । शीतत्वेन लोकाह्लादकत्वादित्यत्र तात्पर्यम् । चन्द्रशब्दार्थश्च स एव । चादि आह्लाद इति पठन्ति । भानां नक्षत्राणां कः स्वामी चन्द्रः भकः शीतत्वात् भजनीयःसेव्यः । तथा दिवाकरो **भातः**भायाः दीप्तेः रुशत् तर्हि रुश इति कथं रुश एव रूशः ( आधिक्येऽधिकमिति सूत्रात्. भ० ) अधिकं रुशते रोचत इति रूशः तेन तथा चन्द्रसूर्यौ येन लोकाह्लादप्रकाशकरावित्युक्तं भवति । न केवलं भगवान् रुद्रवरोन्मत्तानहनत् किं तु तं **रुद्रं च रणे** संग्रामे **बाणार्थे** बाणप्राणरक्षणायागतं च अजयत् । कथं महात्मनो भगवतो विष्णोः **चरणे** पादे **अवनतिपतितकचन्द्रम्** ×अवनत्या जृम्भाविसृष्टया+ निर्बलतया पतितः । स चासौ कचन्द्रश्चेति स तथोक्तस्तम् । के शिरसि चन्द्रो यस्येति विग्रहः ॥ ४२ ॥

( ति० ) .... भाति करोतीति **भक**श्चन्द्रः .... क्रमेण **शीतः** शीतलीकृतः **भातश्च** भासकीकृतः .... ॥ ४२ ॥

( भ० ) **भकरूशौ** । भ आनन्द इति धातोः **भको** लोकाह्लादकरश्चन्द्रः । .... शितः सुखितः स एव **शीतः** आह्लादितः । आधिक्यार्थे दीर्घः । **भातः** लोकस्य प्रकाशित इत्यर्थः ... **अवनिपतितकचन्द्रं** । **अवनि**रवनतिः प्रह्वीभावः तया पतितः .... ॥ ४२ ॥

( ना० ) .... **अवनिपतितः** अवाक्शिराः पतितः .... ॥ ४२ ॥

( भ० ) यद्यपि रुश हिंसायामिति रुशतिर्हिंसार्थः तथाऽपि धातूनामनेकार्थत्वादत्र रोचनार्थः । ल० टि० रूशः = तीक्ष्णप्रभः सूर्यः

× भक्तिपूर्वकप्रणामेन ( या० ) + जृम्भणास्त्रसर्जनेन

## मूलम्

**अस्रजज्ज्वरमुग्रतमःक्षयप्रदो लीलयाऽधिवरमुग्रतमः ।**
**क्रीडामात्रं विश्वं प्रकाशयन्नात्मनः स विहरकमात्रं विश्वं ॥४३॥**

**( पद० ) अस्रजत् । ज्वरं । उग्रतमः क्षयप्रदः । लीलया । अधिवरमुक् । रतमः । क्रीडामात्रं । विश्वं । प्रकाशयन् । आत्मनः । सः । विहरकमात्रं । विश्वं ॥ ४३ ॥**

## टीका

तन्मध्ये दर्शयन्युद्धं लीलयाऽऽत्मजनं ज्वरम् ॥ १५९ ॥
अजय ( जै ) त्प्रतिज्वरं सृष्ट्वा कथंचित् तद्व्यथां विना ।
इत्युग्रपदवाच्यानां दैत्यानां दुष्टचेतसाम् ॥ १६० ॥
तमोनिवासतो देवो यद्वोग्रो रुद्र उच्यते ।
तदज्ञानतमश्छेत्ता क्षुषाया अधिको वरः ॥ १६१ ॥
अनिरुद्धो हि बाणेन बद्धस्तन्मोक्षदो हरिः ।
मा रमा सा रता यस्मिन् **रतमः** सोऽभिधीयते ॥ १६२ ॥
विश्वं सर्वं स हि क्रीडामात्रमात्मन एव सः ।
प्रकाशयन्नतीताये वर्तमाना अनागताः ॥ १६३ ॥
विपाहराः प्रजेशाश्च ते कार्त्स्न्येनापि यत्र तत् ।
यद्वाऽधीनं मम सदा मद्विरोधे कथंचन ॥ १६४ ॥
गरुत्मद्धरकश्रीभिरत्रातामिति दर्शयन् ।
अजयद्बाणमशिशेः शेषं तत्प्राणरक्षणात् ॥ १६५ ॥
मद्वशत्वेन तैस्त्रातमिति वार्थः स्फुटं भवेत् ॥ ४३ ॥

( टि० ) **स** भगवान् रुद्रेण स्वीये ज्वरे विसृष्टे तं **ज्वरमसृजत्** । **लीलया** वैष्णवं प्रतिज्वरं सृष्ट्वा । कथंचित् । तस्य रौद्रज्वरस्य यथा व्यथा न भवति तथा । तेन स्तुतः सन् तस्य सामर्थ्यस्य प्रतिघातेन तमजयदित्यर्थः । कथं भूतः **उग्रतमः क्षयप्रदः** उग्राणां तमःस्वभावानां दैत्यानां क्षयं निवासं प्रददातीति तथोक्तः । यद्वा उग्रस्य रुद्रस्य तमः अज्ञानं न भगवान्कृष्ण इत्यज्ञानं तस्य क्षयप्रदो नाशप्रदः । पुनः कीदृशः **अधिवरमुक्** । उषायाः

बाणकन्यायाः अधि अधिकः स चासौ वरश्च तद्भर्ता अनिरुद्धश्च तं बाणबद्धं मुञ्चतीति अधिवरमुक् । पुनः कीदृशः **रतमः** रता मा यस्मिन्स तथोक्तः । किं कुर्वन् वलमजयत् **विश्वं** समस्तं । विश्वं जगत् **आत्मनः** स्वस्य **क्रीडामात्रं** क्रीडयैव मीयते निर्मीयते त्रायते चेति तथोक्तं । **प्रकाशयन्** प्रकटीकुर्वन् । कथंभूतं विश्वं । **विहरकमात्रं** वयो गरुडाः हरा रुद्राः के ब्रह्माणः ते विहरके मात्रं कार्त्स्न्येन साकल्येन अतीतानागतवर्तमानत्वेन यस्मिन् तत्तथा । अतीतानागतवर्तमानब्रह्मादिसहितमित्यर्थः । यद्वा विरहकमाभिः पूर्वोक्तैरेव त्रा त्राणं स्वाज्ञया रक्षणं यस्य तत्तथोक्तम् । इति प्रकाशयन् । बाणमिति शेषः । अजयत् ईशेश इत्यनेन ईशमजयदित्यागतं । शेषं चाजयत् । तदात्मकबलभद्ररक्षणात् ॥ ४३ ॥

( ति० ) **सविहरकमात्रं** विश्वं हरश्च कश्च विहरकाः सर्वे विहरकाः विहरकमात्रं तेन सहितम् । ........ यद्वा मदनुग्रहाभावे विहरकमाभिः गरुडशिवविधिश्रीभिः अत्रं त्रायत इति त्रं न त्रं अत्रं अरक्षितम् । एतत्पक्षे स इति भिन्नं पदम् । मदनुग्रहे सति मदधीनत्वेन तैस्त्रातमिति वा ॥ ४३ ॥

( भ० ) रुद्रजयात्पूर्वमनन्तरं च वृत्तां कथां दर्शयति **असृजादिति ।** .... अजयदिति पूर्वश्लोकादनुवृत्त्या योज्यम् । एतच्च ज्वरजयाय प्रतिज्वरसर्जनं कृष्णस्य लीलयैव । न तु तज्जयस्य स्वाशक्यत्वादित्याशयेनोक्तं **लीलयेति** । किं च **उग्रतमः क्षयप्रदः** । तमसि क्षयं=निवासं बाणभटान् हत्वा तान् तमसि पातयामासेति भावः .... ॥ ४३ ॥

( ना० ) भगवत्यननुकूले कस्यापि रक्षणसामर्थ्यं नास्ति । अतो रुद्रेण सर्वात्मना बाणो रक्षितुमशक्यः अतस्तद्रक्षणार्थं रुद्रः शरणं जगमेत्यादिचरित्रप्रदर्शनेन विश्वं स्वलीलयैव माति त्रायते चेति दर्शयतीत्यर्थः ॥ ४३ ॥

## मूलम्

**यस्यावेशोरुबलान्न्यहनत्पार्थोऽसुरान्प्रजेशोरुबलान् ।**
**वरदानादस्यैव जगत्प्रभोरीरणात्समनुगतनादस्यैव ॥ ४४ ॥**

**( पद० ) यस्य । आवेशोरुबलात् । न्यहनत् । पार्थः । असुरान् । प्रजेशोरुबलान् । वरदानात् । अस्य । एव । जगत्प्रभोः । ईरणात् । समनुगतनादस्य । एव ॥ ४४ ॥**

## टीका

यस्यावेशोरुसामर्थ्यात्प्रजेशोरुवरोद्धतान् ॥१६६॥
निवातकवचाख्यांस्त्रिकोटिसंख्यान् जघान ह ।
पार्थः षष्टिसहस्राणि पौलोमान्कालकेयकान् ॥१६७॥
यावद्भूमावहं तावन्नामुं जेष्यति कश्चन ।
इति विष्णोर्वरादेव प्रेरणात्स्वगतस्य च ॥१६८॥
सम्यग्घ्यनुगता यत्र बलभीमजयादयः
नादा यः स्वगतोऽन्यत्र+ संहर्ताऽरिकुलस्य हि ॥१६९॥
निमित्तमात्रमीशस्य पार्थो ब्रह्मेव सर्जने ॥४४॥

(टि०) **पार्थः यस्य आवेशोरुबलात्** आवेशोरुसामर्थ्यात् **प्रजेशोरुबलान्** प्रजेशस्य ब्रह्मणः उरु वरो येषु ते तथा तान् **असुरान्** निवातकवचाख्यान् त्रिकोटिसंख्यान् तथा पौलोमान् तथा कालकेयान् षष्टि सहस्राणि। **न्यहनत्** हतवान् कस्मात्। **अस्यैव** कृष्णस्यैव **वरदानात्** यावदहं भूमौ, तावदमुं कश्चन न ज्येष्यतीति वरदानात्। पुनः कस्मात्। **जगत्प्रभोः** जगदेकस्वामिनः स्वगतस्य कृष्णस्य। **ईरणात्** प्रेरणात् **एव**। कथंभूतस्यास्य। **समनुगतनादस्य** सम्यगनुगताः शक्तितात्पर्याभ्यां वर्तमानाः बलभीमजयादयो नादाः शब्दाः यत्र स तथा तस्य। बलभीमादिशब्दादिमुख्यार्थस्येत्यर्थः। कोऽर्थः। तदन्तर्याम्येव भीमादिनामा दैत्यहन्ता मुख्यतो भीमादिशब्दवाच्याः भीमादयस्तु निमित्तमात्रमिति भावः। यथा ब्रह्मा सर्जने निमित्तमात्रं मुख्यतः स्रष्टा स्वयमेव ॥४४॥

(भ०) **समनुगतनादस्य**। यथोक्तम्। बलभीमपार्थव्याजाह्वयेन हरिणा निलयं तदीयमिति ॥४४॥

(ना०) सम्यगनुगताः नादाः जय जय भीम महाबल जयार्जुनेत्यादयो नादाः जयघोषाः यं स तथाविधः। सर्वत्रापि स्थिता जयशक्तिर्यदधीनेति भावः ॥४४॥

## मूलम्

**यस्यावेशात्सबलः प्रचकर्ष पुरं प्रसह्य चेशात्सबलः ।**
**कुरुपातिनाम नु×यमुनाऽऽकृष्टा येनाहुरर्ह्य(घ्यं) मतनु यमुना॥४५॥**

---

+ भीमादौ × यमुना येनाह्वर्यमुत यमुना ( टि. पाठः )

**( पद० ) यस्य । आवेशात् । सः । वलः । प्रचकर्ष । पुरं । प्रसह्य । च । ईशात् । सबलः । कुरुपतिनाम । नु । यमुना । आकृष्टा । येन । आहुः । अ(र्घ्यं)र्ह्यं । अतनु । यं । उना ॥ ४५ ॥**

## टीका

यस्यावेशाद्बलो नागपुरं लांगलमूलतः ॥१७०॥
प्रचकर्ष प्रसह्या(ह्य) थ तत्पुरेशात्सुयोधनात् ।
तत्पुत्रिकां(का) वरेणैव सहितः पूजितो ययौ ॥१७१॥
हस्ती कुरुपतिस्तन्नामैतत्पुरमभून्महत् ।
यमुनापि तथा येन लाङ्गलाग्रेण गोपुरे ॥१७२॥
आकृष्टा पूज्यमाहुर्यमुना रुद्रेण वैदिकाः ॥४५॥

( टि० ) **यस्य** कृष्णस्य**वेशात्** शुक्लकेशावेशात् । **स बलः** बलभद्रः **पुरं** नागपुरं **प्रचकर्ष** लाङ्गलमूलतः इति शेषः । **सबलः प्रसह्य** बलात् । **ईशात्** तत्पुरेशात् सुयोधनात् । प्रचकर्ष तत्पुत्रिकामिति शेषः । लक्षणामवापेत्यर्थः । अथवा चकारात् स कारकक्रियाध्याहारः । **सबलः** सवरः। वरेण लक्षणाभर्त्रा साम्बेन सहितः सवरः । वरेण सभाजनेन पूजनेनेति यावत् । तेन सहितः पूजितः सन् स्वपुरं ययौ इति शेषः । कीदृशं पुरं । पुरं **कुरुपतिनाम** कुरुपतेः हस्तिनाम्नो राज्ञो नाम यस्मिन् स तत्तथा । **नु** प्रसिद्धम् । स कः **येन** बलेन **यमुना** यमुनापि लाङ्गलाग्रेण आकृष्टेति शेषः । पुनः स कः **यं उना** रुद्रेण य एतीति यः पूजनमिति शेषः । पूजितमाहुर्वैदिका इति शेषः ॥ ४५ ॥

(ति०) **यं नु** यं च । अर्ह्यं पूज्यम् ॥४५॥ (या०) अर्घ्यं पूज्यम् ।

( ना० ) **कुरुपतिनाम** कुरुकुलश्रेष्ठो हस्ती नाम राजा प्रागासीत् । तेन स्वनाम्ना निर्मितं पुरं हास्तिनं पुरम् ॥ ४५ ॥

## मूलम्

**यद्बलवान् क्रोधवशाद्विनाय नाशं वृकोदरः क्रोधवशान् ।**
**लेभेऽ[१] चान्यागम्यं स्थानं पुष्पाणि धाम चान्यागम्यम् ॥४६॥**

---

१ ल. टि. चान्या=जान्या भार्यया द्रौपद्या 'पत्नीभार्ययोर्जानिः' (नानार्थरत्नमाला) २०. १२. २२. १२०. पादक्रमशः मात्राः आर्यागीतिः

( पद० ) यद्बलवान् । क्रोधवशात् । निनाय । नाशं । वृकोदरः । क्रोधवशान् । लेभे । अचान्या । गम्यं । स्थानं पुष्पाणि । धाम । च । अन्यागम्यं ॥ ४६ ॥

## टीका

यस्य विष्णोर्बलात्क्रोधवशान्नाशं वृकोदरः ॥ १७३ ॥
निनाय क्रोधवशतोऽब्ज( ऽन्या ) पूर्वकमलेच्छया ।
सलक्षपद्मत्रितयसंख्यान् हरवरोद्धतान् ॥ १७४ ॥
अचान्या कृष्णयोक्तोऽसौ स्वगम्यं नैव चेतरैः ।
लेभे स्थानं च पुष्पाणि धाम वैश्रवणस्य च ॥ १७५ ॥
अजो हि भीमो भविता तद्भार्येयमजान्यपि ।
तृतीयोऽतिशये यस्मात्सैवाचानीति कथ्यते ॥ १७६ ॥
अन्यासु देवीनुख्यासु कृष्णा भीमस्य वल्लभा ॥ ४६ ॥

( टि० ) **यद्बलवान्** यस्य कृष्णस्य बलं विद्यते यस्य स यद्बलवान् । **वृकोदरः** भीमसेनः । **क्रोधवशात्** स्वापेक्षितपुष्पानयनविघ्नकरणेनागतक्रोधवशात् क्रोधपारवश्यात् । सलक्षपद्मत्रितयसंख्यान् हरवरोद्धतान् **क्रोधवशान्** तन्नामदैत्यगणान् । **नाशं निनाय** । कथंभूतः । अजान्या । भाविनोऽजस्य स्वस्य भाविन्या अजान्या कृष्णया तृतीयोऽतिशये [म.] इत्यतोऽन्यासु स्त्रीषु सतीषु प्रधानभूतया । **अचान्या** उक्त इति शेषः । एवंभूतो वृकोदरः **अन्यागम्यं** स्वेतरागम्यं **स्थानं** पर्वतशिरसि कमनीयस्थानं च **पुष्पाणि** च वैश्रवणस्य **धाम** गृहं **च लेभे** प्राप ॥ ४६ ॥ स्वस्य **गम्यम्** ( ति. ) ॥ ४६ ॥

( ति० ) **अचान्या** अजो भविष्यद्ब्रह्मा तत्पत्नी अजानी । तृतीयोऽतिशये । यदपेक्षया पूर्वं पश्चाद्वा यस्तृतीयो वर्णः सोऽतिशये सति भवतीति सूत्रवृत्तिबलात् । सैवाचानीत्युच्यते । अन्यासु देवीषु इयमेव भीमवल्लभेत्यातिशयात् ॥ ४६ ॥ ( ना. ) **अचान्या** प्रेरित इति शेषः । अच्यते पूज्यतेऽसौ अचः अञ्चतेः कर्मणि क्तः जगत्पूज्यः सचासावनश्चेत्यचानः मुख्यप्राणः । तस्य स्त्री अचानी *नाञ्चेः पूजायामिति न लोपो न नञा-

* ल. टि. नाञ्चेः पूजायाम् [ ६ । ४ । ३० ] पूजार्थस्याञ्चतेः उपधाया नस्य लोपो न स्यात् । यथा प्राङ् प्राञ्चौ ।

निर्दिष्टमनित्यं इति ज्ञापकात् । पुंयोगादाख्यायाम् । [ ४ । १ । ४८ वा ] इति ङीष् । भारतीरूपा द्रौपदी तया तन्निमित्तं । **आ** सम्यक् अत्यवश्यं **गम्य**मिति स्थानविशेषणं वा ॥ ४६ ॥

## मूलम्

**यद्बलभारवहत्वान्नाचलदुरगादिभिः सुभारवहत्वात् ।**
**धर्मादरिहाऽपि पदं भीमो येनैव साहसं रि (लि÷) हाऽपिपदम्×॥४७॥**

**( पद० ) यद्बलभारवहत्वात् । न । अचलत् । उरगादिभिः । सुभारवहत्वात् । धर्मात् । अरिहा । अपि । पदं । भीमः । येन । एव । साहसं । रि ( लि ) हा । अपि । पदम् ॥४७॥**

## टीका

यस्य विष्णोर्बलं भारस्तद्वहत्वाद्वृकोदरः ॥१७७॥
नाऽचलत्पादमात्रं च नहुषेणाऽऽदिशब्दतः ।
धर्मेण द्रौणिना ( रौद्रिणा ) वापि स्वधर्माच्च न चाचलत् ॥१७८॥
सुभारवत्वहन्तृत्वरूपात्स हि सुभारतः ( वः ) ।
येनाधीतं सु(स)तेजस्वि जीवनायाऽप्रयोगतः ॥ १७९ ॥
नहुषस्यापि धर्मस्य हन्तुं कृतमतेः स हि ।
न प्रश्नपरिहारेण ह्यात्ममोक्षं समैच्छत ॥ १८० ॥
अरिहापि स वै भीमो नाचरत्तद्वधादिकम् ।
हन्तृत्वं चापरो धर्मस्तस्मिन्नेव वृकोदरे ॥ १८१ ॥
नारायणास्त्रपातेऽपि युध्यत्येव यतः परैः ।
नहुषस्थमहाधर्मल्हिा प्राप्तमिदं पदम् ॥ १८२ ॥
साहसं त्विति लोकोक्तं येन भीमेन नान्यथा ।
सहसा करणं यद्धि बलाबलमजानताम् ॥ १८३ ॥
न तद्भीमे, यतो वायुः संपूर्णबलवेदनः ॥ ४७ ॥

(टि०) **यद्बलभारवहत्वात्** यस्य कृष्णस्य प्रसादेन बलं शारीरं भारं शरीरे गरिमाणं अन्याचाल्यत्वरूपं तौ वहतीति यद्बलभारवहस्तस्य भावस्तत्त्वं

ल. टि. हर्षकेशतीर्थीयपाठः ÷ । २१ मात्राः × आर्यागीतिः

तस्मात् । **भीमः** । **उरगादिभिः** उरगः अजगररूपी नहुषः आदिशब्दात् धर्मेण द्रौणिना वापि।**पदं** पादमात्रं । **नाचलत्** न चचाल । तथा **सुभारवहत्वात् धर्मात्** सुतरां भारो विद्यते येषां ते सुभारवाः ' मतुवर्थे वः ' तान् हन्तीति सुभारवहस्तस्य भावस्तत्वम् तस्माद् भूमिभाररूपदैत्यहतिरूपात् **धर्मात्** नैष्ठिकात्....स्वीयात् क्षात्रधर्मात् **अपि पदं** अंशमात्रं **नाचलत्** न चचाल । कीदृशः । **भीमः** भृतमः सुभारतः शोभनज्ञानरतः । **येन** भीमेन । **साहसं** सतेजस्वि ससामर्थ्यं अस्त्रादिकं । नैव **आपि** जीवनाय अप्रयोगतःप्रयोगमुद्दिश्य नार्थीतम् । अत एव भीमो हन्तुं कृतमतेः नहुषस्य तथा धर्मस्य प्रश्नपरिहारेणाऽऽत्ममोक्षं न समैच्छत । विष्णुप्रसादोपचितबलेनैव वैरिणो हनिष्यामि किं ममास्त्रविद्यया तथा शरीरदार्ढ्यादजगरः स्वयमेव बलक्षये त्रस्यति तथा क्रीडार्थं दैत्यमोहनाय मानुषबले धर्ममायया क्षणमात्रं वारितवास्थितोऽपि दैवबले कोटयंशोऽपि धर्ममायया वारयितुमशक्योऽतः स्वयमेव माया परास्ता । ( कथंभूतेति आत्ममोक्षं न समैच्छत ? ) ननु उरगे अपराधिनि कथं दण्डो न धृत इत्यत आह (?) कथंभूतेन येन **साहसं** नहुषगतदेवादितपोबलं **रिहा** लिहा लेढीति लिट् तेन लिप्सता तस्य स्वभक्तत्वात् तद्गतबलस्य स्वस्मिन्प्रवेशाच्च । इदमेव तत्त्वं अज्ञदृष्टया तु **येन** भीमेन **साहसं पदं आपि** सहसा अकस्मात् क्रियमाणं अबुद्धिपूर्वकमिति यावत् एतादृशं नाम **आपि**लब्धम् । अहो आश्चर्यम् बलवान्भीमो नोरंगबन्धात्स्वात्मानं मोक्तुं प्रयतितवान् इदमकौशलमिति । इदं तु न घटते संपूर्णबलवेदनरूपवाय्वात्मकत्वात् भीमस्य । कथंभूतोऽपि । **अरिहापि** मुख्यतोऽरिहन्तापि नारायणाल्पतोऽपि यतो युद्धयत्येव परैः तस्मात्क्रीडामात्रमेतत् ॥ ४७ ॥

( ति० ) **सुभारवहत्वाद्धर्मादपि** सु शोभनो भा कान्तिः रवोऽध्ययनं तौ यस्य स सुभारवः हन्तीति हः सुभारवश्चासौ हश्च तस्य भावः सुभारवहत्वं तस्मात्तद्रूपाद्धर्मादपि नाचलत् । यः केनचिद्धृतः सन् किंचित्पृष्टो भवति स भयात् शोभां त्यजति स्वेन ज्ञातं चेत्पृष्टं वदति हननशक्तिश्चेद्धन्ति । अयं भीमः नहुषेण धृतः पृष्टोऽपि सुभारवत्वात् शोभातो न चलितः सुरवत्वात्पृष्टप्रश्नोत्तरसामर्थ्येऽपि तदकथनान्न चलितः सुहत्वात् हन्तृत्वस्य सत्वेऽपि तदहननात् ॥ ४७ ॥

( भ० ) कस्माद्धर्मान्नाचलदित्यतो धर्मं विशिनष्टि । **सुभारवहत्वा-**

**दिति** । शोभना भास्तेजो यस्यासौ सुभाः सुतेजस्वी तादृशो रवः अधीत-शास्त्रलक्षणो यस्यासौ सुभारवः । जीवनार्थमप्रयोगादेव ह्यधीतस्य सुतेजास्वि-त्वम् । विद्योपजीवनस्याधर्मत्वात् । वैरिहन्तृत्वात् हा सुभारवश्चासौ हा चेति सुभारवहा तत्त्वात् सुभारवत्त्वाद्धन्तृत्वाच्च । एतद्रूपाद्धर्मादित्यर्थः ।.... **यस्या-वेशोरुबलादि**त्यादिचतुःश्लोकस्थयच्छब्दानां **यद्भक्तप्रवरेणे**त्यादिवक्ष्य-माणश्लोकगतानां च **सोऽगाद्दूतमुखेने**ति श्लोकस्थतच्छब्देनान्वयः ॥ ४७ ॥

(ना०) **लिहा** लेढीति लिट् तेन । रलयोरभेदात् **रिहा** । नहुषनिष्ठं बलं तपोज्ञानादिसामर्थ्यं च स्वयमास्वादयतीति । लिह आस्वादने । सर्वदेव-र्षितपोबलादिकं नहुषोपसंक्रान्तमासीत् तस्य पात्रं भीम एव तस्य तदयो-ग्यत्वात्.... ॥ ४७ ॥

## मूलम्

**न हि नहुषोऽलं नहितुं धर्मो द्रौणिस्तथेतरोऽलं नहितुम् ।**
**नो राट्कर्णो ब्रह्मवरी येन*ध्वस्तोऽस्त्रमग्रहीत्स (त्सु) ब्रह्मवरी ॥४८॥**

**( पद० ) न । हि नहुषः । अलं । नहितुं । धर्मः । द्रौणिः । तथा । इतरः । ( अलं । नहितुं । ) लं । न । हितुं । नो । राट् । कर्णः । ब्रह्मवरी । येन । ध्वस्तः । अस्त्रं । अग्रहीत् सः । ब्रह्म । ( सुब्रह्म । ) वरी ॥ ४८ ॥**

## टीका

तदुपेक्षां विना तं न बद्धं शक्नोति कुत्रचित् ॥ १८४ ॥
नहुषो वापि धर्मो वा द्रौणिर्वान्योऽपि कश्चन ।
यथेतरो न शक्नोति बद्धुं भीमं तथैव हि ॥ १८५ ॥
गृहीतस्ते ( +तुं ते ) न तुं जेतुं नालमेव ल्यं ( नरं ) विना ।
राजा दुर्योधनस्तेन निहतः ससहोदरः ॥ १८६ ॥
कर्णस्तेनैकहस्तेन जितः पार्थाय शोषितः ।
मागधोऽपि वरोन्मत्तो ×विधेः ( युद्धे ) भीमेन पातितः ॥१८७॥

(ल. टि.) * टि. पाठः +(२०) मात्राः × विधेः वरोन्मत्त इत्यन्वयः ।

वली द्रौणिर्हि विप्रत्वाज्जितो ब्रह्मास्त्रमग्रहीत् ॥ ४८ ॥

( टि० ) **नहुषः तथा द्रौणिस्तथा इतरो** द्रौण्यादेः तदुपेक्षां विना तं भीमं **नहितुं** बद्धुं तथा **नालं** न समर्थः । कथं यथा इतरो जनो नहितुं नालम् । तं कं । यं **लं न** नलं नरं शेषं विना **हितुं** ज्ञातुं हि गतौ वृद्धौ चेति धातोः **नोऽलं** न समर्थः । पुनस्तं कं । येन **राट्** राजा दुर्योधनो । **ध्वस्तः** निहतः । कीदृशः **राट्** राजते शोभते भ्रातृभिः साहित्येनेति ससहोदर इत्यर्थः । **येन कर्णो ध्वस्तः** अनेकशो जितः पार्थाय शेषितः । **येन ब्रह्मवरी** ब्रह्मवरात् विधेर्वरा(रो)न्मत्तो **मागधो ध्वस्तः** निपातितः । **येन** पराजितो **वरी** वली द्रौणिः **सुब्रह्म अस्त्रं** ब्रह्मास्त्रमग्रहीत् । यं ज्ञातुं शेषं विना कश्चन न शक्तस्तं बद्धुं नहुषादिः कथं शक्नुयादिति भावः ॥४८॥

( ति० ) इतरः **लं** तृतीयोऽतिशये इति सूत्रात् यं भीमं....हितुं ज्ञातुं ओहाक् गताविति धातोः । गत्यर्थानां ज्ञानार्थत्वात् । लमित्येतदावर्तनीयम् । **लं** लयं **न** विना **नो** न अलम् । न समर्थो यथा तथेत्यर्थः ॥४८॥

( भ० ) नन्वितरेषां भीमबन्धनेऽसामर्थ्येऽपि नहुषादीनां वरादिबलात्तत्किं न स्यादित्यतश्चोक्तं **तथेति** । यथेतरः पुमान् दुर्योधनादिस्तं नहितुं बद्धुं नालं तथैव । स्वतो भीमबन्धनासामर्थ्ये सर्वेषामविशेष एवेति भावः । तत्कुत इत्यतश्चोक्तम् । **अलमिति** । लं लयं विनेत्यर्थः । यः कोऽपि तं बद्धुमुद्यतश्चेत्तेन लयमेव प्राप्नोति अतः स्वलयं विना तद्विषये यत्किंचिदप्यनिष्टं कर्तुं न शक्नोतीति भावः । **सुब्रह्मेति** । यतः सुब्राह्मणोऽतो न संहारविषयो बभूवेति भावः । अत्र राडिति पाठे तु न काप्यनुपपत्तिः । प्रत्युत आर्यात्वात्प्रथमपादवत्तृतीयपादेऽपि द्वादशमात्राकत्वरूपलक्षणरक्षणलाभश्चाधिक इति बोध्यम् ॥४८॥

(ना०) **नहितुं** । नाहि (णह ?) बन्धन इति धातोः इडागमश्छान्दसः । 'दुहिदहद्वहलिहोनहिरि'ति नहेरनिट्सुपापाठात् । **धर्मः** यक्षरूपी ।....**सुब्रह्म अस्त्रमग्रहीत्** नारायणास्त्रं शिरसि जग्राह । न तु युद्धादुपररामेति भावः । अश्वत्थामा तु विप्रत्वादुपेक्षितः ॥४८॥

## मूलम्

**क्षात्रं धर्मं स्ववता गुरुवृत्त्यै केशवाज्ञयाच× चरमं स्ववता ।**
**सर्वं सेहेऽमनसा भीमेनै ( ने* ) शैकमानिना हेमनसा ॥४९॥**
**( पद० ) क्षात्रं । धर्मं । स्ववता । गुरुवृत्त्यै । केशवाज्ञया । च । चरमं । स्ववता । सर्वं । सेहे । अमनसा (मनसा) । भीमेन । ई ( ऐ ) शैकमानिना । हेमनसा ॥ ४९ ॥**

## टीका

भीमेनैव सुशक्तेन क्षात्रं धर्मं सुरक्षता ॥ १८८ ॥
क्षान्तं सर्वमनिष्टं तल्लीन (वि)*चित्तवता सता ।
*मितेरपीतितो वायुं । (युश्चा) म इत्येव । (शब्दितः) प्रयोगतः? १८९
युधिष्ठिरानुवृत्त्यै च केशवस्याज्ञयैव हि ।
मन्यते यद्धरिर्विश्वजन्मस्थित्यादिकं सदा ॥ १९० ॥
तदेव मन्यते भीम इति ह्री (ह्यै) शैकमानिना ।
हेमरूपो य आकेशा दानवाग्रेभ्य ईश्वरः ॥ १९१ ॥
तन्नासावासितोक्त्या तत्प्राणप्रिय इतीरितः ॥ ४९ ॥

( टि० ) **स्ववता** स्वं स्वीयं सर्वं विद्यते यस्य सः स्ववान् तेन सुशक्तेन । **क्षात्रं धर्मं** । **स्ववता** सुष्ठु अवतीति स्ववन् तेन सुरक्षता भीमेन **सर्वम्** अनिष्टं भिक्षाचरणादिकं **सेहे** क्षान्तम् । कस्मै प्रयोजनाय **केशवाज्ञयैव गुरुवृत्त्यै** युधिष्ठिरानुवृत्त्यै । तदुक्तं ' भीमस्य दोषमुभयं प्रतिहन्तुमेव ' ( ता. नि. १९ ) इत्यादौ । कथंभूतेन भीमेन । **अमनसा** ए ब्रह्मणि मनो यस्य सोऽमनाः तेन । तल्लीनचित्तवता ब्रह्मलीनचित्तवतेत्यर्थः । गुरुवृत्तिरपि युधिष्ठिरान्तर्यामिवृत्तिरेव मुख्यत इत्यर्थः । वा इत्यथवामितेः **मन्** मनः तेन **मना** अं ब्रह्म **सरतीति मनस्** तेन । अथवा मितेर्**मन्** तस्य **अः** निषेधो यस्मिन् तत् **मनं** देशतः कालतो गुणतश्चापरिमितं ब्रह्म सराति प्राप्नोति

---

* अमनसा अमाः अपरिमितो यो नस् वायुः तद्रूपेणेत्यर्थः याद्. नासिकाभिमानिवायुरूपेण

× च चरमं. या. पाठः २१ मात्राः
च रमं. भ. पाठः २२ मात्राः
ज्ञया मं स्ववता. ह. पाठः **मं**=संतोषम् २०मा.
ज्ञया स्ववता. टि. पाठः अत्र १८ मात्राः

योगतः प्रापयति । भक्तानिति **मनस्** तेन । पुनः कीदृशेन **ऐशैकमानिना** । ईशस्येदमैशं तच्च तत् एकं केवलं च संख्यावाचकत्वे 'पूर्वकाले 'ति पूर्वनिपातः स्यात् ऐशैकं मन्यते स ऐशैकमानी तेन । सर्वजगज्जननादिकं ईशैकाधीनमिति ज्ञानवतेत्यर्थः । पुनः कीदृशेन **हेमनसा** हेम्नः आप्रणखात् सुवर्णवर्णस्य हरेर्नसा नासिकातो जातेन । 'यद्यस्माज्जायते चाङ्गादि 'ति प्रमाणादभेदोक्तिः । हरेः प्राणप्रियेणेत्यर्थः ॥ ४९ ॥

( ति० ) स्ववतेति लुप्तोपमा । लीनवित्तवता । स्वं अस्यास्तीति स्ववान् तेनेवेति विग्रहः ॥ ४९ ॥

( भ० ) **क्षात्रं धर्मं** दुष्टनिग्रहादिरूपम् । **स्ववता** सुष्ठु अवता रक्षता सुशक्तेनापि भीमेन दुर्योधनादिकृतं सर्वमनिष्टं दारधर्षणादिकं **मनसा** परबोधनमनपेक्ष्य स्वबुद्ध्यैव **सेहे** क्षान्तम् । कीदृशेन भीमेन **रमं स्ववता** रं रमणीयं च तत् मं लीनं चेति रमं मितेरपीतेर्वामकार इति माण्डूके निर्वचनात् । उक्तं च तद्भाष्ये 'जीवमन्तर्गतं कृत्वा तज्ज्ञानलयकृद्यतः । प्राज्ञो मानमपीतिश्चेति । तथा चात्र मीयते लीयत इति मशब्दो लीनवाची । रमं च तत् स्वं वित्तं च रमंस्वं । नुमागमच्छान्दसः । तद्वता । दुर्योधनकृते द्यूते रमणीयसर्ववित्तलयवतापीत्यर्थः । कुत एतत्सर्वं तन्निग्रहशक्तेनापि क्षान्तमित्यतस्तत्र निमित्तद्वयमाह । **गुरुवृत्त्यै केशवाज्ञया चेति** ॥ ४९ ॥

( ना० ) **ईशैकमानिना** ईशेन सह एकं मानं ज्ञानं यस्यास्तीत्येतादृशेन । भगवत्संकल्पानुसारिसंकल्पेन । तदानीमेव तद्धननेऽष्टादशाक्षौहिणीभारहरणं न स्यादिति तत्काले सोढव्यमेवेति भगवत्संकल्पादित्यर्थः । अस्य च तद्विरुद्धकोपाभावात् । तदपि कुतः । इत्यतः प्राणावतारत्वेन ऋजुत्वादिति भावेन विशिनष्टि । कीदृशेन भीमेन **हेमनसा** । हेम्नः परमेश्वरस्य नासिका हेमनासिका तेन हेमनसा । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः'। मुखनासिकाभ्यां प्राणः (प्र.उ.२–५) 'प्राणाद्वायुः' (पुरुषसूक्त) इति वायोर्भगवन्नासोत्पन्नत्वात् । तत्स्थत्वात्तद्व्यपदेशो मञ्चाः क्रोशन्तीतिवत् । पद्दन्निति नासिकाया नसादेशः 'पदादयः पृथक्शब्दाइत्येके ' इत्युक्तत्वान्नासिकापरपर्यायो नस्शब्दो वा ॥ ४९ ॥

## मूलम्

**यद्भक्तप्रवरेण प्रोतः स्वस्मिन्स कीचकः प्रवरेण ।**
**पतितास्तस्य सहायाः कृष्णार्थे मानिनः समस्य सहायाः ॥५०॥**

**( पद० ) यद्भक्तप्रवरेण । प्रोतः । स्वस्मिन् । सः । कीचकः । प्रवरेण । पतिताः । तस्य । सहायाः । कृष्णार्थे । मानिनः । समस्य । ( सं÷ । अस्य ) सहायाः । (सह× । आयाः । ) ॥५०॥**

## टीका

भीमेण यस्य भक्तेषु प्रवरेण स कीचकः ॥ १९२ ॥
गुदे प्रोताशिरा मृत्युं जगाम प्रबलेन हि ।
तेनैव कीचकाश्चान्ये कृष्णया प्रार्थितेन हि ॥ १९३ ॥
मिलित्वा पातिताः सर्वे दर्पिष्ठस्य सहायतः ।
सहायाताश्च दर्पिष्ठास्ततः पूर्णे तु वत्सरे ॥ १९४ ॥ ॥ ५० ॥

( टि० ) **यद्भक्तप्रवरेण** यस्य कृष्णस्य भक्तेषु प्रवरेण कृष्णाप्रार्थितेन । यद्वा **कृष्णार्थे** कृष्णानिमित्तं । **स कीचकः** । **स्वस्मिन्** शरीरे । **प्रोतः** प्रोतशिरा मृत्युं जगामेत्यर्थः । कीदृशेन **प्रवरेण** प्रबलेन बवयोरलयोश्च सावर्ण्यात् । तेनैव अन्ये कीचकाश्च पातिता इति शेषः । यद्वा **पतिता** इत्यस्यान्तर्णीतणिच्त्वेन पातिता इति व्याख्यातम् । कीदृशाः कीचकाः **तस्य** कीचकस्य **सहायाः** सहायाताः सह आयः आगमनं येषां ते तथोक्ताः । *सहायतः मिलित्वा प्रेतस्य कीचकस्य कृष्णया सह दाहनेन तत्साचिव्यमाकाङ्क्षमाणा इत्यर्थः । कीदृशस्य तस्य कृष्णार्थे हतस्येति शेषः । पुनः कीदृशस्य **मानिनः** दर्पिष्ठस्य कीदृशास्ते **मानिनः** मानो दर्पो येषां ते मानिनः दर्पिष्ठाः । यद्वा कीदृशस्य तस्या= **समस्य** स स्वभावेनेति शेषः । दर्पिष्ठस्येति तात्पर्यार्थः ॥ ५० ॥

( ति० ) **सह** साकं **आया** आयान्तीति आयाः आयाताः ॥५०॥

( भ० ) **सहायाः** पक्षपातिनः ।.... तदनुजा उपकीचकाश्च कृष्णार्थे तद्रक्षणार्थं **समस्य** मिलित्वा युगपदेव **पतिताः** पातिता इत्यर्थः ॥५०॥

( ना० )....समस्य= यौगपद्येनैवोपसंहृत्य ॥ ५० ॥

---

× ति. पा. । ÷ यादु. पा. संपतिता इत्यन्वयः * सहाऽऽगमनवत्त्वेन । तत्तात्पर्यं मिलित्वेति । = संपूर्वकात् असुक्षेपणे इत्यतो ल्यप् ।

## मूलम्

यद्भक्त्यानुगृहीतौ पार्थो भीमश्च गोनृपौ नु गृहीतौ ।
ऋणमुक्त्यै सुव्यत्यस्त्यै क्रमशो वीरावमुञ्चतां सुव्यत्यस्त्यै ॥५१॥

(पद०) यद्भक्त्या । अनुगृहीतौ । पार्थः । भीमः । च । गोनृपौ । नु । गृहीतौ । ऋणमुक्त्यै । सुव्यत्यस्त्यै । क्रमशः । वीरौ । अमुञ्चतां । सुव्यत्यस्त्यै ॥ ५१ ॥

## टीका

यद्भक्त्याऽनुगृहीतौ तु पार्थो भीमो नु गो (गां) नृपौ (**पम्**)
अमुञ्चतां महावीरौ गृहीतौ सर्वकौरवैः ॥१९५॥
ऋणशेषविमोकाय सुव्यत्यासाय चैतयोः ।
स्वामित्वदास्ययोः स्वामिदासयोः पार्थमात्स्ययोः ॥१९६॥
विशेषेण त्वातिक्रम्य सुस्थित्यै (तौ) चात्मरो (रू×) पतः ॥५१॥

(टि०) **यद्भक्त्या** यस्य कृष्णस्य भक्त्या । **अनुगृहीतौ** उपोद्बलितौ । **र्थो भीमश्च । गोनृपौ नु** द्रुपदविराटौ राजानौ । **वीरौ** महावीरौ । क्रमेण **ीतौ** सर्वकौरवैरिति शेषः । **क्रमशः** क्रमेण **अमुञ्च**ताम् कथं आदौ द्रुपदो ीतः । किमर्थं । **ऋणमुक्त्यै** ऋणात् द्रोणं प्रति द्रुपदानयनरूपप्रतिज्ञारूपा-मुक्त्यै आनृण्याय । अथवा द्रोणायार्धराज्यदानप्रतिश्रवरूपऋणमुक्त्यै । द्रुपदो ीतः । पार्थो भीमगृहीतं अमुञ्चत् । अनन्तरं अज्ञातवत्सरे पूर्णे कौरवै-ाटो गोग्रहे धृतः । **सुव्यत्यस्त्यै** । सुतरां व्यत्यस्तिः सुव्यत्यास्तिः तस्यै त्यासायेत्यर्थः । कथं । पाण्डवानां द्यूतप्रसंगेन राज्येऽपहृतेऽपि विराटो न ाति कीचकवलात् । स तु स्त्रीनिमित्तं हतः संप्रति बलाभावात् अदासं विराटं तं कुर्म इति व्यत्यासाय । तं च भीमोऽमुञ्चत् । इति क्रमेण **वीरौ** महावीरौ र्भीमौ गृहीतौ पार्षतमात्स्यौ अमुञ्चतामित्येकान्वयः । किमर्थममुञ्चतां । **्यत्यस्त्यै** सु सुष्ठु वि विशेषेण अति अतिक्रम्य अस्त्यै स्थित्यै द्रुपदस्य ृसखस्य संबन्धयोग्यतास्थित्यै तथा विराटस्य अभिमन्योः रथे उत्तरां ीत्वा स्वसंबन्धयोग्यता स्थित्यै । कस्मात् आत्मरोपतः आत्मना स्वेन

× भ. पाठः ।

रोपणं स्थापनं तस्मात्। द्रुपदविराटौ बहुशो भीमपार्थबलं दृष्ट्वा श्रुत्वा च जरासंधं परित्यज्य पाण्डवानाश्रितौ यतोऽतः स्वरूपितौ ॥ ५१ ॥

( ति० ) **अमुञ्चतां** नु हि वितर्के। किमर्थं **ऋणमुक्त्यै** तौ स्वाभ्यां मोचनीयाविति प्रारब्धतो विमोकाय ॥ ५१ ॥

( भ० ) **नु** अनन्तरं अज्ञातवासवत्सरे पूर्णे सतीति यावत् । **गोनृपौ** गामित्येकवचनं समुदायार्थे । गाः । नृपं विराटं च । **सुव्यत्ययस्त्या इति** । अज्ञातवासं विशेषेणातिक्रम्य परदिने सुष्ठु आत्मरूपेणैव अस्त्यै स्थित्यै अवस्थानायेत्यर्थः ॥ ५१ ॥

( ना० ) **गोनृपौ क्रमशः** क्रमेणामुञ्चताम् । उत्तरगोग्रहणेऽर्जुनः गाः अमोचयत् दक्षिणगोग्रहे तु त्रिगर्तैर्गृहीतं विराटं भीमोऽमोचयत् ॥ ५१ ॥

## मूलम्

**यद्भक्त्याऽमितयालं कृष्णा कार्ये विवेश कृष्णाऽऽकार्ये ।**
**यामीरार्धतनुत्वान्नापाद्भीमादृतेऽपि नापाद्भीमात् ॥५२॥**

**( पद० ) यद्भक्त्या । अमितया । ( मितया ) अलं । कृष्णा । कार्ये । विवेश । कृष्णाऽऽकार्ये । यां । ईरार्धतनुत्वात् । न । आप । आत् । भीमात् । ऋते । अपि । ना । अपात् । भीमात् ॥५२॥**

## टीका

यद्भक्त्या मितया कृष्णा कृष्णाह्वानाख्य उत्तमे ॥१९०॥
कार्ये विवेश या तस्याः किं कर्ता दुःखशासनः ।
समीरार्धशरीरत्वाद्यां नाऽवाप्नोति ( पाऽन्योऽपि )ना पुमान् ॥१९८॥
भीमादृतेऽन्यभार्याभिरेकदेहामपि क्वचित् ।
अन्यस्यापि शरीरार्धदेहत्वाच्चद्गतां मरुत् ॥१९९॥
तद्भार्या [1]गामगा[2]द्वार्णीमित्यकारोदिताद्भरेः ।
सकाशाद्वर्तते नित्यं नियमोऽति[3](रि) भयंकरात् ॥२००॥
न विद्यते पतिर्यस्य तस्मादित्येष ( त्यस्य ) निर्णयः ॥ ५२ ॥

( ल. टि. ) १ तद्भार्याभिः साकं स्थितां वार्णीं द्रौपदीं । २ बुभुजे ३. याद्व. पा. शत्रुभयंकरादित्यर्थः ।

( टि० ) **मितया** प्रमितया । **यद्भक्त्या** यस्य कृष्णस्य भक्त्या । सा **कृष्णा** द्रौपदी **कृष्णाऽऽकार्ये** कृष्णस्य पूर्णानन्दवलस्य भगवत आकार्ये आकारणमाकार्यमाह्वानमिति यावत् । कृष्णाह्वानाख्य उत्तमे कार्ये कर्तुमभीष्टे **अलं विवेश** । हे कृष्ण भगवन्नेहि मां पापिनो दुःशासनात्केशग्रहवस्त्रस्रंसन-रूपाऽऽपदो रक्षेति मनसा शरणं जगामेत्यर्थः । इदं तु लोकशिक्षार्थम् । सर्वदा तस्याः भगवति चित्तवृत्तेः सद्भावात् । विशेषतः शरणं(णा ? ) गतिः विशेषानुग्रहार्थम् । ततश्च लोकशिक्षा भवति । एवं सर्वस्वामिनं सर्वापत्तृणधूम-केतुं भगवन्तं शरणं गतायाः दुःशासनः किं कर्ता । सा का । **यां** कृष्णां । **ईरार्धतनुत्वात्** समीरार्धशरीरत्वात् । **भीमादृते** नान्यः पुमान् **आप** । कथं भूतामपि । अन्यभार्याभिर्युधिष्ठिरादिभार्याभिः श्यामलादिभिः एकदेहामपि । क्वचित्सर्वथेत्यर्थः । ननु कथमिदं घटते युधिष्ठिरादीनामपि तद्भर्तृत्वेन प्रसिद्ध-त्वादित्यत आह । **ईरार्द्धतनुत्वादिति** । ईरेण वायुना आसमन्तात् ऋद्धा समृद्धा तदाविष्टा तनुर्येषां ते ईरार्द्धतनवः तेषां भावस्तत्त्वं तस्मात् । कोऽर्थः । युधिष्ठिरादिषु सौम्यादिरूपेण प्रविष्टो मरुत् तद्भार्याभिः साकं स्वीयां भार्यां द्रौपदीं बुभुजे । युधिष्ठिरादयस्तु द्रौपदीदेहगताः स्वस्वभार्या एव बुभुजिरे । ननु कथमिदं घटते । द्रौपद्यभिमतदेहस्य युधिष्ठिरादिपरामर्शे तेषां महादोष-प्राप्तेः । तथा नीचपुरुषपरामर्शे कृष्णाया अपि महादोषप्राप्तेः । उच्यते । तद्दोषपरिहारार्थमेव ईरार्द्धतनुत्वादित्युक्तम् । ईरो तेष्वाविष्टो भारतीविषये तेषां बुद्धिं विमोह्य स्वस्वभार्याविषय एव बुद्धिं संपाद्य तथा द्रौपद्याः युधिष्ठिरादि-विषये बुद्धिं विमोह्य स्वविषय एव बुद्धिं संपाद्य भोगं कृतवान् । अतो न दोषप्राप्तिः । यदा बुद्धिमोहः संपादितः तदा अन्यदेहवत् एवायं देहो जातः । तथा च तद्भार्याभिमतदेहेन तत्तद्दिनक्लृप्तेन युधिष्ठिरादीनां भोगो न तु भारती-देहेन । तथा च बुद्धिमोहे न परामर्शदोषः । यथा मुद्गलदेहे मुद्गलस्य तद्बु-द्धेर्वायुना मोहितत्वद्बुद्धिदोषनिमित्तं, यथा दुर्योधनभार्यायामपत्यमुत्पाद्य दुर्यो-धनवंशं अविच्छिन्नं करिष्यामीति बुद्ध्यैवाश्वत्थाम्नो ब्रह्मचर्यच्युतिः । नन्विदं कस्मात्कल्प्यत इत्यत आह—**आदिति** । अकारेणाकारवाच्यहरिनियमो लक्ष्यते । तथा च **आत्** हरिनियमात् अथवा **आत्** तस्मात् प्रसिद्धाद्धरिनियमात् । कीदृशो नियमो वायुं विना भारत्या नान्यो भर्तेति । कीदृशान्नियमात् । **अपात्** । न विद्यते वायुं विना पः पतिः भर्ता यस्य भारतीचेतनस्य स अपः तस्मात् । पुनः कीदृशात् भीमात् अतिभयंकरात् अथवा **अपात्** न विद्यते पः पतिः हरिं

विना यस्य नियमस्य सोऽपः तस्मात् । केनाप्यन्यथाकर्तुमशक्यत्वादित्यर्थः ॥ ५२ ॥

( ति० ) **अपि**र्विरोधाभासपरिहारार्थः । अन्यस्त्रीभिरेकदेहत्वात्परपुरुषभोगकाले अस्याः जाग्रदवस्थात्वात्कथं परपुरुषो नापैनामिति विरोधाभासः । परिहारस्तु तत्पुरुषगतमारुतः तद्भार्याणां वार्णामेति अतो न विरोधः ॥ ५२ ॥

( भ० ) एवं भीममाहात्म्यं विशेषतो निरूप्य द्रौपदीमाहात्म्यमपि निरूपयति-**यद्भक्त्येत्यादि**भिस्त्रिभिः श्लोकैः । किं च यां द्रौपदीं **ईराधर्तनुत्वात्** वायुभार्यात्वात् । **भीमादृते**ऽन्यो **ना** पुमान् कोऽपि युधिष्ठिरादि**र्नाप** । अन्यभार्याप्राप्तिरन्यस्य प्रायेणनास्त्येवातोऽत्र को विशेष इत्यत उक्तम् । **अपीति** अन्यभार्याभिरेकदेहामिति शेषः । तथा चैतादृश्या अन्यपुरुषप्राप्तिः संभावितैव । तथाप्यन्यो नापेत्यनेन सुस्थिरणातिव्रत्यमहिमा लभ्यत इति भावः। उपलक्षणमेतत् । याः श्यामलाद्याः अन्यभार्याः द्रौपदीदेहस्थाः तास्तु युधिष्ठिरादिगतो वायुः स्वयं बुभुज इति ग्राह्यम् । तथा च द्रौपद्या इतराभ्यो विशेषलाभः ।........॥५२॥

## मूलम्

**यां स्प्रष्टुमिच्छन्तमजातशत्रुं न्यवारयत्स्वःस्थमजातशत्रुम् ।**
**शंरूपा(प्य)ने नित्यरतेरियं श्रीरिति स्म देवेड्यदितेरियं श्रीः ॥५३॥**

**( पद० ) यां । स्प्रष्टुं । इच्छन्तं । अजातशत्रुं । न्यवारयत् । स्वःस्थं । अजातशत्रुं । शंरूपा ( प्य ) ने । नित्यरतेः । इयं । श्रीः । इति । स्म । देवेट् । यदितेः । इयं । श्रीः ॥ ५३ ॥**

## टीका

स्वर्गस्थमपि देवेन्द्रोऽजातशत्रुं न्यवारयत् ॥ २०१ ॥
यां कृष्णां स्प्रष्टुमिच्छतं अजा ( या ) तोन्तरर्वितः ॥
शमात्मके रता वायावतः श्रीरत एव सा ॥ २०२ ॥
भारती नान्ययोग्या हि यन्नित्युक्तः सदागतिः ।
तद्विशेषाभिसंयोगादितीयं संश्रिता परा ॥ २०३ ॥
इच्छया याति यन्मुख्यप्राणस्तस्मादियो मतः ।
इच्छा काम इकारोक्त इतीन्द्रोऽवारयन्नृपम् ॥ २०४ ॥ ॥ ५३ ॥

(टि०) **देवेट्** ईष्टेऽसौ ईट् ईश ऐश्वर्य इति धातोः देवानां ईट् । ईशः देवेन्द्रो । **यां** कृष्णां **स्प्रष्टुमिच्छन्तं** । **स्वःस्थं** स्वः स्वर्गे तिष्ठतीति स्वःस्थः तं

स्वर्गस्थमपि । **अजातशत्रुं** अजातकामादिवैरिणं । **अजातशत्रुं** आत् वेदव्यासात् जाताः शत्रवो दुर्योधनादयो यस्य स तथा तं । वेदव्यासेन यदि घृतपूर्णकुम्भेषु निधापितास्तत्रैव जाताः सन्तो राज्यापहारादिकं कृतवन्तो युधिष्ठिरस्य शत्रवो जाताः एवंभूतं युधिष्ठिरं । **न्यवारयत्** । **स्म** । किमिति । **इयं श्रीरिति** । कस्मात् । **शंरूप्यने** । शं सुखं रूपं यस्य स शंरूपी सचावनश्च तस्मिन् । **नित्यरतेः** । अत एव सा भारती नान्ययोग्या अन्ययोगार्हा न भवति । हेत्वन्तरमाह । **यदितेरियं श्रीरिति** । एतीति यन् सर्वदा गच्छन् सदागतिः तद्वतेः तद्विशेषाभिसंयोगात् अन्यदेहानाविष्टमरुदभिसंयोगात् । **इयं** इना कामेन इच्छयेति यावत्; यातीति इयो वायुरुक्तः तं इयं मुख्यप्राणं । **श्रीः** श्रयते सा श्रीः संश्रिता परा । कोऽर्थः । यदा भूमावतिष्ठत् द्रौपदी, तदा युष्मद्भार्यया युक्ताऽभूदिति युष्मान् आविष्टो मरुत् बुभुजे । इदानीं युष्मद्भार्यायोगाभावात् शुद्धा भारतीदेहेन स्थितेति युष्मदनाविष्टः स्वेनैव देहेन मुख्यप्राण एनां भुङ्क्ते । एवं सति कथं भवद्योगमर्हतीति इयं इति न्यवारयत् ॥ ५३ ॥

( ति० ) **अजातशत्रुं** । जययोरभेदात् अयाता अन्तः शत्रवो यस्य स तथा तम् ।.... अजातशत्रुं युधिष्ठिरम् ।

( भ० ) **अजातशत्रुं** । आत् विष्णोर्जातोऽजातः कामः स एव शत्रुरन्तरारियस्याऽसौ तथोक्तस्तम् । पूर्वसंस्कारादेव कामोद्रेकवन्तमित्यर्थः ।.... **शंरूपान इति** । शंरूपः सुखात्मकश्चासावनो वायुश्च शंरूपानस्तस्मिन् । **नित्यरतेः** नियमेन रतत्वान्निमित्तात् । **इयं** भारती **श्रीरिति** वेदादिषु गीयत इत्यतो नेयमन्ययोग्येत्यभिप्रायेण न्यवारयदित्यर्थः । एतेन श्रे रमत इति श्रीरिति निर्वचनं कृतं भवति । किं चेयं भारती **इयं श्रीरि**त्यपि गीयते ।.... एतेन इना कामेन स्वेच्छयैव हरीच्छयैव वा याति प्रवर्तत इति इयो मुख्यप्राणस्तं श्रयत इति **इयं श्रीरिति** निर्वचनं कृतं भवति ॥ ५३ ॥

(ना०) **स्वःस्थः ( स्थम्** स्वर्गे तिष्ठतीति स्वःस्थः स्वर्गारोहणानन्तरं स्वर्गस्थितिकाले.... ॥ ५३ ॥

## मूलम्

**मनसामनसाऽमनसा मनसा यमनन्तमजस्रमवेदनुया ।**
**विलयं विलयं विलयं विलयन्निखिलं त्वशुभं प्रचकार च या (यः) ५४**

( पद० ) **मनसां । अनसा । अमनसा । मनसा । यं । अनन्तं । अजस्रं । अवेत् । अनु । या । (अनुया) । विलयं । विलयं । विः । अयं । विलयम् ( त् ) । निखिलं । तु । अशुभं । प्रचकार । च । या । ( यः ) ॥ ५४ ॥**

## टीका

या देवी च सदाऽनन्तं सह सस्मार वायुना ।
तस्यानुसारिणी स्वेन मनसा प्राण एव हि ॥ २०४ ॥
अनोवदाश्रयः सर्वमनसां शकटो ह्यनः ।
मनसामनसा तेन ह्यमोऽनन्तः प्रकीर्तितः ॥ २०५ ॥
तन्नासा ( घ्रा ) जातमूर्धा य (त्ते) स्तेनेत्यमनसा स्वयम् ।
विर्विष्णुरशुभं स्मर्तुर्विलयं प्रचकार यः ॥ २०६ ॥
विशिष्टरयसंयुक्तमखिलं विलयापकम् ( विलयात्मकं ) ।
सैवमेव सदा वेत्ति ह्यात्मविच्छोकहा हरिः ( हारिभिः )
( ह्यात्मष्टोपहारिभिः ) ॥ २०७ ॥ ५४ ॥

( टि० ) या देवी द्योतनाद्देवी विद्युन्नाम्नी भारती **मनसां** सर्वमनसां **अनसा** शकटेन गौण्या वृत्त्या आश्रयेण विद्युत्पतिना स्वभर्त्रा वायुना सह । **यम् अनन्तं** देशतः कालतो गुणतश्चान्तरहितं भगवन्तं नारायणं । **अजस्रं** सदा । **मनसा** स्वेन मनसा । **अवेत्** सस्मार । स्मृतवती ध्यातवती च । अत्र ध्याने अनन्तगुणोपसंहृतिरनन्तरूपेषु तथैवानन्तगुणताद्दष्टिस्तन्मध्ये व्याप्तिदृष्टौ *त्रैगुण्यात्परतः शतं दृष्टिरित्येवं प्रकारेण दृष्ट्वा सस्मारेत्यर्थः । कथंभूतेन प्राणेन । **अमनसा** । न विद्यते मा मानं परिमितिर्यस्य सोऽमः अनन्त इति यावत् । तन्नसा तस्य नासातो जातः । 'नासिकाभ्यां प्राणः प्राणाद्वायुरि'ति (ऐत०उ० १.१.३) श्रुतेः । मूर्धा मुख्यो यः प्राणः तेनेति टीकार्थः । **यं** तं। कं । **यः अयं** श्रुतिसिद्धः **विः** विष्णुः।**अशुभं** स्मर्तुरिति शेषः । **विलयं** विः विशिष्टो निर्मूलो लयो नाशो यस्य तत्तथा एवंभूतं । **प्रचकार** । कीदृशं तं **विलयं** विशिष्टो लयो रयो वेगो यस्य विशिष्टरयसंयुक्तं । **निखिलम्** अखिलं **विलयं** विर्विशिष्टो लयो यस्मात्स तथा तं मुख्यलयकर्तारं । तथा चैतद्विशेषणविशिष्टतया सदा भगवन्तं

* त्रैगुण्यात्परतः पश्येद्व्याप्तं शतगुणं हरिन् इत्यनुव्याख्याने (३-४)

वेत्तीत्युक्तं भवति । कीदृशी **या अनु** अनुसारिणी सामर्थ्यात्तस्य प्राणस्येति शेषः । अनेन अनन्तगुणोपसंहृतौ वायुभारत्योः साम्यप्राप्तौ विशेषतः क्रियोपसंहर्तुर्मुख्यप्राणात् सामान्यक्रियोपसंहर्त्र्या भारत्यास्तारतम्यमुक्तं भवति । अन्यथाऽनुसारित्वायोगात् । अथवा अनसा सहेत्युक्त्या प्राणस्याप्राधान्यप्राप्ता-विदमुक्तम् । **अनु** अनुसारिणीति । मनसा हि भगवद्ध्यानं करोतीत्युक्तं भवति तुशब्दात् आत्मविष्टोपहारिभिः =स्वपरिचारकैः गरुडशेषरुद्रादिभिः सहेत्युक्तं भवति ॥ ५४ ॥

( ति० ) **विलयं** बवयोरभेदात् विलं संसाराविलं यापतीति विलयं एवंविधं निखिलं सर्वमशुभम् । .... यश्चैवंविधस्तं परमानन्दं ध्यायेदिति सर्वत्र बोद्धव्यम् ॥ ५४ ॥

(भ०) **अमनसा** अमोऽपरिमितो भगवान् तस्य नस् नासा मूर्धाघ्राण-नकर्त्री यस्यासौ तथोक्तस्तेन तदत्यन्तप्रियेणेत्यर्थः । ........अतएव **विलयत्** विलयत् । नरकादिबिलयापकमित्यर्थः । अत्र यामित्यादेः सोऽगादित्युत्तरेणा-न्वयः । येत्यस्य तु सा कृष्णेति पूर्वश्लोकेनैवान्वयः ॥ ५४ ॥

( ना० ) तस्या माहात्म्यप्रयोजकमविच्छिन्नभगवन्माहात्म्यज्ञानादि-मत्वमाह । **मनसेति** । **या** द्रौपदी **अनु** वायुमनु कक्षीकृत्य **मनसा** अन्तःकरणेन **मनसां** सर्वेन्द्रियदेवानां........।........ **नसा** नासिकास्थेन मुख्यप्राणेन सहिता । तं परमात्मानं अजं अनादिं **अनन्तं** च **अवेत्** । सर्वदाऽविलुप्तज्ञानेत्यर्थः। अजस्रमवेदिति क्वचित्पाठः । तदाऽनन्तं देशतः कालतः गुणतश्चापरिच्छिन्नं सर्वदा व्यजानादित्यर्थः । तं कं । **यः अयं विः** परमात्मा 'विः पक्षिपरमात्म-नोरित्यभिधानात् । **निखिलमशुभं** । **विलयं** विशिष्टः आत्यन्तिकः लयः यस्येति एतादृशं । **चकार** कृतवान् । सर्वमपि स्वभक्तानिष्टं नाशितवान् । कीदृशं **विलयं** बिलं हृदयगुहा तस्यां यातीत्येतादृशं । बिलं संसारगुहां यापय-तीति वा ॥ ५४ ॥

## मूलम्

***सोऽगाद्‌धृतमुखेन प्रभुणेदं वर्तते यद्‌धृतमुखेन ।**
**पार्थार्थे बहुतनुतां यत्र प्र(प्रा)काशयत् स्वयं सबहुतनुताम् ॥५५॥**

* ल. टि. ११, १०, १२, २०. पादक्रमात् मात्राः । आर्यागीतिः ।

**( पद० ) सः । अगात् । दूतमुखेन । प्रभुणा । इदं । वर्तते । यत् । ऊतं । उखेन । पार्थार्थे । बहुतनुतां । यत्र । प्र(प्रा)काशयत् । स्वयं । सबहुतनुताम् ॥ ५५ ॥**

## टीका

अतो दौत्यमुखेनाऽसौ हन्तुमेव ( ष ) कुरूनगात् ।
स्वमध्योत्थमतस्तेषां वध्यत्वामिति चानयन् (न्) ॥ २०८ ॥
यस्मादूतमभिप्रेतं रक्षितं वा जगत्त्रयम् ।
वर्तते प्रभुणा नित्यमुचज्ञानेन नान्यथा ॥ २०९ ॥
तदा च रक्षितं तेन पार्थार्थे कौरवं कुलम् ।
अनन्ततनुतां तत्र प्राकाशयदमित्रहा ॥ २१० ॥
अबन्धयोग्यताज्ञप्त्यै सर्वयज्ञहुतां नुताम् ।
स्वातन्त्र्याखिलकर्तृत्वपूर्वाखिलगुणालयम् ॥ २११ ॥
अनन्ततनुमात्मानमर्जुनायाप्यदर्शयत् ।
**यत्र** यत्राप्यगाद्देवः कुरुक्षेत्रं जगत्प्रभुः ॥ २१२ ॥ ॥ ५५ ॥

( टि. ) यतो निजभक्ताः पाण्डवाः अतः **स** कृष्णो **दूतमुखेन** दौत्यमुखेन दौत्यरूपेण पाण्डवप्रेष्यरूपेण हन्तुमेव कुरून् **अगात्** । ननु दूतरूपेण स्वगमने कथं तेषां हरिरित्यत उक्तं यत इति । यतस्तेषां कौरवाणां स्वमध्योत्थं स्वमध्यादुत्थं उत्थानं स्ववचनानादरेण तैरुत्थितं उत्थाय च स्वबन्धने विचारितं च, इति च=इत्यनेन प्रकारेण वध्यत्वं वधार्हत्वं तेषामानयन् तैः प्रापयन् स्वभक्तपाण्डवराज्यापहरणेन वधार्हत्वेऽपि भगवता वैषम्यपरिहाराय दूतरूपेणं तेषां सकाशे गमिष्यामि तेभ्यो धर्मसंहितां वदिष्यामि ततो मद्वचनाश्रवणेन मद्बन्धविचारणेन च पूर्णापराधिनस्तान्कृत्वा पाण्डवैर्वधं तेषां संपादयिष्यामीति दौत्यमवलम्बितम् । स कः । येन प्रभुणा समर्थेन कृष्णेन **यत्** यस्मात् **इदं** जगत् **ऊतं** रक्ष्यत्वादिना अभिप्रेतं चित्तेकृतं । यद्वा **ऊतं** रक्षितं अवते रूपमेतत् । अव रक्षणे इति पठन्ति । एवंभूतं सद् **वर्तते** । नित्यं वर्तते स्वव्यापारे प्रवर्तते स्म । केन करणेन रक्षितं । **उखेन** उखगताविति धातोः उच्चज्ञानेन । यद्वा उत्कृष्टेन खेन ब्रह्मस्वरूपेण ज्ञानेन खं ब्रह्मेति श्रुतेः । ज्ञानशब्दस्य ब्रह्मवाचित्वात् ब्रह्मणश्च ज्ञानरूपत्वात् । विज्ञानमानन्दं ब्रह्मेति

श्रुतेः । यद्वा तदा येन कृष्णेन **यत्** कौरवं कुलं **ऊतं** रक्षितम् । किमर्थं **पार्थार्थे** पाण्डवानां मूकंटककौरवसंहरणरूपस्वसेवार्थम् । यदि भगवान् यदा तैः स्वबन्धनविचारः कृतः तदैव हन्यात् कथं तर्हि पाण्डवानां भूमाववतार-प्रयोजनसिद्धिः स्यात् एवंभूतं सद्वर्तते किं(कं)चित्कालमित्यर्थः । **यत्र** कौरव-सभामध्ये । **स** भगवान् कृष्णः । **बहुतनुतां** अनन्ततनुतां विश्वरूपतां **प्रकाशयत्** प्राकाशयत् । अडभावश्छान्दसः । किमर्थं । **पार्थार्थे** पार्यते व्याप्यते जगदनेनेति पार्थः । प्रा पूरण इत्यतः करणे थः पार्थः = व्यापक इति अर्थो ज्ञानं । ऋगतावित्यतो भावे थः । ततश्च अरणम् अर्थः ज्ञानमिति यावत् । स्वव्यापकत्वज्ञप्त्यै । तदपि किमर्थम् ! अबन्धयोग्यताज्ञप्त्यै । नहि व्यापकं वस्तु बन्धयोग्यम् । मौढ्यादृयं मद्बन्धनायाध्यवासिता इति भावः । कीदृशीं बहुतनुतां । **सवहुतनुतां** सवेषुवबयोः सावर्ण्यात् सवेषु सर्वयज्ञेषु कायिकादिषु सोमेष्टयादिरूपेषु हुतां इष्टां आध्यात्मिकादिरूपेण पृथक्स्थितेन च रूपेण गृहीताऽऽहुत्यादिरूपपूजां सतीं नुतां स्तुतां उपलक्षणमेतत् उद्गीतां च । तदुक्तं 'एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ' इति गीतायाम् (४-३२) । श्रुतौ च (ऐत०उ०) 'एतं ह्येव बह्वृचा महत्युक्थे मीमासन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा ' इति । किं च भगवान् कुरूनाज्ञाभङ्गेन वध्यान् संपाद्य पुनरुपप्लाव्यं गत्वा ततः कुरुक्षेत्रमागत्य युद्धसंनाहसंनद्धयोरुभयोः सेनयो-र्मध्येऽर्जुनरथं स्थापयित्वा ततो नारायणाद्दिष्टतदनुबन्धिनिग्रहं बन्धुस्नेहादधर्म-त्वेनाशङ्क्य ततो निवृत्तायार्जुनाय स्वातन्त्र्याखिलकर्तृत्वपूर्वाखिलगुणालयम् । अनन्ततनुमात्मानं अदर्शयदित्यादिना **पार्थार्थे** अर्जुनार्थे यत्र **बहुतनुतां** विश्व-रूपतां प्रकाशयदिति ग्रन्थो व्याख्यातः । टीकायां यत्रेत्यनूद्य यत्रापि इति व्याख्यातम् । ततश्चेत्थं योजना । **स्वयं** स्वतन्त्रः जगत्प्रभुः **यत्र** यत्रापि कुरुक्षेत्रेऽपि न केवलकौरवसभामध्ये । यत्र कुत्र । यत् कुरुक्षेत्रं देवः अगात् । कीदृशीं । **बहुतनुतां** विश्वरूपतां **बहुतनुतां** बहूनां प्रत्येकं पूर्णानां । बहुः पूर्णतायामिति धातोः । स्वातन्त्र्याखिलकर्तृत्वपूर्वाखिलगुणानां । तनुता आश्रयता यस्याः सा तां बहुतनुतामिति विग्रहः ॥ ५५ ॥

( ति० ) **सवहुतनुतां** सर्वेषु यज्ञेषु हूयत इति आहूयत इति वा सवहुता । नूयते स्तूयते इति नुता सवहुता चासौ नुता च सा तथा ताम् ॥ ५५ ॥

## मूलम्

**गुरुकर्णनदीजादीनवधीच्चक्षुर्बलेन जनदीजादी(न्) ।**
**शक्त्या निजया परवान्स्वजनानुद्रेचयन्ननन्तयाऽपरवान् ॥५६॥**

**( पद० ) गुरुकर्णनदीजादीन् । अवधीत् । चक्षुर्बलेन । जनदीजादी । इ (ईन्) । शक्त्या । निजया । परवान् । स्वजनान् । उद्रेचयन् । अनन्तया । अपरवान् ॥ ५६ ॥**

## टीका

स भीष्मद्रोणकर्णादीन् दृष्ट्यैव व्यहनद्धरिः ।
जनदी(नी) जो विरिञ्चोऽपं जायमानः श्रियः सुतः ॥२१३॥
जनिताऽसौ महति ( सोम इति ) ×यज्जनयन्वा जनान् यतः ।
नृहरिर्जन(नी) दीजादी तमप्यन्तेऽत्ति यः स हि ॥२१४॥
स्वजनान्वर्धयन्देवः शत्रुमांस्तद्विरोधिभिः ।
स्वतस्त्वपरवान्नित्यं निरानिष्ट इति श्रुतिः ॥२१५॥
निजयाऽनन्तया शक्त्या वर्धयन्स्वजनं हरिः ।
स्वत उत्तमहीनोऽसौ स्वतस्त्वपरवान् प्रभुः ॥ २१६ ॥ **५६ ॥**

( टि० ) स कृष्णः **गुरुकर्णनदीजादीन्** स्वरूपतारतम्यानुसारेणेयमुक्तिः । अथवा सेनानेतृत्वतारतम्यमनुसृत्य । क्रमास्त्वित्थम् भीष्मद्रोणकर्णादीनिति । क्रमेण तेषां च सेनाप्रणेतृत्वात्तेनैव क्रमेण युद्धपतित्वाच्च । तथा च भीष्मद्रोणकर्णादीन् सेनाप्रणायकान् तत्प्रणीतसैनिकान् **चक्षुर्बलेन** दृष्ट्यैव **अवधीच्च** । न केवलं सारथ्यं कृतवानिति भावः । तद्वधे कैमुत्यमाह, कथंभूतः कृष्णः **जनदीजादी** जनदीजो विरिञ्चः । कथं 'जायमानः श्रियः सतः जनिताऽसौ महति यदिति । जानती'ति जनदी प्रकृत्यन्तरमेतत् । सा चासौ ई च श्रीश्च सा जनदी सतः ब्रह्मणो जायमानः श्रियः जनिता जनयिता 'जनिता मन्त्र' इति निपातनात् । स्वात्मानमिति शेषः । क्व । महति महत्तत्त्वे । तथा च जनद्या जातो जनदीजः तदुक्तं 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ' ( गीताभाष्ये ) इति । अव्यक्ताभिमानिन्याः श्रियो महत्तत्त्वाभिमानी विरिञ्चो जातः । अथवा सतः संकर्षणनाम्नो ब्रह्मणो जायमानः श्रियः प्रकृतिनाम्न्याः गायत्रीसावित्रीसरस्वतीति त्रिरूपायाः स्वपत्न्याः स्वात्मानं जनयति ।

ल. टि. मात्रा : १२, १८, ११, २१.

तदप्युक्तम् । 'गायत्री चैव सावित्री तथैव च सरस्वती । एवं त्रिरूपा प्रकृतिरि'त्यादौ । तथा च लक्ष्मीजो वा स्वभार्याजो वा विरिञ्चो जनदीजः तमत्तीति जनदीजात् । स चासौ **इन्** स्वामी च **जनदीजादी** नृहरिः प्रलय इति शेषः । कोऽर्थः । येन +जगज्जनकविरिञ्चोऽपि स्वपुत्रो नृहरिरूपेण भक्ष्यते तस्य किं कौरववध इति । कीदृशः कृष्णः **स्वजनान्** स्वभक्तान् इह पाण्डवान् परत्र च ब्रह्मादीन् **उद्रेचयन्** उद्रेकं प्रापयन् वर्धयन् । पुनः कीदृशः तद्विरोधिभिः स्वभक्तविरोधिभिः **परवान्** शत्रुमान् स्वतः =स्वभक्तैस्तु **अपरवान्** अशत्रुमान् नित्यं । कुतः 'निरनिष्टो निरवद्य' इति श्रुतेः । **निजया** स्वाभाविक्या स्वस्यानन्तत्वात् **अनन्तया शक्त्या स्वजनं** जात्यभिप्रायेणैकवचनं स्वजनान् वर्धयन् **अपरवान्** न परवान् उत्तमवान् अपरवान् स्वत उत्तमहीनः ।। ५६ ।।

( ति० ) **जनदीजादी** तृतीयोऽतिशये यतोऽतो दीकारे नीकारो बोध्यः । तथा च जनदी जननी लोकमाता ततो जायत इति जनदीजो विधिः तमप्यन्तेऽत्तीति जनदीजादी । ननु जनयित्र्याः जननीशब्दप्रयोगः कथमिति चेत् जनिता सोम इत्यादिवदिति ।। ५६ ।।

( भ. ) यथोक्तं 'परसैनिकायुरक्ष्णा हृतवर्ती'ति । **जनदीजादीति** । जननी जननवान् जायमानः स एव जनदी तृतीयोऽतिशय इति सूत्रात् इतरेभ्यो जननेऽतिशयप्रदर्शनाय नकारस्थाने दकारः । न हीतरवद्विरिञ्चजननम् । भगवन्नाभिकमलजातत्वात् । अथवा जननी रुद्रादिजननवान् तत्सृष्टिकर्ता । स एव जनदी । न हि कुलालादिसृष्टिवत्तस्य सृष्टिः किंतु विशिष्टैवेति ज्ञापनाय दकारः । स चासावीजो लक्ष्मीपुत्रश्चेति जनदीजो विरिञ्चस्तमप्यन्तेऽत्तीति तथोक्त इत्यर्थः । ....अत्र जनदीजादीत्येव प्राचीनटीकाभिमतः । यादुपत्ये तु **जगदीजादीनि**ति पाठमङ्गीकृत्य **जगदीजादी, ईन्,** इति छेदमाश्रित्य ई लक्ष्मीं नयन् स्वजनान्प्रापयन्निति व्याख्यातम् ।। ५६ ।।

( ना० ) **जनदीजादी** जनान् दीयते क्षिणोतीति जनदीः जगत्क्षयकर्तृत्वात् रुद्रः । दीङ्क्षये दैवादिकः क्विबन्तः । तं जनयत्यसौ जनदीजः ब्रह्मा तमप्यत्तीति । यद्वा दीश्च जश्च दीजौ जनदीजौ जनानां संहारजनकौ रुद्रविरिञ्चौ । तावप्यत्तीति । प्रह्यादित्वात् 'नन्दिग्रहिपचादिभ्यः'

+ ल. टि. मात्राः १२, १८, ११, २१.

इत्यादिना णिनिः । **परवान्** पराधीनः भक्तवशतामापन्नः । तदीयशत्रुभिरेव स्वयं शत्रुमानिति वा ॥ ५६ ॥

## मूलम्

**यस्य सुनीतिसहायान्नारिपून्मेनेऽर्जुनः समेतसहा यान् ।**
**अकरोच्चासु परासुप्रततिं सेनासु धावनासुपरासु ॥ ५७ ॥**

**( पद० ) यस्य । सुनीतिसहायात् । न । रिपून् । मेने । अर्जुनः । समेतसहायान् । समेतसहाः । यान् । अकरोत् । च । आसु । परासुप्रततिं । सेनासु । धावनासुपरासु ॥ ५७ ॥**

## टीका

यस्य सारथ्यबलतो यस्य न्यायबलादपि ।
समेतान्सहमानो यान् गच्छन् मेने रिपून्न हि ॥ २१७ ॥
अकरोच्चासु सेनासु गतासूनां ततिं (च) जयः ।
धावनेनासुतात्पर्यं यासु सेनासु वै नृणाम् ॥ २१८ ॥ ५७ ॥

( टि० ) **अर्जुनः** जयः **यस्य** कृष्णस्य **सुनीतिसहायात्** सुष्ठु नीतिर्नयनमश्वानां सा सुनीतिः सारथ्यमिति यावत् । तस्याः सहायात् तद्बलतः । यद्वा कृष्णस्य **सुनीतिसहायात्** शोभना नीतिः सामादिरूपा तस्याः सहायात् बलात् यस्य सुनीतिबलादपि । **समेतसहाः** समेतान् मिलित्वाऽऽ-(त्वा?) गतान् व्यूढान् सहते स समेतसहाः षहमर्षण इत्यस्मादसुन् तत उपधादीर्घः । समेतान् सहमानः तेषां आटोपं विफलीकुर्वाणः । अत एव तान् प्रति **यान्** अभिमुखं गच्छन् **रिपून्** शत्रून् **न मेने** नागणयदित्यर्थः । अर्जुनः **आसु सेनासु परासुप्रततिं** परागता असवो येषां ते परासवः तेषां प्रततिं गतासूनां ततिं निचयम् **अकरोच्च** । कथंभूतासु सेनासु **धावनासुपरासु** असुषु प्राणेषु परास्तत्पराः असुपराः धावनेन पलायनेन असुपरा स्वजीवनपराः तासु । यद्यर्जुनमुखे स्थास्यामस्तर्हि मरिष्यामोऽतो नाऽभिमुखं गमिष्यामः किंतु शीघ्रं पराङ्मुखतया पलायनमेव कुर्म इति भावः ॥ ५७ ॥

## मूलम्

**येन जयद्रथमारः पार्थः ( त्रा* ) शत्रूनवापतद्रथमारः ।**
**यद्विरहादपि देहे सरथः शश्वास्थितेः सदादपि देहे ॥ ५८ ॥**

---

* रक्षकेन. यादु. । मात्राः १२, १२ ( १८ ), १२, २०

( पद० ) येन। जयद्रथमारः। पार्थः ( पात्रा )। शत्रून्। अवापतत्। रथमारः। यद्विरहात्। अपि। देहे। सः। रथः। शश्वत्। स्थितेः। सदात्। अपि। देहे ॥ ५८ ॥

टीका

जयन्तो हि रथा येषां ते सर्वे हि जयद्रथाः।
अथवा सिन्धुराजोऽसौ जयद्रथ इतीरितः ॥ २१९ ॥

मारयन्नर्जुनस्तान् हि येन शत्रूनवापतत्।
येन सारथिना चैव रमते रथशोभया ॥ २२० ॥

हर्यधीनजयः सोऽयं दग्धो यद्विरहाद्रथः।
यत्स्थितेर्देहगोप्येष जीवोऽत्ता सुखदुःखयोः ॥ २२१ ॥ ५८ ॥

( टि० ) **जयद्रथमारः** जयन्तो हि रथा येषां ते सर्वे हि जयद्रथाः। तान्मारयतीति तथोक्तः। यद्वा सिन्धुराजो जयद्रथस्तं मारयन् **पार्थः** अर्जुनः **यन** कृष्णेन **शत्रून् अवापतत्** रिपूनभ्यागच्छत्। कीदृशः अर्जुनः। **येन** कृष्णेन सारथिना निमित्तेन **रथमारः** रथस्य मया शोभया रमते। कोऽर्थः। हर्यधीनजयः। कस्मादिदमित्यत आह **यद्विरहादिति। स रथः** सोऽयं प्रसिद्धो रथः यदुपरि ब्रह्मास्त्रादीनां पातेऽपि न किंचिज्जातं यावत्कार्यं भगवत्संकल्पात्। स एव रथो भगवत्संकल्पानुसारेण कार्यसमाप्तौ अर्जुनं रथात्प्रथममवतार्य पश्चात्स्वावतरणरूपात् **यद्विरहात्** यस्य कृष्णस्य वियोगात् **देहे**ऽपि दग्धोऽप्यभूत्। न केवलमेतदेव यदर्जुनरथे भगवति स्थिते अर्जुनस्य जयः किंतु **यत्स्थितेः** यस्य भगवतः स्थितेः **देहेऽपि सदात्** सन् वर्तमानो देहगोप्येष जीवः अत्तीति आत् सुखदुःखयोः अत्ता संश्वासावात् चेति सदादिति विग्रहः तदुक्तं ( छां. उ. ) 'स एष जीवेनात्मनोनुप्रभूतः' पेपीयमानोमोदमानस्तिष्ठतीत्यादौ ॥ ५८ ॥

( ति० ) **अपि**र्यस्येति समुच्चिनोति .... यद्वा देहे सत् विद्यमानो जीवः **आत्** अत्तीति ॥ ५८ ॥

( भ० ) **सदा** अत्तीति **अत्** सुखदुःखभोक्ता जीवोऽपि। **देहे** यस्य हरेः **शश्वत्स्थितेः** अवस्थानबलादेव। स्वयमवतिष्ठत इति शेषः। 'ब्रह्मणा

संपरित्यक्तो मृत इत्युच्यते नरः ' इत्याद्युक्तेः । अत्र देहप्रवाहस्यानादित्वापेक्षया देहे शश्वत्स्थितेरित्युक्तम् । लिङ्गदेहापेक्षया वा ॥ ५८ ॥

( ना० ) **सरथः** देहाख्यरथसहितस्तदभिमानी जीवोऽपि । **सदात्** सदासर्वदा अतति इतस्ततः संचरति । अत सातत्यगमने कर्तरि क्विप् अत्तीति वा भोक्तृत्वादिव्यापारवान् । भवतीति शेषः ॥ ५८ ॥×

## मूलम्

**यद्भरितो भरताभः प्रभुरंभाभावितोऽभिभरताभः ।***
**भीमो रभसाऽभिभवी प्रसभं भाभाभिभूर्भासा भिभवी + ॥५९॥**

**( पद० ) यद्भरितः । भरताभः । प्रभुः । अंभाभावितः । अभिभरताभः । भीमः । रभसा अभंभिभवी । प्रसभं । भाभाभिभूः । भासा । भिभवी ॥ ५९ ॥**

## टीका

भरतो हरिरेवैकः स्वतोऽत्यन्त ( प्रकृत्यन्त ) विधारणात् ।
भरितस्तेन हरिणा भाति तद्वद्वृकोदरः ॥ २२२ ॥
अथवा भरतः प्राणः स एव ह्यवतारगः ।
तद्वदाभाति भीमोऽयं संग्रामादौ महाबलः ॥ २२३ ॥
अथवा भरतो राजा वासुदेवपदाश्रयः ।
तद्वद्भीमोऽथवा तं च तद्वंश्यान्भास(वे)येत्प्रभुः ॥ २२४ ॥
अं बिभर्ति यतो नित्यं अंभ्रण्यम्भेति कीर्तिता ।
तया यः पोषितः सोऽयमम्भाभावित ईरितः ॥ २२५ ॥
अभितो भरता ये हि संग्रामेषु परस्परम् ।
समन्ताद्भाति तेष्वेको भीमसेनो महाबलः ॥ २२६ ॥
रभसाऽभिभवत्येष प्रज्ञयाऽ(सह्या) रीन्स्वतेजसा ।
भारूपः सर्वतोऽन्येषां भारूपाणां समाश्रयः ॥ २२७ ॥
भमृक्षं भा शशी रुद्रो भवस्तद्वान्वृकोदरः ।
भिभवौ चन्द्ररुद्रौ यदाभिमन्युघटोत्कचौ ॥२२८॥ ५८ ॥

---

× ल. टि. देहे दह भस्मीकरणे लिट् देहे देहाते देहिरे इति । * १७ (१८) १९ मात्राः । १ प्रकृतिपर्यन्तस्य जगतः । २ ति. संमानयेत् ।

( टि० ) **यद्भरितः** येन कृष्णेन भरितः । **भीमः भरताभः** स्वतः अत्यन्तविधारणात् स्वातन्त्र्येण मुक्तामुक्तविधारकत्वाद्भरतो हरिरेवैकः । बिभर्तीति भरतः स एवावतारगो भीमः तथा च भरतवत् मुख्यप्राणवत् आभातीति भरताभः अत्र स्वदृष्टान्तः । क भरताभः । संग्रामादौ महाबल इति तात्पर्यम् । अथवा भरतो राजा वासुदेवपदाश्रयः दौष्यन्तिः भरतः तद्वदाभातीति भरताभः अत्र नीचदृष्टान्तः । अथवा भरतं तद्वंश्यान् भरतान् भाप(व(स)यतीति भरताभः तद्वंश्यकीर्तिकृत् इत्यर्थः। अथवा **प्रभुरि**त्यस्य व्याख्यानं महाबल इति। कीदृशो भीमः **अंभाभावितः** अं ब्रह्म बिभर्तीति अंभ्रणी महालक्ष्मीः अंभेति कीर्तिता तया अंभया भावितः पोषितः अंभाभावितः लक्ष्मीतनय इत्यर्थः । पुनः कीदृशः । **अभिभरताभः** सर्वतः भ्रियन्ते धार्यन्ते पोष्यन्ते ते वा अभिभरताः संग्रामेषु परस्परं सखायः तेषु सेनाद्वयस्थेषु अर्जुनादिषु तथा द्रौण्यादिषु आ समन्ताद् भातीति अभिभरताभः तेषु उभयपक्षस्थेषु महाबल इत्यर्थः । अत एव दुःशासनवधावसरे भीमबलं दृष्ट्वा द्वे अपि सेने रणभूमिं विसृज्य गते । पुनः कीदृशः। **रभसाभिभवी** रभसा वेगेन अभिभवति शत्रूनिति रभसाभिभवी वायुत्वात्स्वस्य । तथा **भासा** प्रज्ञया तेजसा वा **अभिभवी** शत्रूनिति शेषः । अथवा पुनः कीदृशः। **भाभाभिभूः** भा च प्रज्ञा च भा च तेजश्च भाभे (से) ताभ्यां अभिभवति शत्रूनिति भाभाभिभूः । यद्वा भारूपः सर्वतः । भारूपाणामन्येषां समाश्रयः । पुनः कीदृशः । **भिभवी भं** भाते जयते भं तद्विद्यते यस्य स भी । अथवा भानि नक्षत्राणि तानि विद्यन्ते यस्य स भी । एवंभूतश्चन्द्रोऽभिमन्युनिविष्टः तथा भवः रुद्रः घटोत्कचनिविष्टः तौ भिभवौ भीच भवश्चेति विग्रहः । तौ विद्येते यस्य स भिभवी ॥ ५९ ॥

( भ० ) **यद्भरित इति** । तद्विशिष्टप्रतिमारूप इति यावत् । भीमस्य शत्रुतिरस्कारे अभिमन्युघटोत्कचावुपस्कराविति भावेन तत्साहित्यमाह **भिभवीति । भाभाभिभूः** स्वयं भारूपः । अन्येषां सर्वेषां भारूपाणां अभि= सम्यक् भूः आश्रयश्चेति तथोक्तः । अत्र सर्वत्र यद्भरित इति हेतुगर्भमनुवर्तनीयम् । तथा च कृष्णसंनिधानेनैव भीमेनैतादृशं माहात्म्यं प्राप्तमिति भावः ॥ ५९ ॥

(ना० ) **भासा । भाभाभिभूः** भा दीप्तिः तया भातीति भाभः सूर्यस्तमभिभति जयतीत्यर्थः । तत एव **अभि** अभिमुखः सेवार्थं **भवो** रुद्रः सोऽस्यास्तीति **अभिभवी** रुद्रेणापि वन्द्यः सन् ॥ ५९ ॥

## मूलम्

यदनुग्रह(हि) पूर्णत्वाद्भीमः सर्वानरीननहिपूर्नत्वाऽऽत् ।
अदहद्बाहुबलेन क्रोधाग्नावाहितान्निजाहुबलेन ॥ ६० ॥
(पद०) यदनुग्रह ( हि ) पूर्णत्वात् । भीमः । सर्वान् । अरीन् ।
अनहिपूः । नत्वा । आत् । अदहत् । बाहुबलेन । क्रोधाग्नौ ।
आहितान् । निजाहुबलेन ॥ ६० ॥

## टीका

यदनुग्रहपात्रेषु संपूर्णत्वाद्वृकोदरः ।
क्रोधाग्नाविति मन्यवग्नौ नृसिंहाग्नावरीन् बहून् ॥ २२९ ॥
अदहद्बाहुबलत आहितानाहुतानिति ।
तृतीयोऽतिशये यस्माद्धोमोऽयं सर्वतो वरः ॥ २३० ॥
निजाह्वानवरेणेति मन्युसूक्तेन सूक्तवित् ।
एतावता न भीमस्य कामाद्या वर ( द्यान्तर ) वैरिणः ॥ २३१ ॥
यस्मादनहिपूरेष जीवन्मुक्तान्पुनाति हि ।
कुतः कामादयो दोषा नत्वाऽऽत्तुर्विष्णवेऽखिलम् ॥ २३२ ॥
न मे मदादिकं किं च किं त्वेतद्विष्णवेऽखिलम् ।
इत्येष हि नमस्कारस्तस्यान्तररयः कुतः ॥ २३३ ॥
शत्रून् जयन् श्रियं चैव तत्प्राप्तं राज्यमेव च ।
यः समर्पयतीशस्य विहितं विष्णुना सदा ॥ २३४ ॥ ६० ॥

( टि० ) **भीमः** । **यदनुग्रहपूर्णत्वात्** यस्य भगवतः कृष्णस्यानुग्रहो येषु ते यदनुग्रहास्तेषु पूर्णः वश्यस्तस्य भावस्तत्वं तस्मात् यदनुग्रहपात्रेषु भक्तेषु संपूर्णत्वात् सर्वोत्तमत्वात् । **क्रोधाग्नौ** क्रोधस्याग्निर्नेत्राभ्यां यस्य स क्रोधाग्निः नृसिंहाग्निः तस्मिन् **सर्वान्**बहून् **अरीनदहत्**।कथंभूतान् । **बाहुबलेन** बाहुबलत **आहितान्** तृतीयोऽतिशये इत्यत आहुतान् सर्वोत्तमहोमे हुतानिति यावत् । केन मन्त्रेण **निजाहुबलेन** निजाह्वानवरेण निजश्चासावाहुश्च आह्वानमिति यावत् । स चासौ वरश्च प्रातिलोम्येन रवश्चेति यावत् समाने लोपः [ महाव्या० ] इत्यतः वकारलोपः 'यस्ते मन्यो' इति मन्युसूक्तेनेति यावत् । कीदृशो **भीमः** भूतमः सूक्तवित् । ननु तर्हि मन्युसूक्तेन शत्रुदेहाख्यहविषा नृसिंहाग्नौ होमो

न कामनां विना घटते तस्य तद्व्याप्तत्वात् इत्यत आह-एतावतेति । एतावता भीमस्य कामाद्या वरवैरिणः मुख्यवैरिणः न शङ्कनीया इति शेषः । यस्मादेष भीमः **अनहिपूः** नहो विधिनिषेधाभ्यां बन्धो येषां ते नहिनः न नहिनः अनहिनः विधिनिषेधातीताः जीवन्मुक्ता इति यावत् । तान्पृणाति ददाति अभीष्टं पृणधातोरेव व्याख्यानं । अथवा पुनाति शोधयति स्वानुग्रहेण निर्जित-कामादिदोषान् करोतीत्यर्थः । यस्य भीमस्य कामादयो दोषाः कुतः । कीदृशो भीमः । **नत्वा आत्** अत्ता इत्यर्थः । नत्वा नमस्कृत्य प्रह्वीभूय । कोऽर्थ. अखिलं मदादिकं मद्देहेन्द्रियादिकं विष्ण्वावेशभूतं विष्णवे, मे मह्यं अखिल मुर्वरितं किंचिन्न इति मनसा ध्यात्वा तथा उक्त्वा च आसमन्तात् अत्ति समर्पयतीति आत् । कोऽर्थः । शत्रूनुभयविधान् जयन् श्रियं ज्ञानादिसंपत्तिं तथा तेभ्याप्तं राज्यमेव च ईशस्य समर्पयति संप्रदानत्वविवक्षाभावात् षष्ठीप्रयोगः । कीदृशः । विष्णुना विहितं सदा, कुर्वन्निति शेषः । तथा च कामनाभावेऽपि स्वभावादेव सर्वं विहितं सदा करोति न तु विधिनिषेधभिया । कुतः तस्य 'कामचारेण चैके,' (ब्र. सू. ३·४·१५) इत्युक्तजीवन्मुक्तपतित्वात् । 'स्तुतयेऽनुमतिर्वा' (ब्र.सू.३·४·१४) इत्यादिना तथा समर्थितत्वात् । तदुक्तं 'बाल्यं च पाण्डित्यं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवे'ति श्रुतौ । एवं भूतस्य तस्य भीमस्यान्तररयः कुतः ॥ ६० ॥

(ना०) **अनहिपूर्णत्वात्** न (ण) ह बन्धने नहनं नहः संसारबन्धः सोऽस्त्येषां ते नहिनस्तद्भिन्ना अनहिनो मुक्तियोग्यास्तेषु पूर्णत्वात् अभ्यर्हितत्वात् । मुख्यप्राणस्वरूपत्वादिति भावः ॥ ६० ॥

## मूलम्

**कृष्णाभीमाप्ततमः शीर्णं येन स्वकीयहृदयमाप्ततमः ।**
**धृतराष्ट्रसुतानवधीद्भीमेन स्थापितो मनसि सुसुतानवधीत् ॥ ६१ ॥**

**(पद०) कृष्णाभीमाप्ततमः । शीर्णं । येन । स्वकीयहृदयम् । आप्ततमः । (स्वकीयहृदयमाप्ततमः) । धृतराष्ट्रसुतान् । अवधीत् । भीमेन । स्थापितः । मनसि । सुसुतान् । अवधीत् ॥ ६२ ॥**

## टीका

द्रौपदीभीमयोः स्वाप्तस्व (श्वाप्तस्व) भृत्यानां मनोगतम् ।
येनाज्ञानतमः शीर्णं मनसि स्थापितोऽपि यः ॥ २३५ ॥

१ स्वभृत्यमनोगतं । तमः = अज्ञानम् ।

भीमसेनेन तेनैव निमित्तेनावधीत्खलान् ।
धृतराष्ट्रसुतान्सम्यङ्‌निष्पिष्टानेव सोमवत् ॥ २३६ ॥
अवधेरिन्धनाद्विष्णुरवधीदि(रि)ति कथ्यते ।
रक्षत्ययं सुमर्यादां तत्कण्टकवधेन हि ॥ २३७ ॥

( टि० ) **येन** कृष्णेन **कृष्णाभीमाप्ततमः** कृष्णाभीमयोः आप्ताः तेषां तमः द्रौपदीभीमयोः स्वाप्तस्वभृत्यानां **तमः** अज्ञानतमः । कीदृशं तमः । **स्वकीयहृदयं** स्वकीयानां स्वभृत्यानां हृदयं हृत् प्रति अयति प्रविशति तत्तथोक्तं मनोगतं । **शीर्णं** नाशितम् । शॄ हिंसायामिति धातोः । **आप्ततमः** अतिमित्रं पाण्डवानामिति शेषः । एवंभूतः **भीमेन मनसि** स्वमनसि **स्थापितः** सन् । **भीमेन** निमित्तेन करणीभूतेन वा । खलान् **धृतराष्ट्रसुतान् सुसुतान्** सोमवत् सम्यङ्‌निष्पिष्टानेव **अवधीत्** । कीदृशः कृष्णः **अवधीत्** अवधिं मर्यादां इन्धयति दीपयति रक्षयतीति अवधीत् । तेन तत्कण्टकवधेन धर्ममर्यादां कण्टकभूतदैत्यवधेनेति यावत् । अत एवोक्तं पद्मपुराणे 'स्वर्गास्वर्गत्वविच्छेदी देवेन्द्रानिन्द्रताहरः । रक्षोदेवत्वहृद्धर्माधर्मत्वघ्नः पुरुष्टुत' इति ॥ ६१ ॥

( या० ) **कृष्णाभीमाप्ततमः** द्रौपदीभीमयोरतिशयेनाप्तः स कृष्णः ।

( ना० ) **अवधीत्** । अवधिर्मर्यादा तम् एति पालयतीत्यवधीत् ( ईरगतौ ? ) कर्तरि क्विप् । 'ह्रस्वस्य पिति कृतितुक्' [ ६।१।७१ ] इति तुगागमः । युद्धे मया शस्त्रं न धार्यमिति प्रतिज्ञापालनार्थं तथा न कृतमिति भावः ॥ ६१ ॥

## मूलम्

**भीमनिपातित(विपाटित)देहानदर्शयत्स्वानरीन्विपाति(टि) तदेहान् ।**
**कृष्णाया हितकारी सम्यग्धी (गी) रप्रियःसदाऽहितकारी ॥ ६२ ॥**

**( पद० ) भीमनिपातित ( विपाटित ) देहान् । अदर्शयत् । स्वान् । अरीन् । विपाटितदेहान् । कृष्णायाः । हितकारी । सम्यक् । ( हि ) ईरप्रियः । सदा । अहितकारी ॥ ६२ ॥**

## टीका

भीमेन पाति(टि)ता देहा येषां वै बहुधा रणे ।
यद्धस्तत्पादचेष्टाश्च विपानामटितप्रदाः ॥ २३८ ॥

तान्स्वारीन्दर्शयामास कृष्णायै तद्धिते रतः ।
सम्यङ्मरुत्प्रियो विष्णुः सदा तद्वैरिमर्दनः ॥ २३९ ॥
कल संहरणे चेति धातुर्विद्रावणे तथा ॥ ६२ ॥

( टि० ) **कृष्णः स्वानरीन्** स्वभक्तपाण्डवारीन् दुर्योधनादीन् **कृष्णायाः** इत्याकृष्यते अर्थवशाद्विभक्तिविपरिणामः । कृष्णायै **अदर्शयत्** स्वप्रतिज्ञापालनार्थमिति शेषः । कीदृशान् **भीमनिपातितदेहान्** भीमेन निपातिताः देहा येषां ते तथोक्तास्तान् । कस्मात् । रणे वधात् । पुनः कीदृशान् **विपातितदेहान्** वीन्पक्षिणः पान्तीति विपाः पक्षिश्रेष्ठाः काकगृध्रादयस्तेषाभादितं भक्षितं भक्षणमिति यावत् तत् ददाति ताः विपातितदाः एवंभूताः ईहाः यद्धस्तपादचेष्टा येषां ते तथोक्तास्तान् । कथंभूतः कृष्णः **कृष्णाया हितकारी** । तद्धिते रतः । पुनः कीदृशः **सम्यक् हि** निश्चयेन **ईरप्रियः** मरुत्प्रियः । पुनः कीदृशः **सदाऽहितकारी** तद्वैरिमर्दनः पाण्डवादिस्वभक्तवैरिमर्दनः । अहितान् वैरिणः कारयति कालयति कलसंहरण इत्यतः संहरति, तथा कल विद्रावण इत्यतः द्रावयतीति वा अहितकाली रलयोरभेदात् ॥ ६२ ॥

( भ० ) **विपाटितदेहान्** । विपानां पक्षिश्रेष्ठानामटितमटनं भ्रमणं ददतीति विपाटितदाः । तादृशा ईहा हस्तपादादिचेष्टा येषां ते तथोक्ताः तान् । भीमविपाटितवैरिदेहभक्षणार्थमागताः पक्षिश्रेष्ठास्तदीयहस्तपादादिचेष्टाभिर्मृतिसमयजाताभिर्वारिताः सन्तः इतस्ततो भ्रमन्ति । एवंविधचेष्टायुक्तानदर्शयादिति भावः ॥ ६२ ॥

## मूलम्

अथ हरिणाऽपीतवलं द्रौणेरस्त्रं महारिणा पीतवलम् ।
दधताऽवासोमरणं नीतं चक्रेऽभिमन्युजं सोमरणम् ॥ ६३ ॥

( पद० ) अथ । हरिणा । अपि । इतवलं । द्रौणेः । अस्त्रं । महारिणा । पीतवलं । दधता । अवासोमरणं । नीतं । चक्रे । अभिमन्युजं । सोमरणम् ॥ ६३ ॥

---

ल. टि. १ अतितं 'तृतीयोऽतिशये' इति दस्य तः अदितम् ।

## टीका

हरिणा दधता धृत्वा पुष्णतेऽदं महारिणा ॥ २४० ॥
महान्तोऽरा हि यस्य स्युः महारं तत्सुदर्शनम् ।
तद्वता लीनसामर्थ्यमपि प्राप्तबलं स्वतः ॥ २४१ ॥
द्राण्यस्त्रं विष्णुरातं +तद्वासस्यमरणं बहिः ।
नीतं प्रसूतितश्चक्रे सोमस्य रणगं मृगैः ॥ २४२ ॥
सोमो रुद्रः स हि द्रौणिरुल्वं वास इति श्रुतिः ॥ ६३ ॥

( टि० ) **अथ** कौरववधेन पाण्डवानां राज्यदानानन्तरं **द्रौणेरस्त्रं** प्रागश्वत्थाममुक्तं ब्रह्मास्त्रं । कीदृशं । **महारिणा** महान्तः अरा धारा यस्य तन्महारं सहस्रधारं सुदर्शनं तदस्यास्तीति महारी तेन महारिणा । **हरिणा** कृष्णेन **पीतबलमपि** पीतं कदर्थीकृतं बलं सामर्थ्यं यस्य तत्तथा । लीनसामर्थ्यमपि । **इतबलं** स्वतः प्राप्तबलम् । स्वभावतो दुःसहमित्यर्थः । **अभिमन्युजं** विष्णुरातं परीक्षितं । **अवासोमरणं** न विद्यते वासः आच्छादकं उल्वं यस्याऽसौ अवासः अवासता भावप्रधानो निर्देशो द्रष्टव्यः अवासस्त्वेन, मरणं । **नीतं** प्राप्तं **चक्रे** । कस्मात् प्रसूतितः । योनिरन्ध्रनिर्ष्पीडनात् । कीदृशेन हरिणा । **दधता** इदं पाण्डवकुलं धारयता पुष्णता च । कीदृशमभिमन्युजं । **सोमरणम्** सोमस्य रणगं उमया सहितः सोमः किरातरूपी रुद्रः तस्य मृगैः सह यो रणस्तं गतं तद्वशमित्यर्थः । तदुक्तं मत्येन यो गुरुसुतं परलोकनीतं त्वां चानयच्छरणदः परमात्वदाधामि'ति । सोमस्य रणो यस्मिन्निति विग्रहः तद्वधोद्देश्यमपीति यावत् ॥ ६३ ॥

(ना०) कीदृशमस्त्रम् **इतबलमपि** इतं प्राप्तं बलं वरो वा येन तत् । ब्रह्मवरोपेतत्वात् बलाढ्यमपीत्यर्थः । अत एवाह **सोमरण**मित्यस्त्रविशेषणम् । उमया सहितः सोमः शिवस्तस्य रणः संग्रामो येनेत्यर्थः । येनास्त्रेण शिवः संग्राममकरोत्तदेव तेनास्मै दत्तमिति भावः । शिवावतारत्वादश्वत्थामैव वा सोमस्तस्य रणो येनेति वा ॥ ६३ ॥

(भ०) **वासोऽमरणम्** वासः उल्वं । तस्मिन् अमरणं=मरणरहितमेव, प्रसूतितः=गर्भात्, बहिर्नीतं चक्रे । न तु तत् संहरणसमर्थमासीदिति भावः ।

---

ल. टि. १ 'उल्वं वासः प्रोर्णुते तस्माद्गर्भाः प्रजायन्ते ' ( तैत्त. सं. ६ काण्ड, ५ प्रश्न, ३ अनुवाक ) । + चावासस्त्वमरणं बहिः ।

## मूलम्

**तस्य च रक्षा सुकृता जनार्दनेनेशशेषकेक्षासुकृता ।**
**पार्थेषु प्रेमवता नित्यं भर्त्राऽसुतासुविप्रेमवता ॥६४॥**

**(पद०) तस्य । च । रक्षा । सुकृता । जनार्दनेन । ईशशेषकेक्षासुकृता । पार्थेषु । प्रेमवता । नित्यं । भर्त्रा । असुतासुविप्रेम् । अवता ॥ ६४ ॥**

## टीका

तस्य रक्षा मृतस्यापि सुकृता चक्रपाणिना ॥ २४३ ॥
ईशः शेषश्च जगतो हर्तारौ जनिकृच्च कः ।
तर्जावनकृता सम्यगीक्षयैव महात्मनाम् ॥ २४४ ॥
पाण्डवानां प्रियेणैव भर्त्रा तेषां च सर्वदा ।
असुता असवो येषामदान्तास्तेऽसुतासवः ॥ २४५ ॥
तथाविधा हि विप्रा ये तेषामीः श्रीरुदाहृता ।
अस्त्रशापादिरूपा या तामप्यंशेन रक्षता ॥ २४६ ॥ ६४ ॥

(टि०) जनं दुष्टजनं अर्दयति इति जनार्दनं चक्रं तदस्यास्तीति **जनार्दनः** । मत्वर्थेऽच् । तेन चक्रपाणिना कृष्णेन । **तस्य च** मृतस्यापि परीक्षितः । **रक्षा** । **सुकृता** सुष्ठु कृता । कथंभूतेन कृष्णेन । **ईशशेषकेक्षासुकृता** ईशश्च शेषश्च कश्च ते तथोक्ताः सुष्ठु कुर्वन्ति स्वस्वव्यापारं ये सुकृतः ईक्षया स्वकृपादृष्ट्या सुकृतः ईक्षासुकृतः ईशशेषकाः ईक्षासुकृतो येन स तथोक्तस्तेन । यो ब्रह्मादीनां स्वकृपाकटाक्षेण सृष्ट्यादिनियामकस्तस्य परीक्षिद्रक्षणं न विचित्रमिति भावः । पुनः कीदृशेन । **पार्थेषु प्रेमवता** पाण्डवानां प्रियेण । पुनः कथंभूतेन । **नित्यं भर्त्रा** तेषां च सर्वदा धारकेण पोषकेण च । पुनः कीदृशेन । **असुतासुविप्रेम् अवता** । असुताः अदान्ताः असवो मनआदयो येषां ते असुतासवः । तपोहान्यर्थं प्राप्तक्रोधा इत्यर्थः । ते च ते विप्राश्च असुतासुविप्राः तेषां ईन् श्रियं अस्त्रशापादिरूपां । **अवता** अंशेन = भागेन रक्षता । कोऽर्थः ब्रह्मणमहत्त्वरक्षणार्थं तत्प्रयुक्तास्त्रशापादिकमपि अमोघीकुर्वता अत एव गर्भे रक्षितस्यापि परीक्षितोऽस्त्रमाहात्म्यरक्षणार्थमेव बहिर्निर्गतस्य मृतिं संपाद्य पुनः

सहस्रवर्षपर्यन्तं पाण्डववंशस्थापनरूपस्वसंकल्परक्षणाय पुनरुज्जीवनं कृतवान् ॥ ६४ ॥

(भ०) **चशब्दोऽप्यर्थः** । मृतस्येति शेषः । कृष्णो हि परीक्षितं गर्भे ब्रह्मास्त्रतो रक्षन्नपि स्वकृतरक्षणप्रकटनाय प्रसवसमये व्यवहितो बभूव । तदा तद्ब्रह्मास्त्रं तमहनत् । हतं च परीक्षितं पुनरुज्जीवयामासेति हि भारती कथा । तथा च प्रसूत्यनन्तरं मृतस्यापि **तस्य परीक्षितो रक्षा जनार्दनेन सुकृता** ॥ ६४ ॥

( ना०.) **असुतासुविभेम्** । ....ईः श्रीः अस्त्रवरशापादिसामर्थ्यरूपा भाग्यसंपद् तां । **अवता** कचिदंशेन रक्षता । अदान्तमनस्कत्वादिना कामक्रोधादिवशात् कचिदयोग्यविषयेऽपि वरशापं अस्त्रादिकं च प्रयुञ्जाना ये ऋष्यादयो विप्राः यथा भृगुर्लत्ताप्रहारं स्ववक्षसि कृतवान् यथा वा 'जनयिष्यति वो मन्दाः मुसलं कुलनाशनमि'त्यादिविप्रशापः यथा च कृतोऽश्वत्थाम्ना गर्भोपर्यस्त्रप्रयोगः इत्यादिकं ब्राह्मणानां चरित्रं तदीयगौरवसंरक्षणार्थं किंचित्सहते कचित्प्रतिकरोति चेत्येतत्तदीयास्त्रप्रभावं प्रदर्श्य स्वप्रभावमपि प्रादर्शयदिति भावः । अथवा असुतासवः अदान्तेन्द्रियाः कामक्रोधाभिभूताः कौरवास्तेभ्यस्तैरपहृतामिति यावत् । विशेषेण प्रकृष्टां ई राज्यलक्ष्मीं पाण्डवार्थं **अवता** । कौरवान्हत्वा पाण्डवेभ्यः अत्युत्कृष्टराज्यलक्ष्मीं प्रयच्छतेत्यर्थः ॥ ६४ ॥

## मूलम्

**ज्ञानं परमं प्रादाद्भीष्मगतः स्मृतिविमोक्षचरमं प्रादात् ।**
**पाण्डुसुतानामधिकं चक्रे वेदं गुणोत्तरं स्वनामधिकम् ॥६५॥**

**(पद०) ज्ञानं । परमं । प्रादात् । भीष्मगतः । स्मृतिविमोक्षचरमं । प्रादात् । पाण्डुसुतानां । अधिकं । चक्रे । वेदं । गुणोत्तरं । स्वनामधिकम् ॥ ६५ ॥**

## टीका

पाण्डवेयं प्रकृष्टं यद्राज्यं नो ददति स्म ते ।
प्रादास्तेषां स्वयं हत्वा प्रादात्तस्माज्जनार्दनः ॥ २४७ ॥
ज्ञानं च परमं मोक्षधर्मान्तविषयं हरिः ।
साधनं च विमोक्षस्य संपूर्णं भीष्मगोऽप्यदात् ॥ २४८ ॥

पाण्डवानां च तेनैव वेदं तेषां स्वनामधिम् ।
स्वगुणख्यापनं(कं) चक्रे ह्यन्येभ्योऽतिशयेन च ॥ २४९ ॥
अब्धिवन्नामधिर्नाम स्वार्थे कप्रत्ययः स्मृतः ॥ ६५ ॥

( टि० ) **प्रादात्** प्रकृष्टं न ददाति ते प्रादाः पाण्डवानां राज्यादातारः कौरवास्तानर्त्तीति प्रादात् कृष्णः । **भीष्मगतः** सन् । **परम**मुत्तमं **ज्ञानं** च न केवलं राज्यमिति यावत् । पाण्डवानां **प्रादात्** प्रददौ । कीदृशं ज्ञानं **सृतिविमोक्षचरमं** सृतेः संसारान्मोक्षः स चरमो यस्मिन् विषयतया तत् विमोक्षचरमं मोक्षधर्मान्तविषयं ' अन्तेषु रेमिरे (वी) धीरा न ते मध्येषु रेमिरे ' इति (भारत) प्रमाणात् । अथवा सृतिविमोक्षस्य चरमं संपूर्णसाधनं मुख्यसाधनमिति यावत् । ' न किंचिदन्तरायाये'त्यादिप्रमाणात् । तत्र भीमादितरेषां अवतारेष्वापरोक्ष्योज्झितेः तिरोहितलाभोऽपूर्वलाभश्च । भीमस्य त्वापरोक्ष्योज्झितेरभावात् सिद्धस्यैव पुनर्युक्त्यादिभिर्विशेषीकरणीयम् । तदुक्तं 'ब्रह्मणस्तु प्रायो नाऽप्रतिभासितामि'ति । स एव न्यायो वायाविति । ' वायुत्वे किंचिदूनते'ति प्रमाणात् कृष्णस्तेनैव ज्ञानेन **पाण्डुसुतानां वेदं** तदधीतं वेदम् **अधिकं** अन्येभ्योऽतिशयेन **गुणोत्तरं** स्वगुणख्यापकं चक्रे । कीदृशं वेदं **स्वनामधिकं** सु सुतराम् अस्यअकारवाच्यस्य विष्णोः नामानि धीयन्ते यस्मिन् स्वनामधिः स्वनामधिरेव स्वनामधिकस्तम् ॥ ६५ ॥

(ना०) **सृतिविमोक्षचरमम्** सृतेः संसारात् विमोक्षो यैस्ते सृतिविमोक्षा मोक्षधर्माः ते चरमाः अन्ता यस्मिन् तादृशं । **ज्ञानं प्रादात्** । आपद्धर्मप्रभृतिमोक्षधर्मपर्यन्तज्ञानोपदेशो यो भीष्मेण कृतः सः भीष्मे स्थितेन भगवतैव कृत इत्यर्थः । तेनोपदेशेन **पाण्डुसुतानां** पाण्डवानां इतरेभ्योऽ**धिकं** यथास्यात्तथा **वेदं** ऋगादिकं स्वनामानि धीयन्ते निधीयन्ते यस्मिन्निति स्वनामधिः उदधिशब्दवत् स एव **स्वनामधिकः** स्वार्थकप्रत्ययः तथाविधं । **चक्रे** भीष्मस्थे भगवत्युपदिशति सति धृतराष्ट्रादयो वहवः श्रोतारोऽभूवन् । तन्मध्ये च पाण्डवैर्वेदतात्पर्यमधिकं ज्ञातं सर्वाण्यपि वेदाक्षराणि भगवद्गुणकर्मप्रतिपादकानि भगवन्नामानीवेति । तथा ज्ञानमन्येषां नाभूदिति भावः ॥ ६५ ॥

## मूलम्

**तेनावापि सुजातैर्हरि ( य ) मेधस्तुरगावर्तनेऽपि सुजातैः ।**
**पाण्डुसुतैः सवसूकैरात्मैव्यासात्मना च सुसवसूकैः ॥ ६६ ॥**

(पद०) तेन । अवापि । सुजातैः हरि(य)मेधः । तुरगावर्तने । अपि । सुजातैः । पाण्डुसुतैः । सवसूकैः । आप्तैः । व्यासात्मना । सुसवसूकैः ॥ ६६ ॥

## टीका

तत्प्रसादेन संप्राप्तो ह्यश्वमेधः सुजन्मभिः ॥ २५० ॥
सुन्दरैर्वा सुपूर्णाङ्गैर्महायुद्धेषु पाण्डवैः ।
सुष्ठु यातैरवन्यामप्यश्वस्य परिवर्तने ॥ २५१ ॥
रुद्रदेहस्थितो विष्णुरुकः परशुभृद्विभुः ।
सवसुश्च स वै देवो यज्ञोच्छिष्टधनाधिपः ॥ २५२ ॥
अयं हि सवसुश्चोक्तो येषां कार्यकरः परः ।
**सवसूकैश्च** तैः पार्थैः सधनैस्तत्प्रसादतः ॥ २५३ ॥
तमेव शरणं प्राप्तैर्व्यासस्यैव प्रसादतः ।
सुसवस्सुमखो ह्यश्वमेधस्तत्कर्तृभिर्बुधैः ॥ २५४ ॥ ॥ ६६ ॥

(टि०) **पाण्डुसुतैः** । **तेन** तत्प्रसादेनेति यावत् । **हरिमेधः** अश्वमेधः **अवापि** संप्राप्तः । कीदृशैः **सुजातैः** सु जातं जन्म येषां ते तथोक्तास्तैः सुजन्मभिः । अथवा **सुजातैः** सुन्दरैः । पुनः कीदृशैः । **सुजातैः** सु जातं जन्म येषां ते तथोक्तास्तैः महायुद्धेषु सुपूर्णाङ्गैः संपूर्णसाधनैरित्यर्थः । पुनः कीदृशैः। **तुरगावर्तनेऽपि** अवन्यां अश्वस्य परिवर्तनेऽपि परिभ्रामणेऽपि, **सुजातैः** यजयोः सावर्ण्यात् सुयातैः सुष्टु यातं यानं अश्वाप्रतिबन्धेन गमनं येषां ते तथोक्ताः तैः । पुनः किंभूतैः **सवसूकैः** ओः रुद्रस्य कः कर्ता स्वामी उकः रुद्रदहेस्थितो विष्णुः परशुभृद्विभुः स वै देवः स एव देवः सवसुश्च वसुना यज्ञोच्छिष्टद्रव्येण सह वर्तमानः यज्ञोच्छिष्टधनाधिप इति यावत् । तदुक्तं ( ऐत० ब्रा० ५ मं., २ अ., ९ खं. ) तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इदं मम वै वास्तुहमिति । **वास्तुहं** यज्ञोच्छिष्टं । अत एव स्विष्टकृद्धोमानन्तरं होमो रुद्रदैवतः क्रियते । तया च सवसुः उको येषां ते सवसूकास्तैः रुद्रदेहस्थितपरशुरामोपकृतैरिति यावत् । अत एव **सवसूकैः** तत्प्रसादेन सधनैः वसुना द्रव्येण सहिताः सवसवः सवसव एव सवसूकाः दीर्घोऽतिशयद्योतनार्थः । व्यासपरशुरामयोरैक्यात तत्संततिरूपाणां पाण्डवानां परशुरामसंततित्वेन तद्धनार्हत्वान्न भिक्षुकवत् दानपात्री-

कृतत्वमात्रेण सधनत्वमित्यर्थः । पुनः कीदृशैः **आप्तैः** शरणमिति शेषः । तमेव शरणं प्राप्तैः । हतपित्रादिभ्यः बालकेभ्यो यागार्थं धनं न ग्रहिष्यामीति युधिष्ठिर (रो?) मनोनिर्बन्धात् ( निरवभ्रात् ? ) यागश्च कर्तव्यः धनं विना यागानिष्पत्तेः इति भावेन शरणं यातैरिति भावः । पुनः कीदृशैः । **व्यासात्मना** व्यासरूपेण तत्प्रसादेन च **सुसवसूकैः** शोभनश्चासौ सवोऽश्वमेधश्च सुसवस्तं सुवते षू प्रसव ( षूङ् प्राणिगर्भविमोचने ? ) इति धातोः ते सुसवसुवः । ते च ते के च प्रशस्ताश्च, ज्ञानिन इति यावत् । ते सुसवसूकास्तैः ज्ञानपूर्वकं स्वस्व ( श्व ) मेधकर्तृभिरित्यर्थः ॥ ६६ ॥

## मूलम्

**तदनुसुपाण्डुतनूजै रेमे क्ष्मां पालयन्सुपाण्डुतनूजैः ।**
**अनुपमसुखरूपोजः परमः श्रीवल्लभः स्वधिकरूपोजः**
**( सति सुखरूपोजः ) ॥ ६७ ॥**

**( पद० ) तदनु । सुपाण्डुतनूजैः । रेमे । क्ष्मां । पालयन् । सुपाण्डुतनूजैः । अनुपमसुखरूपः । अजः । परमः । श्रीवल्लभः । स्वधिकरूपः ( सति । सुखरूपः ) । जः ॥ ६७ ॥**

## टीका

तदन्वसौ महीं पाण्डुपुत्रैः कृत्वाऽनुपालयन् ।
रेमे सुशुद्धविज्ञानतनुं गच्छाद्भिरेव तैः ॥ २५५ ॥
स्वयं तु नित्यसंशुद्धानुपमानन्दचिद्धनः ।
श्रीवल्लभः परः सर्वकार्येभ्यस्तत्प्रभेदिते ( यः सत्पदोदिते ) ॥२५६॥
महदादिपृथिव्यन्ते वृहदण्डेप्यनेकधा ॥ ६७ ॥

(टि० ) **तदनु** पाण्डवानामश्वमेधसिध्यनंतरं श्रीकृष्णः **सुपाण्डुतनूजैः** समीचीनैः पाण्डुपुत्रैः कृत्वा **क्ष्मां** महीं **पालयन्** अनुपालयन् **रेमे** । कथंभूतैः **सुपाण्डुतनूजैः** शोभना चासौ पाण्डुश्च शुद्धा च सुपाण्डुः सुपाण्डुश्चासौ तनूश्च सुपाण्डुतनूः सुपाण्डुतन्वा जायन्त इति सुपाण्डुतनूजाः सशुद्धं विज्ञानं तनुं गच्छद्भिः मोक्ष इति शेषः। कीदृशः **अनुपमसुखरूपः** अनुपममसदृशं सुखमेव रूपं शरीरं यस्य स तथोक्तः । स्वयं तु नित्यसंशुद्धानुपमानन्दचिद्घनः ।

पुनः कीदृशः **अजः** जनिरहितः । **श्रीवल्लभः** लक्ष्मीकान्तः **परमः** परः सर्वकार्येभ्यः देहद्वाराजनिमत्त्वाज्जीवाः कार्याणि । अव्यक्तं नु विकारत्वात् इतरत् जडमव्यक्तकार्यं ब्रह्माण्डादिकं तु कार्यकार्यम् । एवं सर्वाणि कार्याणि । तेभ्यः जीवजडात्मकेभ्यः परः विलक्षणः अक्षरात्पर इत्यर्थः । पुनः कीदृशः **स्वधिकरूपः जः** तत्प्रभेदिते तत्य उक्तस्य गुणत्रयात्मकस्य प्रभेदेन गुणत्रयन्यूनाधिक्यरूपेण जाते महदादिपृथिव्यन्ते प्राकृते तद्विकारे विकृतसंज्ञे बृहदण्डे ब्रह्माण्डेऽपि नियामिकतया सुतरामधिकानि रूपाणि यस्य सः **स्वधिकरूपः** अनन्तरूपः **जः** प्रादुर्भूतः तदुक्तं 'तत्सृष्ट्वा तदेवानुप्राविशत्' । 'अजायमानो बहुधाविजायते' इत्यादौ ॥ ६७ ॥

( भ० ) **सुपाण्डुतनूजैः** सुपाण्डु अतिशुद्धं यद्विज्ञानं तदात्मिकां तनुं यान्ति गच्छन्ति अवगच्छन्तीति सुपाण्डुतनूजाः । सुशुद्धविज्ञानात्मकस्वस्वरूपसाक्षात्कारवन्तः तैः । बाह्यशरीरादावभिमानशून्यैरित्यर्थः । अत्र यकारस्थाने जकारः । सर्वपालकस्य विशिष्य क्ष्मापालनोक्तिर्लोकदृष्ट्यनुसारेणैवेति भावेनोक्तम् । **सति ज इति** । जः यः सति सच्छब्दः कार्यवाची । महदादि पृथिव्यन्ते सर्वस्मिन्कार्ये तथा ब्रह्माण्डेऽपि नियामकतया अनेकधा वर्तते स भगवानित्यन्वयः ॥ ६७ ॥

## मूलम्

**सुगतिं प(च)रमामददान्निजयोग्यां ज्ञानिसुतति(तिं) परमामददात् ।**
**पार्थानां सयदूनां स पितृमेष्यादिनामिनां सयदूनाम् ॥ ६८ ॥**

**( पद० ) सुगतिं । प(च)रमां । अददात् । निजयोग्यां । ज्ञानिसुतपरमां । अददात् । पार्थानां । सयदूनां । सः । पितृमेष्यादिनामिनां । सयदूनां ॥ ६८ ॥**

## टीका

सुगतिं निजयोग्यां तु प(च)रमां मोक्षरूपिणीम् ॥ २५७ ॥
ज्ञानिनां सुततिर्देवसमूहस्तत्र चोत्तमाम् ।
अददाद्यादवेशानः पार्थानां यदुभिः सह ॥ २५८ ॥
अदच्चाकारवाच्यं चापरं ब्रह्माददा मतम् ।
तदत्ता ह्यददादेव सुरोदरविधिं ग्रसन् ॥ २५९ ॥

अन्नारो(दो ऽ)हं हरेरन्नं क्ष्मांऽभ इत्यादिवाक्यतः ।
सायुज्यदो हरिस्तस्य पितरः कुत एव तु ॥ २६० ॥
पुत्रा वा चारुदेष्णाद्या यस्य पुत्रश्चतुर्मुखः ।
प्रेष्यः पुत्रस्ततश्चैषां पितृपुत्रादिनामिनाम् ॥ २६१ ॥
नित्यं यान्तीति मरुतो यत्पदोक्ता उनामिनः ।
रुद्रास्तेषां यदूनां च पार्थानां सुगतिप्रदः (पार्थिवानां गतिप्रदः) २६२

( टि० ) **सः** यादवेशः कृष्णः **सयदूनां** यदुभिः सहितानां **पार्थानां** पाण्डवानां **निजयोग्यां** तत्तद्योग्यां **परमा**मुत्तमां मोक्षरूपिणीं **सुगतिं अददात्** प्रादात् । कीदृशीं सुगतिं **ज्ञानिसुततिपरमां** ज्ञानिषु सुपूज्या ततिः ज्ञानिसुततिः तत्र परमा उत्तमा ताम् । कोऽर्थः । यतो ज्ञानिषु देवसमूह उत्तमः अतः ततोत्युत्तमामित्यर्थः । कीदृशानां पार्थानां सयदूनां **पितृप्रेष्यादिनामिनां** पितृनामवन्तो वसुदेवाद्याः प्रेष्यनामवन्त उद्धवाद्याः पुत्रनामवन्तश्चारुदेष्णाद्या सखिसुहृन्मातुलेयनामवन्तः पार्थाः एवंभूतानामित्यर्थः । इदं न चित्रमित्याह । स कः यो देवः **अददात्** अत्तीति अत् ( अदत् ? ) आकारवाच्यं+ चापरं कार्यरूपं ब्रह्म चतुर्मुखः अददः तमत्तीति **अददात्** सुरोदरविधिं ग्रसन् सुरा रुद्राद्या उदरे यस्य स सुरोदरः स चासौ विधिश्च तं ग्रसन् स्वोदरे निवेशयन् तस्य सायुज्यद इति यावत् । ननु भक्षणमन्नस्य घटते चतुर्मुखस्यानन्नत्वात्कथं भक्षणमित्यतोऽदनमुपपादयति टीकाकारः अन्नारोहमिति । कीदृशं विधिं । अन्नारोहं । अन्नरूपे पृथिव्युदके आरोहति तत्राभिमानित्वेन वर्तमानस्तम् । तदुक्तं 'आपश्च पृथिवी चान्नमेतन्मया यानि ह्यन्नानि भवन्ति । स ईक्षतेमेनु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा ' इत्यादौ । अनेन वसुदेवादीनां पित्रादित्वं न घटत इत्याह यस्य पुत्रश्चतुर्मुख इति । यस्य पुत्रश्चतुर्मुखस्तस्य चारुदेष्णाद्या किं पुत्राः यश्च ब्रह्मपिता तस्य वसुदेवाद्याः कुतः पितरः । यस्य प्रेष्या वाय्वाद्या तस्य किमुद्धवाद्या इति भावः । पुनः स कः यः **सयदूनां** यन्ति मोक्षमार्गे सदा चलन्ति ते यन्तः मरुतः भूतभविष्यद्वर्तमानाः सूत्रात्मानः तथा वः रुद्राः यन्तश्च वश्च यद्वस्तेषाम् । यन्नामिनां उनामिनां भूतभविष्यद्वर्तमानानां रुद्राणां च सुगतिं प्रादात् । तथा च यदुभिः वायुरुद्रैः

---

+ टि. ' आकारस्तु घटे भावे परितापे पितामहे ' इत्यभिधानात् ।

सहिताः सयदवस्तेषां पार्थानां सुगतिप्रदः अनेन कैमुत्यं ध्वनितम् । यो ब्रह्मादीनां सायुज्यादिदस्तस्य यदुपार्थगतिदानं किं चित्रमिति ॥ ६८ ॥

( म० ) **चरमां** आन्तिमां मोक्षरूपिणीम् । **ज्ञानिसुततिपरमाम्** इतरदेवप्राप्यमुक्तितोऽप्युत्तमामित्यर्थः । कथंभूतः श्रीकृष्णः **अददात्** अशब्दवदाशब्दोऽपि ब्रह्मवाची । 'व्यमीमिपदा इत्यध्यात्ममि'त्यादिश्रौत-प्रयोगात् । 'पूर्णत्वाच्चा' इति तद्भाष्योक्तिश्च । प्रकृते तु आपदेन चतुर्मुखाख्यमपरं ब्रह्म ग्राह्यम् । तथा च **अदत्** गरुडशेषादिसर्वदेवादनकर्तृ यत् **आ**कारवाच्यमपरं ब्रह्म चतुर्मुखाख्यं तदत्तीति तथोक्तः । प्रलयकाले सर्वे सुराः क्रमेण स्वोत्तमेषु लीनदेहाः अन्ततो विरिञ्चोदरं प्रविशन्ति । सोऽपि भगवन्तं प्रविशतीति हि प्रसिद्धम् । यथाह तैत्तिरीयश्रुतिः 'अहमन्नादोऽहमन्नादोऽहमन्नादः अहमन्नमि'ति । अयत्वादन्नं देवजातमत्तीत्यन्नादः । सोऽहं भगवतोऽन्नमदनयोग्योऽस्मीत्यर्थः । मुक्तब्रह्मवाक्यमिदम् । उक्तं च भागवते क्षाम्भोऽनिलानलवियन्मनइन्द्रियार्थभूतादिभिः परिवृतः प्रतिसंजिघृक्षुः । अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परं स्वमनुभूय परं (रः) स्वयंभूरिति । तथा च सर्वसुरोदरविधेः सायुज्यप्रद इत्यर्थः । न केवलं पार्थानां यदूनामेव गतिमदात् किं तु **स** श्रीकृष्णो **यदूनां** नित्यं यान्तीति यन्तो मरुतः । उकारवाच्या रुद्राः यन्तश्च अवश्च ( उवः (ति०) ) यदवस्तेषां । उपलक्षणमेतत् । मरुद्रुद्रवस्वादित्याद्यवतारभूतानां पाण्डुभूरिश्रवःप्रभृतीनां पार्थिवानां च सुगतिमददात् । **पितृप्रेष्यादिनामिनामिति** अत्र प्रेष्यशब्दः पुत्रपरः प्रकर्षेण पितुरीषणाविषयत्वात् । तथा च वसुदेवाद्याः पितरः चारुदेष्णाद्या प्रेष्याः पुत्राः; आदिपदेन पाण्डवाः पैतृष्वसेयाः, भीष्मकाद्याः श्वशुराः, गदादयो भ्रातरः, शूरादयः पितामहाः इत्येवं नाममात्रवतामित्यर्थः ॥ ६८ ॥

( यादु० ) **अददात्** अदादिति वक्तव्ये दकारस्याभ्यासः छान्दसः स चातिशयार्थः अतिशयेनादादिति । ज्ञानिनां सुततिः यस्यां सा ताम् ।

## मूलम्

**रेमे तत्रापि सुखी परमोऽनन्तो ननन्द तत्रापिसुखी ।**
**प्राणेनेन्दिरया च प्रयुतो नित्यं महागुणेन्दिरया च ॥ ६९ ॥**

**(पद०) रेमे । तत्र । अपिसुखी । परमः । अनन्तः । ननन्द ।**

**तत्र । अपि । सुखी । प्राणेन । इन्दिरया । च । प्रयुतः । नित्यं । महागुणेन्दिरया । च ॥ ६९ ॥**

## टीका

नारायणः स वै रेमे तेषां तत्र महात्मनाम् ।
विसुखं दुःखमेव स्याद्विपरीतं सुखस्य यत् ॥ २६३ ॥
सोऽविसुख्येव नित्यं यद्रहितः **परमो** यतः ।
न तस्मादुत्तमोऽन्योऽस्ति सोऽ**नन्तो** देशकालतः ॥२६४॥
गुणतश्च स्वयं नित्यं **ननन्दा**तिसमृद्धितः ।
सर्वत्रापि **सुखी** देवो वैकुण्ठे किमु तद्धिते (वर्धते) ॥ २६५ ॥
तत्रापि रमया नित्यं प्राणेन **प्रयुतः** प्रभुः ।
अन्यैस्तु युत एवायं तारतम्येन तेषु च ॥२६६॥
महागुणा च या नित्यं तादात्म्येनैव संयुतः ॥ ६९ ॥

(टि० ) तेषां महात्मनां ब्रह्मादीनां सायुज्यादिदः स वै स एव नारायणः **तत्र** स्वर्गादौ देवलोके । **अपिसुखी** अविसुखी सुखाद्विपरीतं दुःखं विसुखं तदभावोऽविसुखं तदस्यास्तीति अविसुखी नित्यसुखी **रेमे** । मूलरूपतां प्राप्तैः सयदुभिः पार्थैरिति शेषः । कीदृशः **परमः** मा=नास्ति परः=उत्तमो यस्मात्स परमः स्वव्यतिरिक्तसर्वोत्तमरहितः । पुनः कीदृशः । **अनन्तः** देशतः कालतो गुणतश्चान्तराहितः । **सुखी** सर्वत्रापि सुखी पूर्णं सुखं यस्य सः सुखी भूमानिन्देति वचनात् पूर्णसुखो नारायणो देवः सर्वत्रापि पूर्णसुख एव **तत्रापि** वैकुण्ठेऽपि **ननन्द** । कस्मात् अतिसमृद्धितः अत्युद्रिक्तानन्दसमृद्धितः । कैमुत्याभिप्रायमिदम् । यो भूम्यादिलोकेषु पूर्णसुखः सन् रेमे स नित्यचिदात्मकलक्ष्म्यात्मके वैकुण्ठे पूर्णसुखः सन् ननन्देति किमु वक्तव्यम् । कीदृशः । **प्राणेन** भूतगत्या ब्रह्मणा **इन्दिरया च प्रयुतः** सायुज्यरूपप्रयुतिमद्रमाब्रह्मयुतः। प्रशब्देन विशेषणात् । अन्यैःमुक्तगरुडशेषादिभिर्युतस्तेषां सर्वाङ्गसायुज्याभावात् । तत्रापि तारतम्यमनुसंधेयमित्याह तारतम्येनेति । ननु तर्हि

---

(ति० ) **अपिसुखी** तृतीयोऽतिशय इत्यतः अविसुखीति जातम् । तत् बवयोरभेदात् अविसुखीति जातम् । (भ०) दुःखराहित्ये नित्यत्वरूपातिशयः ।

रमाब्रह्मणोः सर्वाङ्गसायुज्यभाजोः साम्यं प्राप्तमित्यत आह **नित्यं महागुणेन्दिरया च** नित्यं सर्वदा महान्तो गुणा आनन्दादयो यस्याः सा महागुणा सा च इन्दिरा च तया । अथवा महती ब्रह्मादिभ्य उत्कृष्टा गुणेन्दिरा गुणश्रीर्गुणसंपत्तिर्यस्याः सा तथोक्ता तया च । **नित्यं प्रयुतः** तादात्म्येनैव संयुतः अर्धनारीनारायणात्मेत्यर्थः । अनेन ब्रह्मसाम्यपरिहारः । तस्य प्रागविद्यमानमेव सायुज्यं भगवदुपासनेन प्राप्तं अतः सावधिकं भगवत्यास्तु सार्वकालिकम् उपासनानिरपेक्षं च । तदुक्तं—' समाना चासृत्युपक्रमादमृतत्वं चानुपोष्ये'ति ( ४।२।७ ) ब्रह्मसूत्रे । क्षीरनीरसायुज्यवत् ब्रह्मणः सायुज्यं । क्षीरस्थघृतवत् लक्ष्मीसायुज्यं स्वभावसिद्धमिति सायुज्येऽतिविशेषः ।। ६९ ।।

( भ० ) **तत्र** वैकुण्ठे तु **ननन्द** टु नदि समृद्धौ अतिसमृद्धिमत्तया व्यक्तो बभूवेत्यर्थः ।

( या० ) **महागुणेन्दिरा** स्वरूपभूतलक्ष्मीः तया प्रयुतः तादात्म्येन सङ्गतः ( प्राणे इन्दिराद्वारा रेमे । न तु द्वारपरित्यागेन । इन्दिरायां स्वात्मकश्रीरूपेन्दिरया प्रयुतः रेमे । स्वरमणत्वात् ) ।। ६९ ।।

( ना० ) ....**तत्रापिसुखी** अपिरभिव्याप्तौ पूर्णसुखवान् । **नन्दतः** समृद्धितः टु नदिसमृद्धाविति धातोः । **रेमे** चिक्रीडे । कीदृशः **तत्रापिसुखी** तान् त्रायन्त इति तत्राः ' आतोऽनुपसर्गे कः ' [ पा. ३।२।३ ] पार्थादीनां रक्षकः पातीति पः सोऽस्यास्तीति पी न पी अपी रक्षकरहितः सुशोभनान्यप्राकृतानि खानीन्द्रियाणि सन्त्यस्येति सुखी तत्राश्चासावपि चासौ सुखी चेति त्रिपदः कर्मधारयः । **महागुणेन्दिरयेती**न्दिराविशेषणम् । महागुणानां ज्ञानानन्दादीनामिन्दिरा शोभा यस्याः सा तया .... .... ।। ६९ ।।

## मूलम्

**एवं सर्वाणि हरे रूपाणि श्रीपतेः सुपर्वाणिहरेः ।**
**पूर्णसुखानि सुभान्ति प्रततानि निरन्तराणि सुभान्ति ।।७०।।**

**( पद० ) एवं । सर्वाणि । हरेः । रूपाणि । श्रीपतेः । सुपर्वाणिहरेः । पूर्णसुखानि । सुभान्ति । प्रततानि । निरन्तराणि । सुभान्ति ।। ७० ।।**

## टीका

एवं सर्वाणि रूपाणि हरेर्लक्ष्मीपतेः प्रभोः ॥ २६७ ॥
सुपर्वाणो हि देवा स्युस्तेषामाणिस्तु चाञ्च(च)लिः ।
स्वस्थानादेः स्ववैरिभ्यस्तद्धारी दैत्यमर्दनः ॥ २६८ ॥
**सुपर्वाणिहरि**स्तस्य रूपं यद्वर्णितं प्रभोः ।
समस्तगुणसंपूर्णं सर्वदोषविवर्जितम् ॥ २६९ ॥
भारताख्यानविषयः प्राधान्येनोक्तमार्गतः ।
श्रीकृष्णरूपमथवा सर्वान्तर्यामिकं परम् ॥ २७० ॥
आस्तिकादिप्रकारेण तथा मन्वादिना क्रमात् ।
तद्वन्मत्स्यादिरूपाणि सर्वाणीत्यवधार्यताम् ॥ २७१ ॥
संपूर्णसुखरूपाणि सुप्रभाणि तथाऽन्तिके ।
अत एव प्रकर्षेण ततानि च परस्परम् ॥ २७२ ॥
निरन्तराणि सर्वत्र भेदोऽन्तरपदोदितः ।
स्वयं तु नितरां सुष्टु भान्ति च ज्योतिषा सह ॥ २७३ ॥ ७० ॥

( टि० ) मन्वादिकेचिद्ब्रुवते ह्यास्तिकादि तथाऽपरे । तथोपरिचराद्यन्ये भारतं परिचक्षत इति भारतव्याख्यानसंप्रदायमव(नु?)रुध्य श्लोकं व्याख्याति **एवं सर्वाणीति** । **हरेः** नारायणस्य समस्तगुणसंपूर्णं सर्वदोषविवर्जितं प्राधान्येनोक्तमार्गतः आस्तीकादिप्रकारेण भारताख्या(तव्या)नविषयः यत् श्रीकृष्णरूपं वर्णितं अथवा मन्वादिना प्रकारेण क्रमात्समस्तगुणसंपूर्ण सर्वदोषविवर्जितं भारताख्या (तव्याख्या) नविषयो यत्सर्वान्तर्यामिकं रूपं वर्णितं एवं तद्वत् कृष्णरूपवत् अन्तर्यामिरूपवच्च **सर्वाणि रूपाणि** मत्स्यादिरूपाणि समस्तगुणसंपूर्णानि सर्वदोषविवर्जितानीत्यवधार्यताम् । कथंभूतस्य हरेः **श्रीपतेः** लक्ष्मीपतेः । पुनः कथंभूतस्य हरेः **सुपर्वाणिहरेः** ' सुपर्वाणः सुमनस ' इत्यभिधानात् सुपर्वाणो देवास्तेषामाणिराधारः स चासौ हरिः= स्वस्थानादेः वैरिभ्यो दैत्येभ्य आहर्ता तथा दैत्यमर्दनश्चेति सुपर्वाणिहरिः तस्य। तदाह ' आणिं न रथ्यममृताधितस्थुरिह ब्रवीतु य उ तच्चिकेतत् ' इति ( ऋ. मं. १. सू. ३४, मं. ६ ) श्रुतिः । कीदृशानि मत्स्यादिरूपाणि **पूर्णसुखानि** संपूर्णसुखरूपाणि । तथा **सुभान्ति** अन्ति अन्तिके सुभानि

सुप्रभाणीति सुभान्ति । अत एव संपूर्णसुखत्वादेरेव **प्रततानि** प्रकर्षेण ततानि व्याप्तानि । तथा **निरन्तराणि** परस्परं निर्गतान्तराणि निर्भेदानि । तदुक्तं । एकमेवाद्वितीयं ' ' नेह नानास्ति किंचने 'ति । ' उदरमन्तरं कुरुते अथ तस्य भयं भवती 'ति विपक्षे दण्डश्चोक्तः । ' उदरं ब्रह्मेति शर्कराक्ष्या उपासत' इति श्रुतेरुदरशब्दो ब्रह्मवाची । अत एव श्रुतिगीतायां 'उदरमुपासते यर्हि वर्त्मनि सूक्ष्मदृश ' इति व्याख्यानम् । तथा **सुभान्ति** स्वयं तु नितरां सुष्ठु भान्ति च ज्योतिषा सह । स्वप्रकाशानीत्यर्थः ॥ ७० ॥

( भ० ) **आणिश्चा**चक्रिरिव ( रथकीलमिव ) मुख्याश्रयः ।

( ना० ) एवं प्रादुर्भावप्रभृति परंधामप्राप्तिपर्यन्तं कृष्णावतारचरितं वाचयित्वा परमात्मनो मूलरूपवदेव पूर्णत्वं प्रतिपाद्य तथैवावतारान्तरेष्वति-दिशति–**एवं सर्वाणि हरेरिति** । ........ **सुपर्वाणिहरेः** सुपर्वणां देवाना-माणिः अण गतौ अणनं आणिः गमनज्ञानादिव्यापारं हरति स्वकार्योन्मुखं करोतीति सुपर्वाणिहरिस्तस्य । सकलप्रेरकाणामपि तत्त्वाभिमानिदेवानां प्रतीतिप्रवृत्त्यादिनियामकस्येत्यर्थः ॥ ७० ॥

## मूलम्

**रामराम महावाहो माया ते सुदुरासदा ।**
**वाद सादद को लोके पादावेव तवासजेत् ॥७१॥**

**(पद०) राम । राम । महाव । अहो । माया । ते । सुदुरासदा । वाद । सादद । कः । लोके । पादौ । एव । तव । आस-जेत् ॥७१॥**

## टीका

अग्निर्विजं रमित्येतदामोऽपक्वोऽभिधीयते ।
क्रीडायां रम्त्रमोमानवर्जितश्चोच्यते यतः ॥ २७४ ॥
दाहकाऽशेषदुःखा(दुष्टा)नां नित्यं तापत्रयोज्झित ।
क्रीडारूपाप्रमेयेति धन्यैः संबोध्यते हरिः ॥ २७५ ॥

( ल. टि. ) रामरामेति श्लोकस्य प्रत्यक्षरप्रातिलोम्येन जेत्सदेति श्लोको भवति इति प्रत्यक्षरप्रातिलोमयमकोऽयं श्लोकः अतिचित्रकवितां दर्शयितुं रचितः ।

राम रामेति तत्पश्चान्महावेति पदं भवेत् ।
महाबल महाज्ञान ततश्चाहो इतीरितम् ॥ २७६ ॥
महाबाहो इतीत्थं वा मायेति महिमोच्यते ।
महिमा तव दुष्प्राप्या मुक्तैर्ब्रह्मेशपूर्वकैः ॥ २७७ ॥
ज्ञानदाऽखिलभक्तानां तेनैव स्वगतिप्रद ।
गतिगन्धनयोर्वेति तत्र घ्राणादिभोगद ॥ २७८ ॥
साददामरशत्रूणां सादो नाशस्तमोऽमिधः ।
वादस्य साददाद्याऽपि विष्णोर्नुकमिति श्रुतिः ॥ २७९ ॥
एवं वक्तुं च नालं यः तमसा स कथं भवेत् ।
वशीकृताशिवाहीशवीशपूर्वश्चतुर्मुखः ॥ २८० ॥
पादाविवाश्रयेद्विष्णोः कस्ततोऽन्यस्तथाऽऽश्रयेत् ॥ ७१ ॥

( टि० ) भगवन्तं रामं नित्यापरोक्षितं हनुमद्रूपस्वेष्टदेवतं स्तौति-**रामेति** । न च वक्तव्यं रामायणव्याख्यानावसरोचितं रामस्तवनं इदं तु भारतव्याख्यानम् इति । अत एव पूर्वश्लोके मत्स्यादीनां प्रस्तुतिं चकार । न च विशिष्य रामस्तवने का पूर्वसंगतिरिति वक्तव्यम् । श्रीमन्महाभारते मार्कण्डेय-समाख्यायां रामकथाया अप्युक्तत्वात् । हे **राम** रं अग्निर्बीजं तथा च-×रेत्यस्यार्थो दाहकेति आमोऽपक्वः पापादिः । दुष्टजनमनोदेहादीनां पाको हरिभक्त्यादिसंपादनम् । 'तदुक्तं क्षेत्राणि सस्यसंपद्भिः कर्षकाणां मुदं ददुः । ज्ञानिनामनुतापं वा विपत्तिं तदजानतामि'ति (भाग० १० स्कं.)। तथा च अमानां अपक्वानां दुष्टानां र इति रामस्तस्य संबुद्धिः हे रामेति । अशेषदुष्टानां दाहक । अथवा आमो रोगः तापरूपः तद्दाहक स्वभक्तानां तापत्रयनिवारक । अथवा रैः दाहकैः तापत्रयैः अम अमेय आविषयीक्रियमाण नित्यंतापत्रयोज्झिते-त्यर्थः । अथवा राणां तापत्रयाणां आ समन्तात् मा निषेध उज्झितिर्यस्य स तथोक्तस्तत्संबुद्धिः हे राम । रमुक्रीडायामिति धातोः रमते सः रः क्रीडाश्रयः तत्संबुद्धिः रेति । गुणगुणिनोरभेदात् क्रीडारूपेति । माङ्माने न विद्यते मा मानं परिमितिर्यस्य सोऽमः । तत्संबुद्धिः अमेति । अप्रमेयेत्यर्थः । इति

---

ति० १ र अग्ने दुष्टदाहकेति भावः । रः पुमान्पावके कामे मोक्षे वज्र शरे धृते ( घटे ) इत्याभिधानात् ॥

धन्यैर्निरपेक्षैर्मुक्तामुक्तैर्ब्रह्मादिभिः संबोध्यते । हे **महाब** महावेति यावत् । बवयोः सावर्ण्यात् । नामैकदेशग्रहणेन नामग्रहणमिति न्यायाच्च महाबलेति व्याख्यानम् । महत् वं बलं तथा वं ज्ञानं ( वा गतिगन्धनयोरिति धातोः ) वान्ति गच्छन्ति परं ब्रह्म येन तत् ज्ञानं, यस्मात्स तथोक्तस्तत्संबुद्धिः । अथवा विशेष-बलेन षष्ठीसमाश्रयणम् । अहो आश्चर्यरूप । तथोक्तं गीतायां ' सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखमि'ति । अथवा महावाहो महान्तो वाहवो यस्य स तथा तत्संबुद्धिः । एवंभूत रामपदवाच्य । **ते माया** मयं सामर्थ्यमुद्दिष्टमिति वचनात् **माया** महिमा स्वातन्त्र्यादिरूपः **सुदुरासदा** सुतरां आसादितुमशक्या । मुक्तैर्ब्रह्मेशपूर्वकैः दुष्प्राप्या इत्यर्थः । तथा हे **वाद** वं ज्ञानं आ समन्तात् ददाति तत्संबुद्धिः । **वादसादद** अखिलभक्तानां ब्रह्मादीनां ज्ञानं वादः तेनैव स्वयो-ग्यज्ञानेन सादद षद्लृविशरणगत्यवसादनेष्विति धातोः सादो गतिः तां ददाति तत्संबुद्धिः स्वगतिप्रदेति यावत् । वा गतिगन्धनयोरिति व्याख्यानात् वं गन्धनं भोगः सुखादेः तं आ समन्ताद्ददातीति वा वाद तत्र=मोक्षसुगतौ घ्राणादिभोगदेति यावत् । सादोऽवसादनं तद्ददातीति तत्संबुद्धिः । अमरशत्रूणां तमोभिधनाशाद तदुक्तं ' निहता येन दानवा ' इति । ' अथ च दैत्यहतिस्तमसि स्थिरे'ति ( ता० नि० २. ) व्याख्यानात् । अथवा वादस्य व्यक्तवचनस्य साकल्येन वचनस्य सादद खेदद । कस्मात् । विष्णोर्नुकमिति श्रुतेः । साकल्येन लक्ष्म्यादिभिरपि वक्तुमशक्येत्यर्थः । यन्माहिमानं वक्तुमशक्यो जीवराशिः असौ परमात्मा कथं भवेत् । तस्मादैक्यवादो भ्रान्तिमूलः । तत्र कैमुत्यमाह **कः** करोति स्ववशे शिवादीनिति कः वशीकृतशिवाहीशवीशपूर्वश्चतुर्मुखः । **लोके** ज्ञानिवर्गे **तव पादावेव आसजेत्** । षज संगे आश्रयेत् । लोके तं विना कः तव पादावेव **आसजेत्** आश्रयेत् न कोऽपीत्याक्षेपार्थो वा कः । अन्ये विच्छिन्नभक्ताः इति भावः । अत एव भगवता ब्रह्माणं प्रति उक्तं ' न त्वामातिशयिष्यन्ति मुक्ता अपि कथंचन । मद्भक्तियोगाद् ज्ञानाच्च सर्वानतिशयिष्यसी'ति ॥ ७१ ॥

( ना० ) अथ सर्वावताराणामेवामित्यादिश्य पूर्णतां शृङ्गिग्राहिकया विशिष्यावतारविशेषे लेशतो दर्शयति **रामरामेति** । अनेन मत्स्यावतारं तावद्वर्णयति हे **रामराम** । रमयतीति रामा रमणीत्यर्थः । रमैव रामा प्रज्ञादि-त्वात्स्वार्थेऽण् । रामा रामा यस्येति रामरामस्तत्संबुद्धिः । अत्राऽऽद्यरामशब्दस्य यौगिकत्वेन भाषितपुंस्कत्वात् 'स्त्रियाः पुंवदि'ति पुंवद्भावः । हे लक्ष्मीकान्त

हे **महाबाहो** महाभुज **ते** त्वदीया **माया** शक्तिः **सुदुरासदा** अप्रधृष्या । अथवा महान्त्यश्च ताः आपश्च महापः समुद्रवर्तिन्यः महान्त्यः आपो यस्मिन्निति वा महाप् समुद्रः, तत्र आ=समन्तात् जिहीते गच्छति असौ महा-वाहः तस्य संबुद्धिः । महापे समुद्रे आजिहीते इति महापाह इति वा । समा-सान्तं कृत्वा तृतीयोऽतिशये इति पस्थाने वः । हे **महावाहो** समुद्रे समन्तात् व्यापृत अनित्यः समासान्तविधिरिति 'ऋक्पूरब्धूः पथामानक्षे' [पा० सू० ५।४।७४] इत्यप्प्रत्ययाभावः । ओहाङ् गतावस्मात् 'आतोऽनुपसर्गे कः' [पा० ३।२।३] इति कः । आ इत्ययं निपातो नतूपसर्गः । हे **ओमायाते** । ओमित्येतत्सर्ववेदोपलक्षणम् । तस्य सर्ववेदगर्भत्वात् । तदर्थम् आयातिः= आगमनं यस्येति तस्य संबुद्धिः ओमायाते । हे **सुदुरासदा** दैत्यैरप्रधृष्य हे **अ** अकारवाच्य वासुदेव वेदाहरणार्थमवतीर्ण । अथवा हे **लोके रामराममहावाहो** इति संबोधनं । लोके=लीयतेऽस्मिन् सर्वमिति लः उ उत्कृष्टं कं यस्मिन्नसौ उकः लश्चासावुकश्चेति लोकः तस्मिन् लोके प्रलयार्णवे । **रामराममहावाहोम्** रमणीयत्वात् रं न म्रियतेऽनेनेत्यमरं रं च तत् अमरं च रामरं रमणीयान्नं 'अन्नात्प्राणा भवन्ति भूतानां' ति श्रुतेः । न विद्यते ममः येषां ते अममाः निर्ममाः सप्तर्षयः रामरं च अममाश्च रामराममाः तान् हापयति गमयति वहतीति यावत् । असौ **रामराममहाः** । ओहाङ् गतौ अन्तर्णीतणिजर्थः क्विबन्तः । तादृशश्चासौ **वाहश्च** नौरूपः तमवतीति **रामराममहावाहोम्** । अवतेष्टिलोपश्चेति सूत्रात् अवतेर्धातोश्चानुकृष्टः मन्प्रत्ययो भवति । तस्य प्रत्ययस्य टेर्लोपो भवति मनो 'ज्वरत्वरे' त्यूठि 'सार्वधातुकार्धधातुकयोः' [७-३-८४ पा. सू.] इति गुणः । मन्वन्तरप्रलये हि सप्तर्षयः बीजानि गृहीत्वा नावमारुह्य तां च नावं मत्स्यस्य भगवतः शृङ्गे बबन्धुरिति श्रीभागवते स्फुटमुक्तम् । पाद्मे च वासुदेवसहस्रनामान्तर्गतमत्स्यनामसु 'मत्स्यदेवो महाशृङ्गो जगद्बीजवहित्रधृक् । लीलाव्याप्ताखिलाम्भोधिश्चतुर्वेदप्रवर्तकः' इत्युक्तम् । तथा हे **आयाते** आ=समन्तात् आयतिर्दीर्घो यस्येति तेन महा-शृङ्ग इत्युक्तं भवति । तथा हे **वादसादद** वातीति वाः वायुः तमत्तीति वादः वायुभक्षः वासुकिः सर्पः तस्य सादनं क्लेशः तं द्यति परिहरति तस्य संबुद्धिः । सानौ मत्स्यस्य शृङ्गे वासुकिसर्पः तस्य सादः अवसादनं

---

ल. टि. १ आयतिरेव आयातिः

क्लेशस्तं द्याति परिहराति तस्य संबुद्धिः । सा नौः मत्सस्य शृङ्गे वासुकि-सर्परूपया महारज्ज्वोपनिबद्धा तदा भगवता तस्मिन् प्रलयार्णवे सोऽपि रक्षित इत्यर्थः । यद्वा वदन्ति स्वगुणानिति वादाः वेदास्तान् सादयतीत्यप-हरतीति यावत् । तादृशो यः दैत्यः शङ्खासुरः तं द्याति खण्डयतीत्यर्थः । एतादृशस्य **तव पादावेव कश्चतुर्मुखः आसजेत्** आश्रयेत् । तदुक्तं ' मत्स्य-करूपलयोदविहारिन् वेदविनेतृचतुर्मुखवन्द्ये'ति ॥ श्रीः ॥

अथ कूर्मावतारो वर्ण्यते । हे **रामराम** रमणीयत्वात् **रः** आसम्यक् मा ज्ञानं येषां ते **आमाः** ब्रह्मापरोक्षज्ञानिनो देवाः । ' न देवपदवीं देवो ( प्राप्तो ) ब्रह्मदर्शनवर्जितः' इत्युक्तत्वात् । **अमराः** मरणरहिताः **आमाः** देवाः येनासौ **अमरामः** रश्चासावमरामश्चेति **रामरामस्तस्य** संबुद्धिः । कूर्मरूपेण भगवता हि अमृतमुत्पादयता तत्प्राशनेन देवा अमरीकृताः । तथा हे **महावाह** महान्त्यः अपोऽस्मिन्निति महाप् समुद्रस्तस्मिन्नाजिहीते असौ महावाहः ओहाङ्-गतौ मन्दरधारणार्थं समुद्रं प्रविष्टेत्यर्थः । यतः **ओं** वलेः **पूर्ण**, ' ओतत्वत्राचो ह्योंकारो वक्त्यसौ तद्गुणोततामि'ति व्याख्यातत्वात् । हे **आयाते** आ= समन्तात् यातिः गतिर्यस्य सः तस्य संबोधनं अतिविस्तृतरूपेत्यर्थः । अत एव **सुदुरासद** अत्यन्तमप्रधृष्य हे अ वासुदेव तथा **वादसादद** वार्तीति वाः वायुस्तमत्तीति वादः वायुभक्षकः सर्पः मन्दरनेत्ररूपो यः वासुकिः सर्पस्तस्य सादः संघर्षणादिनिमित्तकः क्लेशस्तं द्याति नाशयतीत्यर्थः । अथवा हे **महा-वाहो** महान्तः मन्दरगिरिपरिवर्तनक्षमाः बाहवो यस्येत्यर्थः । अनेन समुद्र-मन्थनकर्तृस्वरूपमपि स्तुतं भवति । ' यदा सुधा न जायेत निर्ममन्थाजितः स्वयमि ' ( भा० ८ स्कं० ) त्युक्तत्वात् । बाहूंश्च मन्दरगिरेः परिवर्तनेन निर्णिक्तबहुवलयानधिलोकपालान् । संचिन्तयेत् ( भा० ३ स्कं० ) त्युक्तेश्च । अत एव हे **अमायाते न** मीयत इत्यमा अप्रमेया अयातिर्विस्तृतिर्यस्येति तथा । **सुदुरासद** सूयते यज्ञे तु असौ सुत् सोमः तस्मात् उ उत्कृष्टः रस एव रासः स्वादुता यस्येति सुदुरासममृतं ददाति सुदुरासदः तस्य संबुद्धिः । अनेन अमृताहर्ता धन्वन्तरिरपि भगवान् स्तुतो भवति । यद्वा **ते माया** असुरमोहिनी नारायणी मूर्तिः **सुदुरासदा** सुतरां दुर्ज्ञेया देवानां सोमाधिकरसामृतदात्री । दैत्यानां च सु=शोभनैः सज्जनैः दूरस्यते अपेयत्वात् सुदुरासं मद्यं ददाती-त्येवंरूपेति नारायणीचरितमपि वर्णितं भवति ॥ श्रीः ॥

अथ वराहावतारमभिष्टवीति । **कोलोके** इत्यत्र **कोल । उके** इति पदच्छेदः । हे **उके कोल** उदुत्कृष्टं कं उदकं यस्मिन्नसावुकः प्रलयार्णवः कं शिरो जलमाख्यातमित्यभिधानात् । तत्र वराहरूपेणावतीर्ण इत्यर्थः । हे **वादसादद** वदन्ति स्वगुणानिति वादाः तान् सादयन्तीति वादसादाः दैत्याः तान् द्यति खण्डयतीति तत्संबुद्धिः । हे **रामराममहावाहोमायाते** । रः अग्निस्तद्वत् अमलाः रामलाः अग्निकल्पाः ते च ते अममा निर्ममाश्च रामलाममाः ये मुनयस्तेषां ये **हावाः** आहावाः देवताह्वानि आ सम्यक् **होमा**श्च ते रामराममहावाहोमास्तेषां आयातिर्विस्तृतिर्यस्मात्तस्य संबुद्धिः । यज्ञवराहरूपेण सर्वयज्ञानां यज्ञाङ्गानां च उत्पादितत्वात् । तदुक्तं यज्ञाङ्गो यो वराहो वै भूत्वा मामुद्दधार हे' ति । तथा 'रोमान्तर्जलधिः क्षोभिताशेषसागरः । महावराहो यज्ञघ्नध्वंसको याज्ञिकाश्रयः इति ॥ अथवा **रामराममहावा**हेत्यन्तमेव पदम् । **रामलाः आमाः** पूर्णज्ञानाः ये मुनयस्तेषां **महाः** यज्ञाद्युत्सवास्तेषु **आवाहः** ( आवाहनं ) यद्वा वर्णव्यत्ययेन आहावः ) आह्वानं यस्येति । ततः हे **ऊमायाते** 'भूतानि वै विश्व ऊमास्त एनमनुमदन्ती' ति श्रुतेः सर्वभूतानि ऊमास्तान्यायान्ति यस्याः सा **ऊमाया** भूतधात्री तामातनोति विस्तारयतीति **ऊमायातिः** । तनोतेर्डिः । तस्य संबुद्धिः । हिरण्याक्षेण कटवद्वेष्टितां महीं तं हत्वा पुनर्यथापूर्वं विस्तारयामासेत्यर्थः । अत एव **सुदुरासद** दैत्यैरप्रधृष्य । यद्वा **वादस आददको लोके** इति पदच्छेदः । लीयते जगदस्मिन्निति लः । लश्चासावुकश्चेति लोकः प्रलयार्णवस्तस्मिन् **आददको** अद्यते येनेत्यादः अदनसाधनीभूतः दंष्ट्रारूपोऽर्थः । तेन पाल्यते सा आददा । देङ् पालने अस्मात् कर्मणि कः । **आददा** दंष्ट्रया पाल्यमाना दंष्ट्रोद्धृता **कुः** पृथ्वी येनासौ **आददकुः** तस्य संबुद्धिः । तथा **वादस** वापयति ज्ञापयत्यखिलार्थानिति वेदशास्त्रादिकं तद्‌घ्नन्तीति वादाः वेदोपप्लावकाः दैत्याः तान् स्यति नाशयति वादसः तस्य संबुद्धिः। षोऽन्तकर्मणि इति धातोः 'धात्वादेःषःसः' (६।१।६४) 'आदेच उपदेशे शिति' ( ६।१।४५ ) इत्यात्वे 'आतोऽनुपसर्गे कः' (३।२।३) एतादृशवराहरूप । अततीति **अत्** अतसातत्यगमने सन्ततज्ञानादिमान् वायुरहं **तव पादावेव आसजे** आश्रय इत्याचार्यः प्रार्थयते ॥ श्रीः ॥

अथ श्रीनृसिंहावतारो वर्ण्यते । हे **मायात** मीयते प्रक्षिप्यतेऽमुनेति मः स्तम्भः 'उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि । सुमिती मीयमानो वर्चो

धायज्ञवाहँसे ' ( ऋ. ३ सू. ८, मं. ३ ) इत्यत्र यज्ञस्तम्भस्य मीयमानत्वे-नोक्तत्वात् । मकारस्य शंकरनामत्वात् तेन स्थाणुशब्दलक्षणात्-तद्वाच्यस्तम्भो मः । लक्षितलक्षणाप्रयोजनं रुद्रेऽपि नृसिंहसांनिध्यज्ञापनम् । उक्तं च रुद्रसूक्ते ( ऋ. २।३३।११ अथर्व १८।१।४० तै. स. ४।५। १०।३ ) ' स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृडा (ळा) जरित्रे रुद्र स्तुवानोऽन्यं तेऽस्मान्निवपन्तु सेनाः ' इति । तस्मात् स्तम्भात् आयातः निर्गतः प्रादुर्भूतः मायातः । तस्य संबुद्धिः । ' रुद्रो नारायणो मेघरूपशंकरवाहनः ' इति तन्नामसु पाठात् । तथा **ईसुदुरासद** ' इकार उच्यते कामो लक्ष्मीरीकार उच्यते ' इत्यभिधानात् ईः महालक्ष्मीः तस्याः सुतरां दुरासदः आसादयितुमशक्यः । उक्तं च सप्तमस्कन्धे ' साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् । अदृष्टाश्रुतपूर्वत्वात्सा नोपेयाय शङ्किते'ति । एतादृश **अ** वासुदेव तथा **वादसादद** वदि अभिवादनस्तुत्योः वन्दतेऽसौ वादः अभिवादयिता स्तोता स्वयं वदति दैत्यकुमारैर्वयस्यैर्वादयति भगवन्नामादिकामिति वा वादः प्रह्लादस्तं सादयति क्लेशयतीति वादसादः हिरण्यकशिपुः तं द्यति खण्डयति दारयति वेति वादसाददः दॄ विदारण इत्यस्मात् धातोर्डः । तस्य संबुद्धिः । तत एव वादस्य प्रह्लादस्य सादं भयं क्लेशं च द्यति इति वादसाददः । वादेन नामो-च्चारणेनाऽपि नृणां भक्तानां सादं भयं नाशयतीति वा । उक्तं च ' कृतान्त-वाहनः सद्यः समस्तभयनाशनः । सर्वविघ्नान्तकः सर्वसिद्धिदः सर्वपूरकः । समस्तपातकध्वंसी सिद्धमन्त्राधिकाह्वयः ' इति नरसिंहनामसु । वादेन नामो-च्चारणेन सादयन्ति ते सादाः जगत्पीडका दैत्यास्तान् द्यति खण्डयतीत्येतादृश वा । स्वकीयवादेन गर्जनेन दैत्यत्रासदेति वा । तच्चोक्तं ' दैत्यगर्भस्रावनामा स्फुटब्रह्माण्डगर्जितः । स्मृतमात्राखिलत्राताऽद्भुतरूपो महाहरिः ' । इति लक्ष्म्यापि दुरासदत्वादेवं हे **रामराम** । रमणीयाश्च ते अमराश्च रामराः ब्रह्मा-दिदेवास्तैरमेयत्वादमः रामरामः तस्य संबुद्धिः । हे **महाबाहो** महाभुज । **लोकेकश्चतुर्मुखस्तव पादावेवासजेत्** आश्रयेदिति संबन्धः ।। श्रीः ।।

अथ वामनावतारं वर्णयति । हे **राम** । रमणीयत्वाद्रः आ ईषत् मा मानं परिमाणं यस्येत्यमः खर्वः रश्चासावमश्चेति रामः तस्य संबुद्धिः । तदुक्तं ' रुचिरपावनवामनमूर्तये ' इति । **ते माया सुदुरासदा** त्वदीयमोहनशक्तिः

केनाप्यज्ञेयेत्यर्थः । कुतः यतस्तदानीमेव **राम** रमणीया **आ** समन्तात् **मा** मानं यस्येति । अत एव **महाबाहो** त्रिविक्रमरूपेण जगद्व्याप्त । **वादसादद** वादेन वेदादिप्रवचनेन सादं बलियज्ञस्थऋत्विजां कुण्ठिततां ददातीति तस्य संबुद्धिः । उक्तं च ' निगमवाक्पटवे वटवे नमः ' इति । खक्रीडास्थानं वा **रं** त्रैलोक्यं आमीयते पादविक्षेपेणेति वा रामः ' मितजगत्रितयाये'त्युक्तत्वात् । एतादृशस्य तव पादौ कश्चतुर्मुख एव **आसजेत्** उपासीत । चतुर्मुखस्यैव विशिष्य त्रिविक्रममूर्तिगुणोपसंहारेणोपासकत्वात् । सरस्वत्यादीनां तु नित्यत्रिक्रान्त्यादावेव तथोपासकत्वस्य शास्त्रे समर्थितत्वात् अत्र **क एवेत्येव**शब्दः प्रयुक्तः । यद्वा **पादाप् एवे**ति पदच्छेदः । **को** ब्रह्मा तव **पादाप्** पादसंबन्धिन्य आपो यस्मिन् तत् । गङ्गारूपत्वात्पादोदकतीर्थं **लोके** लाति भक्त्याङ्गीकरोतीति लः स चासौ उश्चेति **लोः** शिवस्तस्य **कं** शिरः **लोकं** तस्मिन् **लोके** शिवशिरसि । **आसजेत्** सत्कारपूर्वकं आसिक्तवान् । अधीष्टार्थे लिङ् अधीष्टः सत्कारपूर्वको व्यापार इत्युक्तत्वात् । ' कं शिरो जलमाख्यातमि'ति वचनात् समासान्तविधेरनित्यत्वात् । 'रथ्याद्भिर्लभ्यते पथे'त्यादाविव पादाप् इत्यत्र ऋक्पूरब्धूःपथामानक्षे इत्यप्प्रत्ययो न कृतः । ' तथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः । सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः ' ( भाग० ) ' यस्य पादोद्भवां गङ्गां त्रैलोक्येशो महेश्वरः । दधार शिरसा भक्त्या तं नमामि हरिं परमि'त्यादेः सर्वमुपपन्नम् ॥ श्रीः ॥

अथ श्रीपरशुरामो वर्ण्यते । हे **राम** भार्गव **राममहाबाहोम** राति ददाति संपूर्णं **राज्ञः** आतिथ्यं कामधेनुद्वारा करोतीति राः राश्चासावममश्च रामसः तादृशातिथ्यकर्ता निर्ममः यो जमदग्निर्मुनिः । यद्वा रशब्दोऽग्निवाची । नामैकदेशे नामग्रहणं । भीमो भीमसेन इत्यादिवत् । तेन जमदग्निरिति लभ्यते। तं हन्ति मारयतीति राममहा आ=समन्तात् बाहा बाहवो यस्येति आबाहः राममहा चासौ आबाहश्चेति राममहाबाहः जमदग्निहन्ता सहस्रबाहुर्यः कार्तिवीर्यार्जुनः । ' ललितशूल्या बाहये ' ति प्रयोगात् आवन्तो बाहाशब्दो बाहुपर्यायः । तम् उ=अतिशयेन मीनातीति **राममहाबाहोम** तस्य संबुद्धिः । मञ् हिंसायामिति धातोः । जमदग्निहन्तृसहस्रार्जुनसंहारकेत्यर्थः । हे **अयाते**

---

ल. टि. १. ' बाहुर्बाहा तृषा तृष्णा संख्या स्यात् संधिना सह ' इति शब्दभेदप्रकाशे ।

अयं शुभमातनोतीत्ययातिस्तस्य संबुद्धिः स्वभक्तेष्टविस्तारक । **सुदुरासद** अतितरां दुर्धर्ष । हे अ=वासुदेव हे **वादसादद** वदान्ति स्वगुणानिति **वादाः** वेदादिविद्याः सादयन्ति शत्रूनिति **सादाः** शास्त्रास्त्रपूगास्तान् ददातीत्येतादृश ऋगादिवेदानां धनुर्वेदस्याध्यापकेत्यर्थः । शास्त्राशास्त्रास्त्रप्रदेति वा । **को** ब्रह्मा **लोके तव पादावेवासजेदि**ति संबन्धः । **वादसाददको** इत्येकं वा पदम् । वदन्ति वादयन्ति शिष्यान् पाठयन्ति ते **वादाः** अध्यापकाः ब्राह्मणाः त्रैवर्णिकानामध्ययनवत्वेऽपि अध्यापनस्य ब्राह्मणमात्राधिकारित्वात् । ' इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च । प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथे ' ति । वादाधीना **वादसात्** ब्राह्मणाधीना अद्यत्वाद्भोग्यत्वात् **अदा कुः** पृथिवी येनेति वादसाददकुः[1] तस्य संबुद्धिः । तदधीनत्वे साति प्रत्ययः । ब्राह्मणानामेव यथेष्टभोगार्थत्वेन पृथिवी तदधीना कृता । तेभ्यो दत्तेति यावत् । तस्य **तव लोके अत्**[2] वायुः अहं पादावेवाश्रये इति संबन्धः ।। श्रीः ।।

अथ श्रीरामावतारं वर्णयति । हे **रामराम** आदरे द्विरुक्तिः । हे **महाबाहो** महाभुजपराक्रम **ते** त्वदीया **माया** शक्तिः सामर्थ्यं मोहकशक्तिर्वा । **सुदुरासदा** सु शोभनैः मुक्तैरपि ब्रह्मादिभिः सुतरां दुरासदा दुर्ज्ञेया । अत एव हे **वादसादद** वादाः वेदवादास्तेषां सादः अवसादनं ददातीत्येतादृश । ' यतो वाचो निवर्तन्ते ' इति श्रुतेः । वेदवाक्यान्यपि त्वन्माहिमानं वक्तुं न शक्यानीत्यर्थः । अनेन वेदाभिमानिन्या लक्ष्म्या साकल्येनाज्ञेयत्वमुक्तं भवति । अतः **कः** चतुराननोऽपि **तव पादावेवासजेत्** आश्रयेदिति संबन्धः अथवा हे **राम** हे **राममहावाहोमायाते** रमणीयत्वाद्रः न विद्यते ममता यस्येत्यममः निर्ममः मुनिरित्यर्थः । रश्चासौ अममश्चेति राममः विश्वामित्रः तेन हूयते आहूयते यज्ञसंरक्षणार्थमिति राममहावः । आसमीचीनश्चासौ होमः आहोमाय[3] आयातिः आगमनं यस्येत्याहोमायातिः राममहावश्चासौ आहोमायातिश्चेति राममहावाहोमायातिः तस्य संबुद्धिः । विश्वामित्रेण यज्ञरक्षणार्थमाकारितः स्वयं तत्र गतश्चेत्यर्थः । बालः कथं यज्ञं रक्षेत्यत उक्तं हे **सुदुरासद** दुराधर्षेत्यर्थः । ननु राक्षसा

---

ल. टि. १ अदा शब्दस्य यौगिकत्वेन भाषितपुंस्कत्वात् पुंवद्भावः । २ अत् अत् सातत्यगमने क्विप् सदागतिः । ३ आहोमार्थम् ।

अपि किं एतस्य अप्रधृष्या न इत्यत उक्तं हे **वादसादद** वदन्ति मन्त्रानिति वादाः यज्ञस्थऋत्विगादयः तान् सादयन्ति ते वादसादाः राक्षसाः तान् द्यति खण्डयतीत्यर्थः । तदपि कुत इत्यत उक्तं **अ** वासुदेव 'अकारो वै सर्वा वाक्'। तत्प्रतिपाद्यानन्तनिःसीमबलज्ञानानन्दशक्त्यादिगुणपूर्णेत्यर्थः । तत्किं सर्वेऽपि गुणा वेदप्रतिपाद्या नेत्याह हे **वादसादद** वेदानामपि कुण्ठितत्वं ददातीत्यर्थः। अथवा पूर्वार्धे **दुराससदे**त्यन्तमेकमेव पदम्।रमयतीति **रामा** अभिरामा मनोहरा। रमैव रामा लक्ष्मीस्वरूपा प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः । स्त्री वा, रामाशब्दस्य स्त्रीवाचकत्वात्। रामा रमणीया रामा लक्ष्मीरूपा स्त्री वा यस्मिन्नसौ **रामरामः**। प्रथमरामाशब्दस्य यौगिकत्वेन भाषितपुंस्कत्वात्पुंवद्भावः। द्वितीयस्य स्त्रीवाचकस्य नित्यस्त्रीत्वेऽपि गो स्त्रियोः........[पा. १।२।४८] इति ह्रस्वः। **रामराम**श्चासौ महश्चेति **रामराममहः** सीतास्वयंवरोत्सवः। मह उद्धव उत्सव इत्यभिधानात्। तत्र आ समन्तात् वाह्यतेऽसौ **राममहावाहः** सीतास्वयंवरोत्सवे अनेकैः किंकरैः शकटादिना वाहित इत्यर्थः। केनाप्युद्धर्तुमशक्यत्वाद्वा अवाहः उमायाः पार्वत्याः अयः शुभं सौभाग्यं येनासौ **उमायः** गौरीसौभाग्यहेतुः शंकरः तेन आतन्यते आततं क्रियतेऽसौ **उमायातः** इसवः=इषवः दुःखेन क्लेशेन अस्यन्ते येनेति **इसुदुरासः** इष्वासः उमायातश्चासौ इसुदुरासश्चेति **उमायातेसुदुरासः** रामराममहावाहश्चासौ उमायातेसुदुरासश्चेति **रामरामहावाहोमायातेसुदुरासः**। तं द्यति खण्डयतीति तस्य संबुद्धिः। सीतास्वयंवरोत्सवे देवदैत्योरगदेवगायकादिभिरप्यचाल्यः केवलं शिवस्वबलेनैव तत्किंकरैः शकटोपरि आकृष्य आनीतः केवलं महारुद्रस्यैवाकर्षणार्हः तेनाप्यायासेनैव प्रक्षेप्यशरो यः शिवकोदण्डस्तत्खण्डनकर्तेत्यर्थः । तत्र सामर्थ्योपपादनायाह हे **अ** सर्ववेदोक्तानन्तबलादिगुणपूर्ण **वादसादद** वेदानुक्तगुणैरपि पूर्ण । तादृशसामर्थ्याभावे **तव** त्वदीये **लोके** लं लवणरूपमेव उत्कृष्टं कं जलं यस्मिन्नसौ लोकः लवणार्णवः तत्र **को** वा पुरुषः **पादौ आसजेत्**। पद्भ्यां कः समुद्रं तरेत्। यद्वा **रामराम** लक्ष्मीकान्त **महावाहो** महाभुजपराक्रम **ते** त्वदीया **माया मा** लक्ष्मीरूपभार्या **या** सा **सुदुरासदा** राक्षसैः सर्वथाऽप्यप्रधृष्या। उपपादनार्थमाह हे **राम रः** अग्निः तस्मिन् **अमला** निर्मला **आ** ईषत् **मा** लक्ष्मीः सीतासांनिध्ययुक्ता तत्प्रतिकृतिः **आमा, रामला आमा** यस्येति **रामरामः** तस्य संबुद्धिः। लोकदृष्ट्या यदीया प्रतिकृतिरपि वह्नौ शुद्धा तस्याः रक्षोभिः कथं प्रधर्षणीयता स्यादिति भावः। अत एव हे **वादसादद** अधते

भक्ष्यते यैस्तानि अदानि मुखानि दश अदानि यस्येति दशादः दशमुखः वाति सीताकृतिं गृहीत्वा पलाय्य गच्छतीति **वाः** आत्माभिमुखं युद्धायाऽऽगच्छतीति वा । वा गति गन्धनयोः । वाश्चासौ दशादश्चेति वादशादस्तं द्यति इत्यर्थः । **"रलयोर्डलयोश्चैव शसयोः षसयोस्तथा । बवयोर्णनयोश्चैव सावर्ण्यं कवयो विदुरि'ति** । तेन प्रागुक्तं इसुदुरासदेत्यप्युपपन्नम् । अथवा हे **र** रमणीय हे **अमराममहावाह** अमराः देवाः अममाः निर्ममाः मुनयः । अमराश्च अममाश्च अमराममाः तान् घ्नन्ति ते अमराममहाः राक्षसास्तान् अवाहान्ति असौ रामराममहावाहः तस्य संबुद्धिः । तदुपपादनार्थं हे **ओम्** 'ओतत्ववाची ह्योंकारो वक्त्यसौ तद्गुणोन्नतामिति व्याख्यातत्वात् गुणपूर्णेत्यर्थः । हे **आयाते** आ समन्तात् अयेन शुभेनैव आततेत्यर्थः । तेन सीताविरहप्रयुक्तशोकप्रदर्शनमसुरमोहनार्थमिति ध्वनितम् । तथा हे **असुदुरासद** असोर्मुख्यप्राणस्याप्रधृष्य । तेन हनुमदादिकपिसहायीकरणमपि लीलामात्रमिति सूचितम् । अथवा । **र** । **अमर** । **अमम** । ह । **अव** । **अह** । **ऊमाया**ते इति । **र** रमणीय **अमर** देहत्यागं विनैव परंधाम प्राप्त **अमम** निर्मम लक्ष्मणनिर्वासकेत्यर्थः । **अह** अहेय **ऊमायाते** 'भूतानि वै विश्व ऊमास्त एनमनुमदन्ती' ति श्रुतेः सर्वाणि भूतान्यूमास्तेषामयं=शुभमातनोतीत्येतादृश । सर्वेऽपि खगमृगतृणान्ता येन स्वर्गं प्रति नीता इत्यतः 'स्वर्नीतगर्दभाश्वादि श्वेऽयोध्यानैककादि'त्युक्तेः त्वं **अव** अस्मान् रक्षेत्यर्थः । हे **वादसादद** 'तृतीयेऽतिशये' वातस्य वायोः सादनं कुण्ठनं ददातीत्येतादृशः एतेन हनुमन्मुखेन सीतान्वेषणमपि दुर्जनविडम्बनमिति सूचितम् । वातस्य कुण्ठनं द्यतीति वा वायोः सर्वत्राप्रतिहतगतिप्रदेत्यर्थः । वायोर्हनूमतः भूमौ स्थापनकर्तः इत्यर्थो वा । हे **उके** उत्कृष्टोदके प्रलयार्णवे **कोल** वराहरूपेत्यर्थः येनैकार्णवे वराहरूपेण प्रलयजलावगाहनं कृतं तस्य तव लवणार्णवैकदेशं शतयोजनमात्रं तरीतुं सेतुबन्धनादिकमपि लोकविडम्बनमिति भावः । अथवा रः अग्निः अमरेषु आ सम्यक् मा श्रीर्यस्येति अमरामः इन्द्रः रश्च अमरामश्चेति रामरामौ अग्नीन्द्रौ ताभ्यां महः पुत्रोत्सवो यस्येति रामराममहः । तत्संबुद्धिः **रामराममह** । अग्नेरवतारो लवः इन्द्रस्यावतारः कुशः तावुभौ पुत्रौ यस्येत्येतादृशः । उक्तं च 'साक्षात्कुशलवह्न्ये(शमे)न्द्राग्नितातोऽपराजित' इति । अपराजित इत्यस्यार्थः सुदुरासदेत्यनेनोक्तः । ईदृशस्य तव ब्रह्मा पादावेवासजेदिति संबन्धः ॥ श्रीः ॥

अथ प्राक् सविस्तारवर्णितोऽपि कृष्णावतारः दशावतारप्रसंगेनाऽपि संक्षेपतो वर्णयति ( वर्ण्यते ? ) । हे **रामराम** रामेण बलरामेण सह रामा क्रीडा यस्येत्येतादृश । अमरेषु देवेषु आ सम्यक् मा श्रीर्यस्येति अमरामः देवेन्द्रावताररूपोऽर्जुनः रः रमणीयः अमरामः येनासौ **रामरामः** । ' इन्द्रार्थार्जुननिर्भञ्जजयदः पाण्डवैकभृत् इत्युक्तेः । यद्वा रामाणां स्त्रीणां समूहो रामम् । रामं रमयतीति **रामराम**स्तत्संबुद्धिः । षोडशस्त्रीसहस्राणि गोपाङ्गनाश्च रमयतीत्यर्थः । ननु भगवतः साक्षादङ्गसंगाय लक्ष्मीं विना न योग्येत्यतः कथमेतादित्यतोऽप्याह **रामरामेति** । रामे रामासमूहे रमैव रामा यस्येत्येतादृश । ताः सर्वा अपि लक्ष्म्यावेशयुक्ता इत्यर्थः । अथवा रमाया अयं रामः रामश्चासौ रामः रमणीयश्चासौ महश्चेति **रामराममहः** रुक्मिण्याः रमणीयो यः स्वयंवरोत्सवः तत्र **आवाहः** वर्णव्यत्ययेन आहवः संग्रामो यस्येत्यर्थः । राक्षसविवाहेन रुक्मिणीपरिणेतरित्यर्थः हे **ऊमायाते** ' भूतानि वै विश्व ऊमाः आ'तानिसन्त्यस्यामिति ऊमा अर्श आद्यच् भूतधात्री तस्या अर्थे आयातिः=आगमनमवतारो यस्येत्यर्थः । तस्या **अयं**=कल्याणं भारावतरणरूपं आतनोतीति वा। हे **असुदुरासद** दुःखेनास्यते युद्धे निरस्यत इति दुरासः दुर्योधनः जरासंधो वा तं द्यति खण्डयतीति दुरासदः असुना प्राणावतारेण भीमसेनेन दुरासद भीमहस्तेन दुर्योधनादिसकलकौरवसंहारकेत्यर्थः । **'त्यक्तभग्नजरासंधो भीमसेन-यशःप्रद '** इत्युक्तत्वात् । सर्वप्राणिनां दुरासस्य **कंसस्य** खण्डनकृदिति वा । **सु** शोभनान् दुनोतीति **सुदुः** सज्जनखेदकरः शङ्खचूडदैत्यस्तं **रासे** रासक्रीडोत्सवे **द्यति** संहरतीति वा । हे **अ** वासुदेव वसुदेवसुतेत्यर्थः । हे **वादसादद** **'तृतीयोऽतिशये'** वादस्य=वातस्य तृणावर्तदैत्यस्य सादनकर । यद्वा **लोके** गोगोपादीनां लयकरे उत्कृष्टोदके यामुनह्रदे वा तं सादयति असौ, वादसादः वायुभक्षः कालियनागस्तं द्यति खण्डयति पीडयति विस्तारयतीत्येतादृश । **को** ब्रह्मा **तव पादावेवासजेदि**ति संबन्धः ॥ श्रीः ॥

अथ बुद्धावतारं वर्णयति । हे **र** रमणीय **अमर** सर्वदेवैः सर्वायुधेषु स्वोपरि प्रतिक्षिप्तेऽपि विकारशून्य **अमम** निर्मम । **वादस्य सादनं** कुण्ठनं **ददाती**त्येतादृश वेदाप्रामाण्यप्रतिपादकेत्यर्थः । अत एव **हावाह** हावाः हवनानि यागास्तान् आहन्ति बध्नातीति हावाह वेदस्याप्रमाणत्वात् हिंसारूपाणि यागादीनि न कर्तव्यानीति प्रतिपादकेत्यर्थः । तत्किं वस्तुतस्तत्र तात्पर्यवान् किं नेत्याह । **वादेन** आपातोक्त्या **सादद**: त्रासकरः आपाततः तथा प्रति-

पादको न तु तत्र तात्पर्यवानित्यर्थः। वेदवादरताः पार्थेत्यत्र 'वादो-विषयकत्वं च मुखतो वचनं स्मृतामि' ति व्याख्यातत्वात् । आपाततोऽपि किमिति तथा वक्तीत्यत आह **ते माया** मोहनशक्तिः **सुदुरासदा** । तया मायया तथाविधवादानां वादिनां अवसादनरूपान्धतमसप्रापकेत्यर्थः । तर्हि भगवतः कोऽभिप्रायः कश्च तस्य ज्ञातेत्यत आह **कः लोके पादावे अव** इति पदानि । हे **अव** अवत्यवगच्छाति सर्वमित्यवः अव रक्षणगत्यादिष्विति धातुव्याख्यातत्वात् । सर्वज्ञ बुद्धरूप तव **पादावे** कः लोके आसजेत् इत्यन्वयः **कश्चतुर्मुखः लोके** लोचनं लोकस्तस्मिन् लोके आलोचने क्रियमाणे सति तव पादावे पदानां समूहः पादं वाक्यं पद्यतेऽर्थो येनेति वा पदं त्वत्कृतशास्त्रम् । पदस्यार्थः **पादः** शास्त्रार्थः तस्यावनं **अवः** अवगति-रित्यर्थः अवतेः रक्षणाद्यष्टादशार्थेषु अवगमस्य परिगणितत्वात् । आ सम्यक् वानं **आवः** इति वा । गत्यर्थस्य वातेर्भावे कः । तस्मिन् **पादावे** त्वदीय-शास्त्रार्थतत्त्वज्ञाने आसक्तो भवेत् । अथवा **अत्** इति भिन्नं वा पदं अततीत्यत् संततज्ञानादिमान् कः वायुस्वरूपः 'कः प्रजापतिरुद्दिष्टो को वायुरिति शब्दित' इत्यभिधानात् वायुत्वादेव कः भविष्यश्चतुर्मुखः 'पवमानः प्रजापतिरि' ति (पवमानसूक्ते) श्रुतेः। एतादृशोऽहं तव **पादावे** त्वदभिप्रेतशास्त्रतत्त्वस्य सम्यक् ज्ञाने **आसजे** आसक्तोऽस्मि आलोचने सर्वविषयकज्ञानवान् ईशेऽपि सर्वजीवे-भ्योऽधिकविषयकज्ञानवान् ते पादौ कश्चतुर्मुख एवासजेत् आश्रयेदिति वा । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति त्वत्तो वेदानामध्येता ब्रह्मा तु तस्य **तव पादौ आसजेत्** तेन त्वद्वाक्यानां तात्पर्य-विषयोऽर्थस्तेनैव ज्ञायते अन्ये त्वापातदर्शिनस्तमसि पतन्तीति भावः ॥ श्रीः ॥

अथ कल्की वर्ण्यते । हे **रामराम** लक्ष्मीकान्त । **महाबाहोमायाते** महांश्चासौ वाहश्चेति महावाहः महाश्वः तेन ऊमेषु सर्वभूतेषु आयातिः आगमनं यस्येति तस्य संबुद्धिः । कल्की भगवानश्वारूढोऽवततारेत्युक्तत्वात् । हे **सुदुरासद** सुतरां अप्रधृष्य । अ वासुदेव । यद्वा **रामराममहाबाहो** इत्येकं पदम् । लोकक्षयकर्तृत्वात् । रिण्वन्ति इति ( रि हिंसायां पंचमगर्णायः ) राः म्लेच्छादयस्तेषां आ समन्तात् मरः मरणं येनासौ, आ संपूर्ण मा मानं यस्येत्यामः अतिदीर्घः । रामरश्चासौ आमश्चेति **रामरामः** म्लेच्छक्षयकृत् सुदीर्घः आयुधविशेषः खड्गः **महाबाहौ** यस्येति रामराममहाबाहुः तस्य संबुद्धिः । म्लेच्छक्षयदमहाखड्गयुक्तमहाभुजेत्यर्थः । तेन **वादसादद** ।

अभिवादनस्तुतिकर्तॄणां सज्जनानां भयखण्डक । कः ब्रह्मा **तव पादावेवासजेदि**ति संबन्धः । इति दशावताराः ॥ श्रीः ॥

हयग्रीवो वा अनेन वर्ण्यते । हे **रामराम** लक्ष्मीकान्त, **महावाहोमा** महांश्चासौ वाहश्चेति महावाहः जात्यश्वः तस्य उत्कृष्टा मा शोभा इव शोभा यस्येत्यर्थः । हे **आयाते** । 'आकारस्तु पितामह' इत्युक्तेः आः पितामहतस्य अयः शुभं तदर्थमततीत्यायातः तृतीयातिशयेन स एवातिशयित्वादायातिस्तस्य संबुद्धिः । तेन च **वादसादद** वदन्ति स्वगुणानिति वादाः सर्ववेदास्तान्सादयन्त्यपहरन्ति ते वादसादाः दैत्याः हयग्रीवमधुकैटभाद्यास्तान् द्यति खण्डयति । तस्य **तव को** ब्रह्मा **पादावासजेदेव** । यतस्तदर्थं त्वयैतादशावतारं गृहीत्वैतावान् प्रयत्नः कृतः । तदुक्तं 'आद्यः कविर्हयग्रीवः सर्ववागीश्वरेश्वरः । सर्ववेदमयो ब्रह्मगुरुर्वागीश्वरीपतिः ॥ ब्रह्मार्थवेदाहरणः सर्वविज्ञानजन्मभूरि'ति । रामरामेत्यनेन लक्ष्मीकान्तःवोक्त्या वागीश्वरीपतिरित्यर्थः उक्तः । वादसाददेत्यनेन आयाते इत्यनेन च ब्रह्मार्थवेदाहरणः इत्युक्तार्थः । को लोक इत्यादिना ब्रह्मगुरुरित्यादिकमुक्तार्थमवगन्तव्यमित्यखिलमतिमङ्गळम् ॥ श्रीः ॥

अथ श्रीवेदव्यासावतारो वर्ण्यते । हे **अ** व्यास 'अ आ अं अः पुराणर्षिर्व्यासः शाखासहस्रकृत्' इति तन्नामसु पाठात् । **मायाते** मा ज्ञानं तदर्थमायातिः आगमनं यस्येत्यर्थः । ज्ञानावतारेत्यर्थः । अत एव **सुदुरासद** सुतरां दुरासं निरसितुमशक्यमज्ञानादिकं द्यति नाशयतीत्येतादृश । अत एव हे **रामराम राः** रमणीयाः तत्त्वज्ञानयोग्याः **अमराः** ब्रह्मादिदेवाः **रामरास्तेषु आ** संपूर्णा मा ज्ञानं यस्मात्सः तस्य संबुद्धिः । अत एव ज्ञानसंस्थापनार्थं **महान्** अत्युच्छ्रितः **वाहु**र्भुजो यस्येतादृश । यद्वा रामरामं लक्ष्मीकान्तं महयाति पूज्यत्वेन प्रदर्शयत्यसौ **रामराममहः** एवंविधः **आ** ततो **वाहुः** भुजो यस्येत्येकमेव पदम् । अर्थस्तूक्त एव । अत एव **वादसादद** वादानां वेदानां सादं उत्सादं द्यतीत्येतादृश । 'उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयमि'त्युक्तम् । **को** ब्रह्मा तस्य **तव पादौ** । **लोके** लोचनं लोकः तन्निमित्तं **पादावासजेत्** सत्कारपूर्वकं सेवते । अथवा **अत्** वायुः **कः** भविष्यब्रह्मा अहं **तव पादावासजे** आश्रितोऽस्मीति व्यासशिष्यस्यानन्दतीर्थस्य तत्पादोपसत्तिकर्तुरुक्तिः । अथवा हे **अव** ज्ञानरूप **तव पादावे** पद्यतेऽर्थोऽनेनेति पदं स्वनिर्मितं शास्त्रम् । भारतब्रह्मसूत्रपुराणादिकं तस्यायम् अर्थः पादस्तमव-

गच्छतीति पादावः त्वत्कृतशास्त्रार्थज्ञः तस्मिन् । **लोके** लात्यङ्गीकरोतीति **लः उः** शिवः स एव **उकस्तदवतारः** शुकस्तस्मिन् । वायुः **आसजेत्** आविष्टोऽस्ति । **अत्** ज्ञानी **को** वायुः अहम् **आसजं** आविष्टोऽस्मीत्यर्थः । मदाधिक्यप्रयुक्तमेव शुकस्य ज्ञानाधिक्यमिति भावः ।

अथवा प्रातिलोम्येन पठितेनानेन श्लोकेन मूलरूपं भगवन्तं स्तुवंस्त-स्यावताररूपभेदं च साधयन् शाक्तसौरगाणपतस्कान्दशैवमतानि निराकुर्वस्त-मेव प्रार्थयते ।

## मूलम्

**[1]जेत्सवातव वेदापाकेलोकोदद सादवा ।**
**दासरादुसुतेयामाहोवाहा मम राम रा ( राः ) ॥ ७२ ॥**
**( पद० ) जेत् । सवातव । वेदाप । आकेलोकोदद ।**
**सादव । अ । दासर । आत् । उसुतेयाम । आ ( अ ) ह ।**
**उवाह । आ । मम । राम । रा ( राः ) ॥ ७२ ॥**

## टीका

जेतः सवात जगतो वर्तका (वर्तिता)ऽऽगमगम्यभाः ॥ २८१ ॥
आके दूरे सर्पापे च लोकानां ज्ञानकर्मद ।
उदं कर्म तथा ज्ञानमुदेत्यवनमत्येतेन य ( स ) ज्जनः ॥ २८२ ॥
ज्ञानेन तेन भक्तानां सादस्य च निवारक ।
सर्वदोषविरुद्धान्यसर्वस्माज्जगतः सदा ॥ २८३ ॥
अभावाशेषदोषाणा (अभावदोषाशेषाणा)मित्यनन्तगुणाख्य भाः ।
दासो दस्युस्तथा भृत्यो रोऽग्निः क्रीडां चरन् यतः ॥ २८४ ॥
दस्युदाहक भृत्यानां नित्यमेव रतिप्रद ।
**आद्** इत्यत्तर् ( आदित्यात्तर् ) अथान्तःस्थ
तथाऽऽदेय महात्मभिः ॥ २८५ ॥
**उसुतेयाम** रुद्रोऽसावुकारार्थस्तु तत्सुतौ ।
कुमारविघ्नपार्वी(र्वौ) च श्रीरासां विनियामक ॥ २८६ ॥

---

[1] अयं श्लोकः तुळुपुस्तके मूले न निवेशितः ।

य आकाशमनस्तेजो यमयत्यन्तरः प्रभुः ।
इति श्रुतेर्मनःस्कन्दः श्रीस्तेजःखं विनायकः ॥ २८७ ॥
( अ ) आहार्हीन तथा ( या ) हेय सर्वथैव शुभेच्छुभिः ।
**उवाह** नृहरे मेषरूपशंकरवाहन ॥ २८८ ॥
समन्तान्मम राम त्वं सुवित्तं नैव चेतरत् ।
शाक्तेयशैवकौमारसौरवैनायकान्यपि ॥ २८९ ॥
**निरस्तान्युसुतेयामाहोवाहे**ति ह्युदाहृतम् ।
सौरं च नयसाम्येन य आदित्यमिति श्रुतेः ॥ २९० ॥ ७२ ॥

( टि० ) हे **राम,** त्वं **आ** समन्तात् **मम राः** सुवित्तं सावधारणत्वाभिप्रायमा ( श्रित्य? ) तत्फलमाह । **नैव चेतरत्** इतरत् हिरण्यादिरूपं वित्तम् । मम नैवेत्यर्थः । कथंभूत, राम **जेत्** जि जये जयतीति जित् तत्संबुद्धिः जेत् । छान्दसो गुणः । पुनः कथंभूत **सवातव** वातेन वायुना सहितं सवातं जगत् तद्वर्तयति प्रवर्तयतीति सवातवः तस्य संबुद्धिः **हे** सवातव सवातजगतो वर्तक हे **वेदाप** वेदैराप्यतेऽसौ वेदापः तस्य संबुद्धिः वेदाप आगमगम्यभाः हे **आकेलोकोदद** आके दूरे समीपे च लोकानां उदं ज्ञानं तथा उदं कर्म उभे ददातीति लोकोददस्तत्संबुद्धि**र्लोकोदद** । लोकानां ज्ञानद कर्मद । कथमुदं कर्म तथा ज्ञानमित्यत आह **उदेत्यवनमज्जन** इति । अवनमज्जनः अधः पतन्जनः उदेति ज्ञानेन कर्मणा च । तथा च उदेति उत्कृष्टो भवत्यनेनेति उदमिति व्युत्पत्तिः । हे **सादव** तेन ज्ञानेन सत्कर्मणा च भक्तानां सादं=भयं नाशं वा वारयतीति सादवस्तत्संबुद्धिः । हे अ सर्वदोषविरुद्ध तथा सर्वस्माज्जगतः सदा अन्य । तथाऽशेषदोषाणामभाव इत्यनेन प्रकारेण ' अकारो वै सर्वा वागि'ति श्रुतेः । तथा 'अकारः सर्ववागात्मा परब्रह्माभिधायक' इति स्मृतेश्च सर्ववागर्थभूतानन्तगुण आढ्य=अकारवाच्य । भा इति संबुद्धिः । भगवन्निति पूज्येत्यर्थः । हे **दासर, दासो दस्युस्तथा भृत्यः रोऽग्निः क्रीडां चरन् यतः** इति । दासस्य दस्योर्वेत्य (शत्रु?) जनस्य **र** दाहक तथा **दासस्य** स्वभृत्यस्य ब्रह्मादेः **र** रमयतीति रः तत्संबुद्धिः । भृत्यानां नित्यमेव रतिप्रद । हे **आत्** अत्तीति आत् तत्संबुद्धिः । हे अत्तरित्यर्थः । अथवा **आ** समन्तात् अन्तरित्यर्थः । ततोऽत्तीति तत् अन्तःस्थेत्यर्थः । तथा च आदीयते उपादीयत इति **आत्**

महात्मभिरादेयेत्यर्थः । हे **उसुतेयाम** ओः रुद्रस्य सुतौ कुमारविघ्नपौ उसुतौ च ई च श्रीश्च ताः उसुतयः उसुतयं याम यच्छतीति यामस्तत्संबुद्धिः कुमारविघ्नपश्रीणां नियामकेत्यर्थः । यो मनसि तिष्ठन्निति श्रुतेः । मनोभिमानिस्कन्दनियामक । यस्तेजसि तिष्ठन्निति(बृ०) श्रुतेः। तेजः परस्यां देवतायामिति तेजःशब्दवाच्यश्रीनियामकस्तस्मात्प्रमितोऽयमिति भावः । हे **आह** ओ हाक् त्यागे इति धातोः आ समन्तात् न हीयते न सज्जते इति आहः तत्संबुद्धिः । सर्वथैव शुभेच्छुभिरहीनतया हानत्वाभावेन अहेय स्वीकार्य । उपजीव्येत्यर्थः । हे **उवाह** उः रुद्रो वाहो वाहनं यस्य स उवाहः तत्संबुद्धिः । मेषरूप शंकरवाहन 'नारायणः मेषरूपरुद्रवाहन' इति प्रमाणम् । ममरामराः इति भवितव्ये रेति विसर्गाभावो रामराममहाबाहो इति श्लोकस्य वर्णक्रमविपर्यासेनास्य श्लोकस्य कृतत्वात् द्रष्टव्यः। एवं स्तवनस्य फलमाह शाक्तेयेत्यादिना । श्रीनियामकत्वोक्त्या शाक्तं, उवाहेति रुद्रनियामकत्वोक्त्या पाशुपतं, रुद्रसुतस्कन्दगणपतिनियामकत्वोक्त्या स्कान्दं गाणपत्यं च, य आदित्यमन्तरो यमयतीति श्रुतिबलात् नियम्यपङ्क्तिनिविष्टसूर्यनियामकत्वोक्तेरुपलक्षणया, सौरं चेत्यनेन प्रकारेण दुर्मतानि निरस्तानि भवन्तीत्यर्थः । नयसाम्येनेति न्यायसाम्येनेत्यर्थः । यदि च 'आकाशे तिष्ठन्' इत्यादिश्रुतिबलादाकाशादिनियामकत्वं तर्हि 'य आदित्ये तिष्ठन्' इति (बृ०) श्रुतिबलादादित्यनियामकत्वं भगवतोऽङ्गीकर्तव्यम् । अन्यथा तच्छ्रुतिबलादपि सोऽर्थो न सिद्ध्येत् श्रुतित्वेन साम्यादित्यभिप्रायः ॥ ७२ ॥

( ति० ) उबाह=**उवाह**, वबयो रभेदात् उवाह नरसिंहरूपी हरिः कदाचिन्मेषरूपशंकरारूढो जात इति हि पुराणे प्रसिद्धिः। नरसिंहनामसूक्तः।

( भ० ) अत्र रामेति संबोधनेन **भारततात्पर्यनिर्णयोक्ता** रामकथापि संगृहीतेति ज्ञातव्यम् । **तत्संक्षेपत्वादेतद्ग्रन्थस्य** । **व** वारक वृत्तो डः। **सादवे**त्यनन्तरं **अ** इति पदम् । अकारस्य च त्रयोऽर्थाः । विरुद्धत्वमन्यत्वमभावश्चेति । ततश्च सर्वदोषविरुद्धगुणपूर्ण, सर्वस्माज्जगतोऽन्य, सर्वदोषाभाववन्नित्यर्थः । अथवा अकारो भावाची । तथाचानन्तगुणाख्यभा इत्यर्थः । एवं वेदापेत्यत्राऽपि वेदापा इति । दीर्घान्तं पदं विच्छिद्य वेदापो वेदगम्यः अः भाः यस्यासौ तथोक्तस्तस्य संबोधनं **वेदापे**त्यपि व्याख्येयम् । अत एव पूर्वटीकायां आगमगम्यभाः

अनन्तगुणाद्यभा इति व्याख्यातम् । **उसुतेयाम्** य आकाशमन्तरोयमयति । यो मनोऽन्तरोयमयति । यस्तेजोन्तरो यमयती ति बृ० श्रुतेः अथवा **आत्** इत्यत्र **आ अत्** इति पदं विभज्य नामैकदेशेन नामग्रहणमिति न्यायानुसारेण **आ** आदित्यस्य **अत्** अत्तरिति व्याख्याय सौरमतनिरासोप्यत्र साक्षादेव कृतो बोध्यः **अह्** अहीन ॥ ७२ ॥

( ना० ) जयतीति **जेत्** हे जेतः । वातेन मुख्यप्राणेन सहितं सवातं विश्वं वर्तयतीति **सवातवः** तस्य संबुद्धिः । अथवा जायते उत्पद्यते तत् **जं** एति गच्छति चेष्टते अवगच्छतीति वा **इत्** जं च तत् इत् च **जेत्** । जेत् च तत् सवातं च जेत्सवातं तत् वर्तयति वातीति वा जेत्सवातवः प्राणादीनामुत्पत्तिप्रतीतिप्रवृत्त्यादेर्नियामक इत्यर्थः । एतेन ' जन्माद्यस्य ' इति सूत्रार्थः उक्तः । अनुमानतोऽन्ये नकल्पनीया इत्यर्थप्रतिपादकस्य ' शास्त्रयोनित्वादि'ति सूत्रस्यार्थमाह । **वेदाप** वेदेनाप्यते तस्य संबुद्धिः श्रुत्येकसमधिगम्य । ननु श्रुतावपि ' रुद्रोवाव लोकाधार ' इत्यादिनाऽन्येषां कर्तृत्वं प्रतीयते इत्यतः ' तत्तु समन्वयादि 'त्युक्तम् । तस्यार्थमाह हे **आके आ** समन्तात् **कीयते** शब्दयतेऽसा**वाकः** । कें शब्दे इति धातोः आतोऽनुपसर्गे कः आकार एवायं निपातः न त्वाङुपसर्गः । तृतीयोऽतिशये स एव **आकिः** । तस्य संबुद्धिः । रुद्रादिशब्दैरप्यसावेवोच्यते । ' नामानि सर्वाणि यमाविशन्ति त वै विष्णुं परममुदाहरन्ति । ' ' यो देवानां नामधा एक एवे'त्यादेः । अतिशयार्थेनेकारेण सौत्रसंशब्दार्यः सम्यक्त्वरूपः उक्तः तेन मुख्यवृत्त्या शक्त्यैव सर्वशब्दवाच्यः इत्युक्तं भवति । ननु यतो वाचो निवर्तन्त इति श्रुतेः कथमेतादित्यतः सूत्रं प्रवृत्तं ' ईक्षतेर्नाशब्दमि'ति । तस्याऽर्थमाह **लोकोददे**ति लोचनं लोकः स्वविषयकं ज्ञानं तेन लोकेन उददः लोकोददः तस्य संबुद्धिः । उत् निर्दोषश्चासौ अश्चेत्युदः ' तस्योदितिनाम ' इत्यादि छन्दोगश्रुतेः अपहतपाप्मत्वादुच्छब्दवाच्यपरमात्मज्ञानिनोऽपहतपाप्मत्वरूपमोक्षप्राप्तिरुच्यते । एकान्तिनां तु तथाविधभगवत्प्राप्तिरेव पुरुषार्थ इति परमैकान्तशिरोमणिराचार्यः स्वप्रार्थनायां तथैव संबोधयति । उच्छब्दवाच्यं मोक्षदातृवासुदेवाख्यं अकारवाच्यं स्वस्वरूपं भक्तेभ्यः प्रददातीति **उददः** । स्वात्मप्रदानमेव पवनस्य करोति । इदमुक्तं भवति । भगवदवलोकनरूपापरोक्षेण तावन्मोक्षः श्रूयते । तच्चापरोक्षं श्रोतव्यो मन्तव्य इत्यादेः श्रवणादिसाध्यम् ।.... ईक्षणीयत्वतो विष्णुर्वाच्य एवनचान्यथा ' इति आह हि । न केवलमिष्टप्रदाता

किं त्वनिष्टनिवारकोऽपि इत्याशयेनाह हे **सादवा** सादं अवसादं भयं च वारयतीति 'अथ सोऽभयं गतो भवती' ति श्रुतेः। मध्यमभक्तनामिष्टं मोक्षभोगादिकमपि प्रयच्छतीत्याह हे **दासर** दासान् स्वभक्तान् रमयतीति। दासान् स्वभक्तानित्युक्तस्य व्यावर्त्यमाह **दासर** दास्यन्ति उपाक्षिप(ण्व)न्ति ते दासाः दस्यवः ब्रह्मस्तेनास्तेषां र इव अग्निरिव दाहक इत्यर्थः। **आदुसुते-याम**। आः पितामहः। आदित्यश्च द्वयोरप्याकारवाच्यत्वात्। तौ अत्ति संहरतीति आत्....तान्यमयति असौ आदुसुतेयामः। इति **आह** हि प्रसिद्धम्। श्रुतिराहेति वा..................॥ ७२ ॥

## मूलम्

**देवानां पतयो नित्यं नो मतं यस्य जानते ( मैतं यस्य न जानते )। तस्मै देव नमस्येऽहं भवतेऽसुरमारये ॥ ७३ ॥**

**( पद० ) देवानां। पतयः। नित्यं। नो मतं। यस्य। जानते। तस्मै। देव। नमस्ये। अहं। भवते। असुरमारये ॥ ७३ ॥**

## टीका

देवानां पतयो नित्यं नो मतं यस्य जानते।
कुतोऽसुरा विजानन्ति त्रैपुराः पुनरागताः ॥ २९१ ॥
तस्मै विशुद्धिशुद्धाय बुद्धायाऽसुरघातिने।
दैत्यज्ञानारये वाऽथ तेषां शोभारयेऽथवा ॥ २९२ ॥
यद्वा देवेषु विज्ञानदानाय श्रीकराय वा।
रा दान इति धातोश्च तृतीयोऽतिशयेऽतथा ॥ २९३ ॥ **७३** ॥

(टि०) हे **देव यस्य** तव **मतं देवानां** पतयो ब्रह्मादयो **न जानते**। **तस्मै भवते** भं प्रकाशो नैर्मल्यमिति यावत्। तद्वते विशुद्धिशुद्धायेत्यर्थः।

---

( ति० ) ननु रा दाने इति धातोः र इति पदेन भाव्यं तथा च तत्र इकारः कुत्रत्यः इति चेत् तृतीयोऽतिशय इति सूत्रबलात् अकारे इकारो बोध्यः। तथा च र इत्यस्य रिः इति प्रथमा। तस्य चतुर्थी रय इति। अत्र अतिशयः स्वयं ऊहनीयः। एवमन्यत्रापीति। २. ति० याद० पाठः।

अथवा भं ज्ञानं तद्वते। बुद्धाय सर्वज्ञायेत्यर्थः एवंभूताय तुभ्यं **नित्यमहं नमस्ये** इत्यन्वयः। अथवा **नित्यं न जानते** कदाचिदेव तदनुग्रहेण जानते। एवं सति त्रैपुराः पुनरागताः पुनरुत्पन्ना जिनादयोऽसुरा न जानन्तीति किमु वक्तव्यम्। अतएव असदादिशब्दार्थानवबोधेन मोहिता आपाततः प्रतीतार्थ एवाभिनिविष्टाः तादृशदुर्मतं प्रपञ्चयांचक्रुः। ब्रह्मादीनां तु भगवानेव असदादिशब्दार्थकथनेन शीघ्रं मोक्षदायिनीं स्वविद्यां प्रशान्तनाम्नीमुपदिदेश। तदुक्तं भगवत्पादैः (भा. ता. नि. ३२. १६१) 'यामाश्रितामचिरेण मुक्तिरि'ति। कथंभूताय भवते बुद्धाय, **असुरमारये** असुरान्मारयति असुरमारी तस्मै असुरघातिने। अथवा असुराणां मा सम्यग्ज्ञानं तस्यारये दैत्यज्ञानारये। अथवा **मा** शोभा तदरये। यद्वा सुरमारये सुरेषु मा सम्यग्ज्ञानं श्रियं च राति ददातीति सुरमारः तृतीयोऽतिशय इत्यतः सुरमार एव सुरमारिः तस्मै। एवं बुद्धावतारवर्णनम्॥ ७३॥

(भ०) **देवानां पतयोऽपि यस्य मतं** बौद्धशास्त्रोक्तमभिप्रेतं सिद्धान्तं **नित्यं नो जानते**। तदुपदेशमन्तरा ज्ञातुं न समर्था भवन्ति। किंतु तदुपदेशेनैव जानते। पुनर्भूमौ जातास्त्रिपुरासुरास्तु न जानत इति किमु वक्तव्यमिति भावः।........यद्वा **सुरमारय** इत्येव पदच्छेदः। सुराणां मां ज्ञानं श्रियं च राति ददातीति सुरमारः। स एव सुरमारिः। तृतीयोऽतिशय इति सूत्रात्॥ ७३॥

(ना०)........तस्मै कस्मै **यस्य नित्यं मतं** नियतमभिप्रेतमर्थं देवानां पतयोपि रुद्रादयो न जानते नाऽवगच्छन्ति। कुतो दैत्याः ये प्राङ्निहताः ते पुनर्भूमाववतीर्य यागादिवैदिककर्मानुष्ठानेन मोक्षाद्यर्थं प्रवृत्ताः यन्मोहनार्थं भवानवततारेति भावः॥ ७३॥

**मूलम्**

**समस्तदेवजन कवासुदेवपरामृत।**
**वासुदेव परामृत ज्ञानमूर्ते नमोऽस्तु ते॥ ७४॥**

**(पद०) समस्तदेवजन। कवासुदेवपरामृत। वासुदेव। परामृत। (पर। अमृऋत।) ज्ञानमूर्ते। नमः। अस्तु। ते॥७४॥**

ल. टि. १ अनेन बुद्धावतारस्यापि मुमुक्षुज्ञेयत्वं सूचितं भवति।

२ अत्र श्लोके गर्भयमकं मध्यमपादस्य यमितत्वात्। टीकायां—कलेः अन्तं=अन्ते जन्म आसाद्य स्थिताः ते सर्वशः अन्ते सम्यगस्ताः इत्यर्थः।

## टीका

देवाश्च ते जनाश्चैव देवनामजनाश्च ये ।
सम्यगस्ताः कलेरन्तमासाद्य (द्य) न्ते हि सर्वशः ॥ २९४ ॥
कं सुखं वेति विज्ञानमसुः प्राणोऽभिधीयते ।
देवनं देव इत्युक्तं तच्च क्रीडादिसप्तकम् ॥ २९५ ॥
परामृतं विमोक्षस्तदेनेषां च यतो ह्यसौ ।
समस्तदेवजनक वासुदेवपरामृत ॥ २९६ ॥
इति ज्ञानादिदानेन कलिकात्कारतो (को) हरिः ।
कल्की संस्तूयते किं च कलं ज्ञानं सुखं च कम् ॥ २९७ ॥
तद्वान्कल्की 'तदत्रोक्तं वासुदेवपदोपरि ।
परामृत ज्ञानरूप इत्यनन्तसुखाम्बुधिः ॥ २९८ ॥
परामृत इति प्रोक्तो' वासुदेवश्च स प्रभुः ।
कृत्वा विशुद्धसत्त्वं तद्रम्यत्वात्तु सतां सदा ॥ २९९ ॥
विस्तारक्रमतोऽप्येष कल्की तस्मै नमो नमः ।
यद्वा समस्तदेवानामुत्पत्त्यादियुगादिकृत् ॥३००॥
चतुर्ष्वादियुगादित्वाद्वासुदेवेति कथ्यते ।
परामृतत्वमेवाऽन्ये त्वत्प्रसादातु मोक्षिणः ॥३०१॥
ज्ञानरूपासुदेव त्वं परोऽसि जगतः पते ।
अ ( म् अ ) मन्तक सुदुष्टानां सदैवैकप्रकारतः ॥३०२॥
ऋतमित्युच्यते देव ज्ञानमूर्ते नमोऽस्तु ते ॥ ७४ ॥

(टि०) हे ज्ञानमूर्ते हे परामृत इत्याभ्यां पदाभ्यां कल्किरूपं संबोध्यते। **कलं**=ज्ञानं **कं**=सुखं च कल्कं निरुक्तत्वाछकारस्थाकारलोपः। कल्कं विद्यते यस्य सः कल्की। 'अत इनिठनौ' [पा. ५।२।११५] अत इनिः। '**ज्ञानमूर्ते**' इत्यनेन कलशब्दो व्याख्यातः। **परामृते**त्यनेन कशब्दो व्याख्यातः। परं पूर्णं (अनन्तं) अमृतं आनन्दः (सुखं) यस्य स तथोक्तः अनन्तसुखाम्बुधिः। तथा च हे कल्किन् इति फलितोऽर्थः। हे कल्किन् **ते** तुभ्यं **नमोऽस्तु**। कथंभूत **समस्तदेवजन** देवाश्च ते जनाश्च देव-नामानश्च ते जनाश्चेति मध्यमपदलोपाश्रयणेन वा देवजनाः।'दीनत्वाद्देवनामान'

इति प्रमाणात् । कलौ उत्पन्नाः त्वरकादि ( तुरुष्क ) दुर्जनाः **समस्ताः** सम्यगस्ता निरस्ता हिंसिता देवजना येन सः समस्तदेवजनस्तत्संबुद्धिः हे समस्तदेवजन । तदुक्तं **पद्मपुराणे** ' समस्तम्लेच्छदुष्टघ्नः सर्वशिष्टद्विजातिकृ दि'ति । हे **कवासुदेवपरामृत** कं च वं च असुश्च देवश्च परामृतं च तानि कवासुदेवपरामृतानि तानि विद्यन्ते देयत्वेन यस्मिन्स तथोक्तः तत्संबुद्धिः । सुखज्ञानप्राणनदोषनिरसनक्रीडादिसप्तकमोक्षदेत्यर्थः । केषामित्याकाङ्क्षायां एतेषामित्युक्तम् । एतेषां ब्रह्मादीनामित्यर्थः । **कलिकात्कारतः कल्कीति** कल्किशब्दस्य निर्वचनान्तरं यत् तत् **समस्तदेवजनकेत्य**नेन संगृह्यते **समस्तदेवजनकवासुदेवपरामृतेति** । दीव्यन्ति ज्ञानेन क्रीडन्ति ते देवाः ते च ते जनाश्च देवजनाः सुजना इत्यर्थः । देवजनानां समस्तमिति समस्तदेवजनम् देवजनकालिकल्मषं तत् कृणोति निराकरोतीति समस्तदेव-जनकस्तत्संबुद्धिः । तथा सुजनकलिमलविध्वंसिन्निति कल्किशब्दनिरुक्तिः । कीदृश **वासुदेव** वाति जानाति अनेनेति **वं** शुद्धं सत्त्वं अन्तःकरणं सत्त्वगुणो वा तेन **आ** समन्तात् विस्तारक्रमतः=अनिरुद्धप्रद्युम्नसंकर्षण-वासुदेवनारायणरूपाणां मनोबुद्ध्यहंकारमहत्तत्त्वगुणत्रयाव्यक्तनिष्ठ ( ष्ठानां ) व्याप्तिव्यक्तिक्रमतः **सु दीव्यते** सुष्टु गम्यते ब्रह्मादिभिरिति वासुदेवः तत्संबुद्धिः । तदुक्तं ' ऊर्ध्वं गच्छन्ति सत्त्वस्था ' इति गीतायाम् । भागवते च ' सभूतसूक्ष्मेन्द्रियसन्निकर्षात्सनातनोऽसौ भगवाननादिः । मनोमयं देवमयं विकार्यं संपाद्य मत्या सह तेन याति । विज्ञानतत्त्वं गुणसन्निरोधं तेनात्मनात्मानमुपैति शान्तिम् । आनन्दमानन्दमयोऽवसाने सर्वात्मनि ब्रह्मणि वासुदेवे ॥ एतां गतिं भागवतो गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग ' इति । अथवा **समस्तदेवजनक** । समस्तदेवानां जनो जननं यस्मिंस्तत्**समस्त-देवजनं** देवयुगं कृतं तत्करोति समस्तदेवजनकस्तत्संबुद्धिः । समस्तदेवान् जनयति स तथोक्तस्तत्संबुद्धिरिति वा । एवंभूत **वासुदेव** वासुदेवनामक । कोऽर्थः । कृतयुगे देवानुत्पाद्य तैर्वासुदेवरूपेण तद्युगे उपास्येत्यर्थः । तदुक्तं ' कृते शुक्ल ' इत्यादौ । **परामृत** अमृतेभ्यो मुक्तेभ्यः पर नित्यमुक्तेत्यर्थः । अत्येषां तत्प्रसादेन मुक्तत्वान्न परामृतत्वम् । पुनः कीदृश **वासुदेव** ज्ञानरूप **असु-देव**=मुख्यप्राणेन क्रीडादिसप्तयुत **पर** जगतः अत्यन्तभिन्न उत्कृष्ट वा । **अम्** सुदुष्टानामन्तक अम् रोग इति धातुः । ' रुजो भङ्गे ' अम (आमय?)तीति **अम् ऋत** सदैवैकप्रकार निर्विकारेत्यर्थः । एवंभूत देव **ते नमोऽस्तु** ॥ ७४ ॥

( ति० ) कल्क्यवतारप्रमेयमाह समस्तेति ॥ ७४ ॥

( भ० ) **परामृतज्ञानमूर्त** इति । परं पूर्णममृतमानन्दलक्षणं यस्यासौ परामृतः । ज्ञानमूर्तिर्ज्ञानरूपः । परामृतश्चासौ ज्ञानमूर्तिश्चेति तथोक्तः । तस्य संबुद्धिरियम् । सत्वं विशुद्धं वसुदेवशब्दितामिति वचनात् **वसुदेवो** विशुद्धसत्त्वं तद्गम्यत्वाद्वासुदेवः । भक्तानामन्तःकरणं विशुद्धं कृत्वा तद्गम्यो भवतीति तथोक्त इति भावः । तस्य संबुद्धिर्हे **वासुदेव** ॥ ७४ ॥

( ना० ) हे **वासुदेव** कृतयुगादीनां चतुर्णां वासुदेवसंकर्षणप्रद्यु-म्नानिरुद्धाः क्रमेण प्रवर्तकाः नियामकाश्च । कल्की च कलेरन्ते धर्मयुग-प्रवर्तकः वासदेवकार्यकारित्वात्तदभेद ( देन ? ) संबोधितः । **परामृतज्ञानमूर्त** सुखज्ञानदेह **परामृत** उत्कृष्ट । कल कामधेनाविति धातोः कलतीति **कल्** इति क्विबन्तः । कं सुखं पूर्णमस्यास्तीति **की** । भूम्नि इनिप्रत्ययः । कल् चासौ की चेति **कल्कीति** ॥ ७४ ॥

## मूलम्

**देवादे देवलोकप पूर्णानन्दमहोदधे ।**
**सर्वज्ञेश रमानाथ देवाऽऽदेदेवलोकप ॥ ७५ ॥**

**(पद०) देवादे । देवलोकप । पूर्णानन्दमहोदधे । सर्वज्ञ । ईश । रमानाथ । देव । आदे । अदेवलो । कप (देवलोकप) ( अदे । अव । लोकप ) ॥ ५७ ॥**

## टीका

आदिदेव महापद्मयः सलोकसुरपालक ॥ ३०३ ॥
अनन्तानन्दसान्द्राब्धे सर्वज्ञेश रमापते ।
देवाऽखिलजगज्जन्मस्थित्यप्ययविमोक्षद ॥ ३०४ ॥
अदेवनाश धातुप विमुक्तसुरपालक ।
( **अदे**ऽविनाशिन् धातुश्च यद्दीङ्क्षय इति श्रुतः )
अव नः सुरसंदोहान्विमुक्तसुखपालक ॥ ३०५ ॥
संसारादेव लुप्ता ये मुक्ता लोकं तु तत्सुखम् ॥ ७५ ॥

( टि० ) हे **देवादे** आदिदेव देवानामादिरादिदेवस्तत्संबुद्धिरिति विपरीतसमासः । **देवलोकप** देवाश्च लोकाश्च देवलोकास्तान् पातीति स

तयोक्तस्तत्संबुद्धिः । महापद्मयः सलोकसुरपालक । **पूर्णानन्दमहोदधे** अनन्तानन्दसान्द्राब्धे **सर्वज्ञ ईश रमानाथ** सर्वज्ञ ईश रमापते **देव** क्रीडादि-गुणविशिष्ट **आदे अम्**=अखिलं । आ=समन्तात् यथायोगं ददातीति आदिः तत्संबुद्धिः । 'उपसर्गे घोः किरि'तिआङुपसृष्टाद्दाञः किः । अखिलजगज्जन्मस्थि-त्यप्ययविमोक्षद । **अदेवलो** अदेवान् दैत्यान् लुनातीति अदेवलुः तत्संबुद्धिः। अदेवनाश । **कप** कं पातीति कपस्तत्संबुद्धिः । **धातुप** । अथवा **देवलोकप** लोकन्ते प्रकाशन्ते आवरणापगत्या ते लोकाः लोक प्रकाशन इति धातोः विमुक्ता इत्यर्थः । लोकाश्च ते देवाश्च देवलोकाः । कडाराः कर्मधारये (पा. २।२।३८) इत्यतो जैमिनिकडार इव विशेषणस्य परनिपातः । तान्पाति स तथोक्तस्तत्संबुद्धिः । विमुक्तसुरपालक । अथवा लुप्यन्ते प्राकृतदेहादिमत्वेन(न?) दृश्यन्ते ते लावः 'लुप् अदर्शने' इति धातोः 'गमेर्डोः' (उ.२३५) इतिवत् डोप्रत्यये टिलोपे च गोशब्दवदोकारान्तो लोशब्दः । लावश्च ते देवाश्च देवलावः तेषां कं सुखं देवलोकं तत् पाति स तथोक्तस्तत्संबुद्धिः **देवलोकप** । विमुक्तसुखपालक । एवंभूत रमानाथ त्वं सुरसंदोहान् नः **अव** रक्ष । अवेति क्रियापदश्रवणात् तदन्वययोग्यकर्तृकर्मपदे अध्याहृत्याऽन्वयपूर्तिः कर्तव्या । अत एवोक्तं ' अव नः सुरसंदोहानि'ति ॥ ७५ ॥

(ना० )........**अदे** न विद्यते दिः क्षयो यस्येति अदिस्तस्य संबोधनं अविनाशिन् । दीङ् क्षय इत्यस्माद्धातोर्भावे डिप्रत्ययः । दयनं दिः । अतति सर्वत्राप्रतिहतो गच्छतीत्यत् वायुर्गरुडो वा तेन एतीति **आदिः** तस्य संबुद्धिः । **अदे** गरुडवाहन वायुवाहन इति वा । वरदो वायुवाहन इति तन्नामसु पाठात् । **लोकप** लोकयन्त्यात्मानमवलोकयन्ति ते लोकाः मुक्ता-स्तान् पातीति लोकपस्तस्य संबोधनम्........॥ ७५ ॥

( भ० ति० ) **लोकप** अत्र लोशब्देन संसारलोपवन्तो मुक्ता उच्यन्ते तेषां कं सुखं पातीति तथोक्तः ।

( ल. टि. ) अत्र विपथयमकम् । विपथेन=विमार्गेण पादद्वयाति-क्रमेण यमितत्वात् । एवमेव भट्टिकाव्ये १०–१६ ।

## मूलम्

**यो निर्ममेऽशेषपुराणविद्यां योनिर्ममेशेषपुराणविद्याम् ।**
**योऽनिर्ममेऽशेषपुराणविद्यां यो निर्ममेशेऽषपुराणविद्याम् ॥७६॥**

## टीका

इति भारतमाश्रित्य सर्वशास्त्रार्थनिर्णयम् ॥ ३०६ ॥
कृत्वैतद्विधया वेदं विद्याधीशं स्मरन्हरिम् ।
तत्प्रसादाद्धि विद्यैषा मया प्राप्तेत्यथाब्रवीत् ॥ ३०७ ॥
योनिर्मम इति ह्यत्र छिन्द्यादेवं पदान्यपि ।[1]

**१ यः । निर्ममे । अशेषपुराणविद्यां । योनिः । मम ।**
**ई(इ)शेषपुः । आ । अन(ण)वित् । यां । ई । अः (यः) ।**
**अनिः । ममे । अशेषपुराणवित् । द्यां । या । उ ।**
**निर्ममेशे । षपुराणविद् । या ( दि । आ ) । अम् ॥**

ई श्रीरिति समानार्थाव ( र्थौ अ ) कारार्थो हि केशवः ॥३०८॥
अहं **यां** शरणं व्यासमल्लोपश्छान्दसत्वतः ।
**यः** श्रीविष्णुः पुराणाख्यां(दि?) विद्यां द्यां निर्ममेऽखिलाम् ॥३०९॥
द्यौस्तु श्रीर्भारती चाऽपि तद्रूपामभिमानतः ।

( टि० ) योनिर्मम इत्यस्य तात्पर्यमाह । इति भारतमाश्रित्येत्यादिना अथाऽब्रवीदित्यन्तेन । अनन्तरं पदच्छेदं ज्ञापयित्वाऽन्वयमाह ई श्रीरित्यादिना । अहं तं **अं** व्यासं **यां** शरणमिति शेषः । अयामिति वक्तव्ये यामित्य-डभावश्छान्दसः । ' बहुलं छन्दस्यमाङ्योगेऽपी'ति स्मरणात् । तं कं **यः** ईः श्रीः तया सहितः अः अकारवाच्यः सः **यः** । इ अ अनयोः संधौ यणादेशेन य इति रूपसिद्धिः । इयादेशो बहिरङ्गो यणादेशस्त्वन्तरङ्गः । श्रीविष्णुः श्रिया सहितो विष्णुः । तां **अशेषपुराणविद्यां** अशेषा अखिला चासौ पुराणविद्यां च पुराणप्रभृतिविद्या सा तथोक्ता तां **द्यां** च **निर्ममे** निर्मितवान् । कान् अशेषपुराणविद्याम् कां च द्याम् । **या ई** अविभक्तको निर्देशः । श्रीः भारती च । कथं श्रीभारत्योः विद्यात्वं द्युत्वं च । अभिमानतः=अभिमानेन निमित्तेन । विद्याभिमानित्वात्तथा द्युत्वभिमानित्वात्पुराणविद्यात्वं द्युत्वं च श्रीभारत्योः । अभिमान्यभिमन्यमानयोश्चैक्यव्यपदेशो ' महतश्चतुर्मुखादि'त्यादौ द्रष्टव्यः । श्रीभारतीप्रतिमास्थानीयाऽशेषविद्यादिवोः निर्माणेन ते अपि रूपान्तरेण निर्मिते इति भावः । अथवा **यः** श्रीविष्णुः तां **द्यां** द्योतनात् द्युशब्दवाच्यां श्रियं भारतीं **अशेषपुराणविद्यां** तदभिमानित्वात्तच्छब्दवाच्यां निर्ममे इत्यन्वयः ।

**निर्ममेशे** शुके भाति याऽत्युच्चा तत्प्रसादतः ॥ ३१० ॥
षः प्राणस्तत्पुराणो हि विष्णुस्तज्जनकः प्रभुः ।
तद्विद्या ( तद्विदि आ ) विष्ण्वधीनं तु विश्वं जानन्हि
( जानत्येव हि ? ) सर्वदा ॥ ३११ ॥
ममतारहितः शम्भुः शुको जातस्तपोधनः ।

( टि० ) तां काम् । **या उ निर्ममेशे** भातीति शेषः । कोऽर्थः । **या** अशेषपुराणविद्या साभिमानिका । **निर्ममेशे** सर्वस्य विष्ण्वधीनत्वज्ञानेन निर्ममः कुत्रापि ममतारहितः स चासौ ईशः शम्भुश्च निर्ममेशस्तस्मिन् निर्ममेशे । निर्ममेशात्मके शुके । तदुक्तं ' अहंकारात्मको रुद्रः शुको द्वैपायनात्मज ' इति । निर्ममः शम्भुस्तद्रूपेण निर्ममताया प्रदर्शने भगवदाज्ञापालनं न स्यादिति शुकरूपेण तपोधनः सन् निर्ममतां प्रदर्शयितुं भगवतो व्यासादुत्पद्य ततोऽशेषपुराणविद्याश्चाधिगम्य पारमहंस्यधर्मभूतां निर्ममतां दर्शयामासेत्यर्थः । तदुक्तं ' यं प्रव्रजन्तमनुपेतमपेतकृत्य 'मित्यनेन । तथैव भगवताऽऽचार्येणा-नुपेतमिति पदस्य देहाभिमानरहितमिति व्याख्यातत्वाच्च । **उ** अत्युत्कृष्टा भाति प्रकाशते । अथवा तां कां । **या उ** तत्प्रसादतः=भगवत्प्रसादतः **उ** अत्युच्चा लक्ष्या नित्यमुक्तत्वेनात्युच्चत्वम् । भारत्यास्तु देवस्त्रीसंघोत्तमत्वेनात्युच्चत्वम् । पुनस्तां काम् । **या षपुराणवित्** । **षः** प्राणः 'षकारः प्राण आत्मे'ति श्रुतेः। षस्य पुराणः=आदिः जनकः इत्यर्थः । षपुराणं वेत्तीति षपुराणवित् । 'आत्मत एष प्राणो जायते (षट्प्रश्न ३-२)' इत्यादिश्रुत्यभिमानिनी[1] एतच्छ्रुत्युक्तं नारा-यणस्य प्राणजनकत्वं सदा जानती=साक्षात्कुर्वन्तीति[2] लक्ष्मीविषये, भारती-विषये तु पूर्वमनादित एव प्राणजनकत्वेन परोक्षतया जानती=तथोपासनया अपरोक्षज्ञानवच्छतजन्मसुप्राणजनकत्वेन भगवन्तं साक्षात्कुर्वाणेत्यर्थः ।

योनिश्च मम देवेशः शुकाविष्टस्य धीमतः ॥ ३१२ ॥
अवान्तरं कारणं च यद्वा सूत्रात्मनो मतः ।
**ईशेषपुरयं** दीर्घलोपश्छान्दस इष्यते ॥ ३१३ ॥

---

( ल. टि. ) अत्र सर्वयमकम् । चतुर्णामपि पादानां सदृशत्वात् । तथैव भट्टिकाव्ये १० सर्गे १९ श्लोके " बभौ मरुत्वान् विकृतः समुद्रः " इत्यत्र दृश्यते । १ ईशेषपूः इत्यत्र ।

श्रियं शेषं पुनात्येष विष्णुः क्षीराब्धिमन्दिरः ।
इशेषपुरथो वेदपतिरिः कामः ईरितः ॥ ३१४ ॥
शेषकामौ पुनात्येष पैलसूत्रगतौ क्रमात् ।
उपलक्षणमेतद्धि मुनीनन्यान्सुरानपि ॥ ३१५ ॥
वैशंपायनविध्यादीन्पुनात्येप(व) कृपानिधिः ।
आपुनातीति संबन्ध उत्तरेणापि योग्यतः ॥ ३१६ ॥

( टि० ) पुनस्तं कम् यः **मम योनिः** । भगवतो व्यासात् मुख्यप्राणस्य जातत्वात् । कथमिदमित्यतो व्याख्याति शुकाविष्टस्य धीमतो मम योनिश्चेति । मदाविष्टस्य मच्छरीरस्थानीयस्य शुकस्य भगवतो व्यासादुत्पन्नत्वेनाहमपि तदुत्पन्नः यथा शरीरी ( रजन्मना ? ) जीवः जात इति व्यपदेशः । अनेन भगवतो व्यासस्यावान्तरकारणत्वमुक्तम् । कथम् । शुकदेहस्य भौतिकत्वात् भूतेषु तद्देहकारणेषु प्रविश्य पञ्चभूतभागान् शुकदेहाकारेण परिणतिं प्रापितत्वानित्यर्थः । तदुक्तं 'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः' इत्यत्र ब्रह्मसूत्रे ( १-४-१५ ) । न केवलमवान्तरकारणं किं तु मुख्यकारणं चेत्यभिप्रायेण व्याख्याति यद्वेति । यद्वा सूत्रात्मनः सर्वजगदाधारस्य **मम योनिः** संकर्षणरूपेण जनकः व्याससंकर्षणयोश्चाभेदात् तज्जातोऽहं व्यासजात एव । पुनस्तं कम् **य ईशेषपुः** । ई श्रीः शेषश्च तौ पुनातीति ईशेषपूः । लक्ष्मीशेषप्रवर्तक इत्यर्थः । क्षीराब्धिमन्दिर इत्यनेन श्वेतद्वीपरूपेण लक्ष्मीप्रवर्तक इत्युक्तम् । श्वेतद्वीपस्य लक्ष्म्यात्मकत्वात् । तदुक्तं 'अतो हि वैष्णवा लोका नित्यास्ते चेतनात्मका' इति । बहुलक्ष्योच्छ्रिते नित्ये विमाने संस्थिते यतः । चित्प्रकृत्यात्मनि ततो दिवीति कथिते श्रुताविं' ( छां.भा. ३.१२) ति । तथा 'तदपरोजिता पूर्वब्रह्मण इति ।' तथा 'जातेऽगुणव्यतिकरे यथा पूर्वं प्रजायते' । अगुणव्यतिकरे गुणव्यतिकरशून्य इति श्वेतद्वीपोक्तेः । तथा मुक्तशेषस्यापि भगवदास्तरणत्वेन भगवता प्रवर्तितत्वात् ईशेषपुरित्युक्तम् । एतदपि श्वेतद्वीपपतिशेषशायिनारायणाभेदेन भगवति व्यासे उक्तम् । न हि भगवान्बादरायणो बादरायणरूपेण श्वेतद्वीपे शेषशायित्वं स्वस्य विद्यमानं व्यक्तीकरोति सर्वान्ज्ञानिनः प्रति भगवानाचार्यस्तु भगवन्तं व्यासं श्वेतद्वीपेऽपि शेषशायित्वेन पश्यति । सदा विश्वरूपदर्शित्वात् । अथवा **इशेषपु**रिति

( ल. टि. ) १ ब्रह्मादीन् ।

पदच्छेदः । इः कामः तं शेषं च पुनातीति **इशेपपुः** शेषाविष्टं पैलं कामाविष्टं सूतं रोमहर्षणं च पुनाति । यथाक्रमं ऋग्वेदपुराणविद्याप्रवर्तकौ करोतीत्यर्थः । उपलक्षणमेतत् । अन्यान्वैशम्पायनादीन् मुनीन् तथा तदाविष्टान् वसिष्ठादीन् विन्ध्यादीन् सुरानपि एष कृपानिधिः वेदपतिः अयं व्यासः ' अ आ अं अः पुराणर्षिर्व्यासः शाखासहस्रकृदि'ति वचनात् । **पुः** पुनातीति पुः, पावित्रयति । कोऽर्थः । यजुरादिवेदप्रवर्तकत्वेन ज्ञानप्रवृत्तस्वसेवाकर्तृत्वेन पुण्यफलानन्दाभिवृद्धिमतः करोतीत्यर्थः । ननु कथं आ(अः) इत्यनेन व्यवहितेन पुरित्यस्य ऐकपद्यं प्राप्तस्य सम्बन्धः इत्यत आह योग्यत इति । भावप्रधानमेतत् । योग्यत्व(त्वात्) इत्यर्थः । ' यस्य येनाऽर्थसम्बन्धो दूरस्थेनाऽपि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमचोदने ' ति । तथा च आ ( अः ) इत्यस्य व्यवहितत्वेऽपि बुद्धया विविक्तेन पुरित्यनेन सम्बन्धो घटते योग्यत्वादित्युक्तं भवति ।

अनविच्चेति सर्वज्ञो यदवित्र क्वचित्प्रभुः ।
आसमन्ताण्ण ( च ) विद्योऽयमापरोक्ष्येण वेदराट् ॥ ३१७ ॥
यद्वाऽनं (तं) वेदयत्येष ह्यासमन्तात्सदाऽखिलम् ।
इः कामः स न यस्यासावकामोऽनिर्मुनीश्वरः ॥ ३१८ ॥
कामं दहन्ति कृतिनो नन्वित्यादिप्रकीर्तनात् ।

( टि० ) पुनस्तं कम् । यो **अनवित्** । वेत्तीति वित् न वित् अवित् तथा न भवतीत्यनवित् । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति नियमात् । प्रभुः=समर्थो व्यासः क्वचित्=सर्वथा क्वचिद्विषये **अवित्** अज्ञो **न** भवति । अशेषविशेषाकारेण सर्वं स्वात्मादिकं जानातीत्यर्थः । तदुक्तं भगवत्पादैः ' पूर्वं स्वपरगताखिलविशेषविषयमि'ति । कस्मा**दनवित्** सर्वज्ञोऽयं व्यास इत्यत उक्तं **आ** समन्तात् योऽयं वेदराट्=व्यास आपरोक्ष्येण वित् वेत्तेत्यर्थः । हेतुगर्भं विशेषणमिदम् । आ समन्तात् अशेषविशेषाकारेण सर्वज्ञत्वात् । तथा च ज्ञानाज्ञानयोः समाने विषये विरोधात् सर्वं विशेषाकारेण साक्षात्कुर्वन् कथं तत्राज्ञानवान्स्यादिति भावः । यद्वा **आ** समन्तात् अनं श्रीमुख्यप्राणं वेदयति विज्ञापयति अखिलमिति **अनवित्** मुख्यप्राणस्यआलोचने स्वान्यविषयकसार्वज्ञ्यप्रद इत्यर्थः । पुनस्तं कम् । यः **अनिः** न विद्यते इः कामो यस्येति अनिः अकामः कामादिदोषरहित इत्यर्थः । तत्र प्रमाणमाह

कामं दहन्तीति । 'कामं दहन्ति कृतिनो ननु रोषदृष्ट्या रोषं दहन्तमुत ते न दहन्त्यसह्यम् । सोऽयं यदन्तरमलं विविशन्विभेति कामः कथं नु पुनरस्य मनः श्रयेते'ति (भाग०) प्रमाणात् निष्काम इत्यर्थः ।

> पुराण्यणन्ति ये जीवास्ते पुराणा अशेषतः ॥ ३१९ ॥
> यत उत्पत्तिकृत्तेषामतोऽ**शेषपुराणवित्** ।
> यद्वा विष्णोः शेषभूता अशेषा हरिकिंकराः ॥ ३२० ॥
> वेदयन्नेव तद्रूस्तानुक्तोऽ**शेषपुराणवित्** ।
> विदोत्पत्तौ विदास्तित्वे विद ज्ञान इति क्रमात् ॥ ३२१ ॥
> इत्थं देवो **ममे**ऽज्ञायि वेदेशो वेदवैदिकैः ॥ ॥ ७६ ॥

( टि० ) पुनस्तं कम् । यः **अशेषपुराणवित्** पुराणि शरीराणि अणन्ति प्राप्नुवन्ति इति पुराणाः जीवाः अशेषाश्च ते पुराणाश्च ते तथोक्ताः तान्वेदयति उत्पादयतीति स तथोक्तः । विदोत्पत्ताविति धातोः । सकलजीवोत्पादक इत्यर्थः । न च सदसन्मुक्तिगतानां जीवानां कथमुत्पत्तिरिति वाच्यम् । तेषामपि पराधीनविशेषलाभरूपाया उत्पत्तेः सत्त्वात् । तथैव वियत्पादे समर्थितत्वात् । अन्यथा 'स इदं सर्वमसृजत' इति श्रुतिविरोधः स्यात् । न च सर्वशब्दार्थस्य संकोचः बाधकाभावात् । अत एव स्रष्टा ब्रह्मादयो देवा इत्यत्र मुक्तिसृष्टिरेव सृष्टित्वेन मुक्त्यनुवर्तनी व्याख्याता । कल्यादिविषये तु स्वरूपदुःखादिर्भाव उत्पत्तिर्ज्ञातव्या । यद्वा **अस्य** परब्रह्मणः **शेषाः** किंकरा अशेषाः ते च ते **पुराणा**श्च ते तथोक्ताः तान्**वेदयति** परब्रह्मादितत्त्वं इति **अशेषपुराणवित्** विद् ज्ञान इति धातोः ब्रह्मादिस्वकिंकरसम्यग्ज्ञानप्रद इत्यर्थः । कीदृशः सन् । स्वयम् **अशेषपुराणवित्** अशेषपुराणेषु स्वकिङ्करेषु ब्रह्मादिषु विद्यतेऽसौ **अशेषपुराणवित्** । विद सत्तायामिति धातोः । तद्रूः सन् तेषां मनोवृत्तिं स्वविषयामुत्पादयतीत्यर्थः । तदुक्तं अन्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठन्नित्यादिना । स्मृतौ च स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः ' इति । ममे इति क्रियापदश्रवणात् कर्मकर्तृपदेऽध्याहृत्यान्वयमाह इत्थमिति । अनेन पूर्वोक्तप्रकारेण देवो नारायणो वेदव्यासो ( या ) **वेदवैदिकैः**=वेदानृगादीन् वैदिकान् पञ्चरात्रादीन् वेदमूलकान् विदन्ति अधीयते च ते वेदवैदिकास्तैः ' तदधीते तद्वेद ' इति अणि तल्लुकि

च कृते तथा सिद्ध्यति । अन्यथा वृद्ध्यादि भवितव्यम् । वेदवैदिकैः = ब्रह्माद्यत्तमजीवैः वेदवैदिकैः = ऋगादिवेदतन्मूलकपञ्चरात्रादिशास्त्रैः करणैः **ममे** अज्ञायि ज्ञात इत्यर्थः ॥ ७६ ॥

( ति० ) **षपुराणविदि**....**पुरस्य** (शरीरस्य) अणं प्रापणापरपर्याय-जननरूपा क्रिया यस्मादिति वा। ....इः कामः इकारः फणरत्नार्चिष्यग्रतोऽ-र्थगुहार्थयोः । हारे करेणुकुक्ष्यन्ते निशाकरकरे स्मरे इत्यभिधानात् ॥ ७६ ॥

( भ० ) अशेषपुराणाख्यां विद्याम् **द्यां** । द्यौः श्रीः भारती च । तदभिमन्यमानत्वात्तद्रूपां । सा केनाधीयत इत्यत आह **येति**। **या** उ उच्चा **निर्ममेशे** ममतारहितेषु श्रेष्ठे साक्षाद्रुद्रावतारे शुके । भार्तीति शेषः । तां विद्यां निर्मम इति संबन्धः । कथंभूते शुके **आ** सम्यक् **षपुराणविदि** षः प्राणः षः प्राण इति श्रुतेः । तस्मात्पुराणो नियतपूर्ववर्ती प्राणजनक इति यावत् । प्राणस्य पुरं देहमणयती (प्रापयती)ति वा तथोक्तः । तद्विदि= प्राणादिकं सर्वं जगद्विष्णवधीनजन्मादिकमिति सर्वदा जानाने इति यावत् । एतेन शुकस्य निर्ममेशत्वमुपपादितं भवति । ........ **ईशेषपुः** ई श्रियं शेषं च पुनातीति ईशेषपूः । स एवेशषपुः । दीर्घलोपश्छान्दसः । शेषपर्यङ्के श्रिया सह क्षीराब्धौ शय्यानो विष्णुरेव व्यास इति भावः .... अथवा इशेषपुरिति छेदः । .... उपलक्षणमेतत् । वैशंपायनादिमुनीन् तदाविष्टब्रह्मादिदेवांश्च पुनातीत्यपि द्रष्टव्यम् । **आ** इत्यस्य **पुनातीति** पुरित्यनेन योग्यतया संबन्धः। यश्च **अनवित्** अविन्न भवति किंतु सर्वं सर्वदा जानात्येवेति तथोक्तः । नस्य णत्वं छान्दसम् । अकर्मणश्च वोद्धव्यमित्यादिवत् । यद्वा **आणविदि**-त्येकमेव पदम् । 'णकारो बलमिति' श्रुतेः **णो** बलरूपो वायुस्तेन **आ** समन्तात् आपरोक्ष्येण **वेद्यत** इति तथोक्तः । **आ** समन्तात् अखिलं जगत् **णं** प्राणं **वेदयतीति** वा ॥ ७६ ॥

( ना० ) **यः यः** । तत्राद्यं यदो रूपम् । द्वितीयं तु यशब्दरूपम् । ....एवं च ई सहितः अः य इति । शाकपार्थिववदुत्तरपदलोपी समासः ।.... ननु देवमीमांसामध्यभागस्य पैलशेषाभ्यां कृतत्वात्कथमशेषविद्यानामयं निर्मातेत्यतस्तं विशिनष्टि **इशेषपुरिति** । इश्च शेषश्च इशेषौ । तौ पुनातीति इशेषपुः । पैले कामावेशात् इशब्देन स उच्यते । 'इकार उच्यते कामो लक्ष्मीरीकार उच्यते' इत्युक्तेः । पैलाविष्टकामस्यैव मुख्यकर्तृत्वाच्च । पूङ्

पवन इत्यस्माद्धातोरौणादिको डुप्रत्ययः । तेन च उकारान्तता । कामशेष-योरनुग्रहार्थमेव ताभ्यां तच्छास्त्रं कारितमिति भावः । तदुक्तं 'आद्यन्तं देव-शास्त्रस्य स्वयं भगवता कृतम् । मध्यं तदाज्ञया पैलशेषाभ्यां कृतमञ्जसा ' इति । पैलस्यैकारेण निर्देशात् । कामावेशयुक्तसूतमुखेन पुराणकथनमपि तत्पावनार्थमिति सूचितम् । स्वस्याशक्यत्वात्तेन कारितमिति किं न स्यादित्य-तस्तं विशिनष्टि **आर्णविदिति** सर्वज्ञ इत्यर्थः । तस्य ज्ञानस्य याथार्थ्यरूपां सम्यक्तां आ इत्यनेनाह । व्यत्ययेन णकारः । संहितायां ' प्रण इन्दो '( पव. सू.३) इत्यादिवत् । यद्वा आणयति सकलजगच्चेष्टयति इत्याणः मुख्यप्राणः तं वेदयति बोधयतीति तथोक्तः । शेषोत्तममुख्यप्राणस्यापि गुरोस्तत्राशक्यमिति भावः । .... **अनिः** न विद्यते इः इच्छा यस्य सः पूर्णकाम इत्यर्थः । .... **अं** व्यासं अहं **आ** सम्यक् **यां** शरणं गतोऽस्मीत्यर्थः । यातेर्लङि उत्तमैक-वचनम् । आगमशासनस्यानित्यत्वादडभावः । 'अ आ अं अः पुराणर्षिर्व्यासः शाखासहस्रकृत्, महाभारतनिर्माता कवीन्द्रो बादरायण ' इति तन्नामसु अकारस्य पाठात् अः व्यासः ॥ ७६ ॥

## मूलम्

**अनन्तपारामितविक्रमेश प्रभो रमापारमनन्तपार ।**
**महागुणाढ्यापरिमेयसत्त्व रमालयाशेषमहागुणाढ्य ॥ ७७ ॥**
**( पद० ) अनन्तपार । अमितविक्रम । ईश । प्रभो । रमाप ।**
**अरमनन्तपार । ( अरं । अनन्तप । अर । ) महागुणाढ्य ।**
**अपरिमेयसत्त्व । रमालय । अशेषमह । आगुणाढ्य ॥७७॥**

## टीका

इति सर्वेषु शास्त्रेषु देवा ब्रह्मादयोऽखिलाः ॥ ३२२ ॥
उक्त्वाप्यन्तं न चापुस्ते गुणान्विष्णोर्निरन्तरम् ।
इति दर्शयितुं भूयस्सामान्यात्स्तौति तं प्रभुम् ॥ ३२३ ॥
विष्ण्वधीनं सदा पश्यन्विश्वमात्मानमेव च ।
निर्ममोऽतः सदा स्वस्य नित्यमप्रार्थितप्रदम् ॥ ३२४ ॥
तं च देवं सदा पश्यन् प्रेरितारं पुरःस्थितम् ।
स्तौति संबोधनेनैव नो नमस्यन्न चाऽर्चयन् ॥ ३२५ ॥

प्रतीतौ ममकारस्य निषेधो नम इत्यतः ।
अप्राप्तममकारो यः .... .... .... ॥ ३२६ ॥
अथाप्यनुवदत्येषः सतः संशिक्षयत्यपि ।
संप्राप्तममकारान्वै नमो नम इति क्वचित् ॥३२७॥

( टि० ) एवमिमं श्लोकं व्याख्यायोत्तरश्लोकतात्पर्यमाह **इति दर्शयितुमित्यादिना 'नमो नम इति क्वचिदि'त्यन्तेन** । तत्र नम इत्यनुवादस्य ' ज्ञानमूर्ते नमोऽस्तु ते ' इत्येवंरूपस्याऽपि तात्पर्यमाह **अथाप्यनुवदत्येष इत्यादिना** । कोऽर्थः । विशिष्य भगवन्तं स्तुत्वाऽपि पुनः संक्षेपेण स्तौति नम इति चानुवदति । तदुभयं सतां संशिक्षणार्थम् । कथं । विशेष्यस्तवनेऽनन्तरमुपरमे एतावत्त्वं गुणानामिति शङ्का मा भूत् । किं तु स्वशक्त्यभावादेव ( उपरमः? ) । अत एव भगवान् मया संक्षेपेण स्तूयत इति सन्तो जानन्तु । न केवलमहमेवाशक्तः साकल्येन स्तोतुं किंतु ब्रह्मादयोऽपि विशिष्य स्तुत्वा च नान्तमापुरिति दर्शयितुं संक्षेपात्स्तवनम् । तत्र चतुर्मुखान्येषां कदाचिन्ममकार उदेति स न कर्तव्य इत्यभिप्रायेण सर्वदा निर्ममोऽपि भगवानाचार्यः नमो भगवन्मे किंचिन्नास्ति सर्वदेहेन्द्रियादिकं त्वदीयमिति यदा वदति तदा सर्वदेहादौ निर्ममत्वं धार्यमिति भगवदाचार्यस्य भाव इति ज्ञात्वा सन्तः देहादौ ममत्वं त्यक्ष्यन्ति इति शिक्षयितुं नम इति अनुवादः । ननु अन्येषां देहादौ ममतादर्शनात् कथमाचार्यस्य निर्ममत्वमुच्यत इत्यत उक्तं **विष्णवधीनं सदा पश्यन्निति** । कोऽर्थः । ममताध्यासविरोधिनः भगवद्विषयकस्य लक्ष्म्यादिसर्वजगन्नियामकत्वप्रकारकस्य साक्षात्कारस्य सर्वदा विद्यमानत्वात् भगवन्नियामकत्वाज्ञानस्यैव समूलघातं हतत्वात् अज्ञानमूलो ममताभ्रमः कथं स्यात् । न हि कार्यमकारणमित्यर्थः । **नित्यमप्रार्थितप्रदमिति** । यद्यपि भगवानाचार्योऽखण्डितभगवदनुसंधानात् किमपि विषयादिकं नेच्छति तथापि भगवानेव तस्मै सर्वं विषयसारं वायुपदविभवरूपं ददातीत्यर्थः । **प्रतीतौ ममकारस्येति** । ममकारस्य प्रसक्तौ सत्यां तन्निषेधरूपा निर्ममता भगवति ह्याचार्ये वक्तुमुचिता सैव कथमित्यत इदमुक्तम् । न हि यस्मिन्नधिकरणेऽभावोऽनुभूयते तस्मिन्नेवाधिकरणे प्रतियोगी प्रतिपत्तव्यः । तथा सत्यभावप्रतीतेरेवायोगात् । किंतु यत्र कुत्रचित् । तथाविधममतारूपप्रतियोगिप्रतीतिरस्त्येवातो निषेधो घटत इति भावः । तदुक्तं ( छां. ८-१२-२)

' अशरीराणि वा एतानि वायुरभ्रं विद्युत्स्तनयित्नुरि'ति । लक्ष्मीब्रह्मवायु-सरस्वतीनां शरीराभिमानशून्यत्वादशरीरत्वम् । तथा भगवता प्रमाणेन व्याख्यातत्वात् ।

अन्तपारौ न यस्य स्तोऽनन्तपारः स वै हरिः ।
अन्त उत्पत्तिनाशौ तु पारः सीमा हि देशतः ॥ ३२८ ॥
असंख्येयाद्भुतानादिविक्रमोऽमितविक्रमः ।
अकर्तुमन्यथाकर्तुं कर्तुं शक्तः स ईश्वरः ॥ ३२९ ॥
प्रभुः सर्वस्य जगतो रमाया अपि स प्रभुः ।
शेषोऽनन्तस्तथा नित्यस्तत्पालोऽलं जनार्दनः ॥ ३३० ॥
नित्यं स पाति चाक्षीणस्त्वयि नित्यस्य नित्यता ।
महद्भिश्च गुणैराढ्यः पूज्यैरप्यधिकैरपि ॥ ३३१ ॥
अनन्तसत्त्ववान् सत्त्वं बलज्ञानसमुच्चयः ।
श्रीनिवासोऽखिलं यस्य महोऽशेषमहस्स हि ॥ ३३२ ॥
नैजः सर्वगुणोत्कर्षः सर्वेभ्यो मह उच्यते ।
यस्य ब्रह्मादयो ह्याढ्याः गुणभूताः स एव हि ॥ ३३३ ॥
**गुणाढ्यो** विपरीतोऽयं समासः कथितो भवेत् ॥ ७७ ॥

( टि० ) हे **अनन्तपार** अन्तः उत्पत्तिः नाशश्च पारो देशतो मर्यादा च अन्तपारौ तौ न विद्येते यस्य सः अनन्तपारः तत्संबुद्धिः उत्पत्तिनाशरहित व्यापकेत्यर्थः । हे **अमितविक्रम** अमितः असंख्यः विक्रमो यस्य स तथोक्त-स्तत्संबुद्धिः **ईश** कर्तुमकर्तुमन्यथाकर्तुं शक्त । **प्रभो** सर्वजगत इति शेषः । **रमाप** रमां पाति स तथा तत्संबुद्धिः रमाया अपि प्रभो इत्यर्थः । **अर-मनन्तपार** अरमत्यर्थं नित्यं सर्वदेति यावत् । अनन्तं शेषं तथा अनन्तं नाशरहितं वैकुण्ठादिलोकं लक्ष्म्यात्मकं कालकृतविकारशून्यं तथात्वेन पालक । तदुक्तं ' नित्यं नित्यात्मना प्रभुः ( यतः ) इत्यादौ । **महागुणाढ्य** महान्तः प्रत्येकं पूर्णाश्च अनौपाधिकाश्च ते च गुणाश्च महागुणास्तैराढ्य

( ल. टि. ) अत्र मूल श्लोके प्रथमपादाद्यपञ्चाक्षर्या द्वितीयपादान्त्य पञ्चाक्षर्याश्च यमकम् एवं तृतीयपादादिपञ्चाक्षर्या चतुर्थपादान्त्यपञ्चाक्षर्याश्च यमकम् ।

पूज्य **अपरिमेयसत्त्व** अपरिमेयं अनन्तं सत्त्वं बलज्ञानसमुच्चयो यस्य स तथोक्तः तत्संबुद्धिः । **रमालय** रमा आलयो निवासस्थानं यस्य स तथोक्तस्तत्संबुद्धिः । **रमाया आलय**स्तत्संबुद्धिः । श्रीनिवास । **अशेषमह** । अशेषेभ्यः सर्वेभ्यः महः नैजसर्वगुणोत्कर्षो यस्य सोऽशेषमहस्तत्संबुद्धिः । **गुणाढ्य** । आढ्याः श्रेष्ठाः ब्रह्मादयः गुणाः =गुणभूताः अप्रधानाः सेवका यस्य स गुणाढ्य इति आहिताग्न्यादिष्विातिवत् विपरीतसमासः तत्सबुंद्धिः । सेवकीभूतब्रह्मादे इत्यर्थः ॥ ७७ ॥

( भ० ) **अन्तः** कालतः परिच्छेदः उत्पत्तिनाशाविति यावत् ।.... **अमितविक्रम** असंख्येयाद्‌भुतानादिविक्रम । **ईश** कर्तुमकर्तुमन्यथाकर्तुं शक्त । **प्रभो** सर्वजगत्स्वामिन् । **रमाप** रमापते । **अरं** अलं **अनन्तपार अनन्तपाल** शेषपालक । यद्वाऽनन्तो नित्यः प्रकृतिकालाकाशादिपदार्थस्तत्पाल । अथवा **अनन्तप अर** इति पदच्छेदः । **अनन्तपे**त्यस्य नित्यपालकेत्युक्त एवार्थः । **अर** अल लयशून्य । 'नित्यो नित्यानां' ( कठ ५-१३, श्वे. ६-१३ ) 'नित्यं नित्यात्मना यत' इत्यादेः **महागुणाढ्य** महद्भिः पूज्यैरत्यधिकैश्च गुणैरानन्दादिभिः आढ्य । **अपरिमेयसत्त्व** । अपरिमेयमनन्तं सत्त्वं बलज्ञानसमुच्चयो यस्येति तथोक्त **रमालय** रमानिवास । **अशेषमह** अशेषमखिलं महः सर्वेभ्यो नैजसर्वगुणोत्कर्षो यस्यासौ तथोक्तः । 'नैजसर्वगुणोत्कर्षः सर्वेभ्यो मह उच्यत' इति वचनात् । तस्य संबोधनमशेषमहेति छान्दसो विसर्गलोपः । अथवा अकारान्तोऽप्यस्ति महशब्दः । तेन महेत्युपपन्नम् । **आगुणाढ्य** आढ्याः ब्रह्मादयोऽपि आ सम्यक् गुणा उपसर्जनभूता यस्यासावागुणाढ्य इति विपरीतसमासः । तस्य संबोधनमागुणाढ्येति । अथवा **अ** विष्णो इति भिन्नं पदं हे **गुणाढ्य अशेषमहाः** त्वामिति वा । स्वस्य नित्यापरोक्षविषयतया हरेः पुरः स्थितत्वात्संबोधनेनैव स्तवनमिति ज्ञातव्यम् । विश्वमात्मानं च सदा विष्ण्वधीनं जानतः स्वस्य सर्वत्र निर्ममत्वान्ममकारप्रसक्तेरेवाभावेन तन्निषेधज्ञापनं व्यर्थमिति सूचयितुं केवलं संबोधनेनैव स्तवनं न तु ते नम इत्यादि नमननिबन्धनम् । नम इत्युक्तौ हि मकारप्राप्तस्य ममकारस्य नकारेण निषेधो ज्ञाप्यते । अप्राप्तममकारस्य तु कुतस्तन्निषेधाज्ञापनमिति । 'तस्मै देव नमस्येऽहं' 'ज्ञानमूर्ते नमोऽस्तु ते' इत्यादौ तान्निबन्धनं तु प्राप्तममकाराणां सतां शिक्षणार्थम् । एवं रक्षेत्यादिप्रार्थनाऽनिबन्धनमपि भगवतः

स्वात्मानं प्रति नित्यमप्रार्थितसर्वेष्टदातृत्वादेव । 'देवादेदेऽत्र लोकपे'त्यादौ तु तत्प्रार्थनं लोकशिक्षणार्थमिति ज्ञातव्यम् । एतत्सर्वमुक्तं पूर्वटीकायाम् ॥७७॥

( ना० ) **अरम्** अत्यर्थम् **अर** (अ) न रीयत इत्यरः । न लीयत इति वा वृद्धिह्रासादिविकारशून्य । महद्भिः पूर्णैर्गुणैराढ्य पूर्ण । सामान्यविशेषाभ्यामपौनरुक्तिः ।........**अपरिमेयसत्त्व** सत्त्वं बलज्ञानसमुच्चयः । प्रागुक्तपराक्रमस्तु शत्रूणामाक्रमणे शक्तिविशेष इति न पौनरुक्त्यम् ।........ **अशेषमह** सर्वोत्सवयुक्त । **अगुणाढ्य** न विद्यते गुणाढ्या यस्मात्सः तथाविध ॥ ७७ ॥

## मूलम्

**भाभाभाभाभाभाभा भाभाभाभाभाभाभा**
**भाभाभाभाभाभाभा भाभाभाभाभाभाभा ॥ ७८ ॥**

## टीका

इति सामान्यतोऽनन्तगुणशक्तिक्रियात्मके ॥ ३३४ ॥
सिद्धे नारायणे तत्रानन्तवेदपदान्यपि ।
प्रत्येकं योगवृत्त्या हि वर्तमानानि केशवे ॥ ३३५ ॥
अनन्तगुणतां विष्णोर्विशेषाज्ञा(ज्ज्ञा)पयन्ति हि ।
इत्याह भा इति श्लोके (को (कं) सर्वशब्दोपलक्षणम् ॥ ३३६ ॥
अतो विष्णोः परो नान्यस्तच्छब्दा अपि यद्बरौ ।
मुख्यतोऽन्येषु तत्संगादत्यल्पेन निमित्ततः ॥ ३३७ ॥

(टि०) इतीमं श्लोकं व्याख्याय उत्तरश्लोकतात्पर्यमाह ***इतीत्यादिना** । इति पूर्वोक्तप्रकारेण सामान्यतः अनन्तपारामिताविक्रमेशेति सामान्योक्तितोऽनन्तगुणशक्तिक्रियात्मके **सिद्धे**ऽनिष्पाद्ये स्वप्रधानेनत्वनन्यशेषे, अनेन

---

( ल. टि. ) एकाक्षरयमकरूपोऽयं श्लोकः हृषीकेशतीर्थीये तुळुपुस्तके अस्मिन् श्लोके प्रतिपादं ७ अक्षराणि आहत्य २८. भावर्णाः, दृश्यन्ते ।

यादु० अत्र सर्वत्र भ आ इति पदं विवक्षितं आ समन्ताद्भ इति सर्वत्रान्वयः । भा दीप्तौ पचाद्यच् आतो लोप इति चेत्याकारलोपे भातीति भः तस्य संबुद्धिः भ एवं सर्वत्र । * टीकाप्रतीकम् ।

मीमांसकमतं पराचष्टे । तैः कार्यान्वितत्वेन कार्यशेषसिद्धे व्युत्पत्तिः स्वीकृता । तन्मते कल्पनागौरवप्रसंगादिष्टे योग्येतरान्विते व्युत्पत्तिर्स्वीकारे लाघवादयमेव पक्षो युक्त इति भावः । बालोऽपि इष्टविशेषे सिद्धे प्रथमतो व्युत्पाद्यानंतरं जातजिज्ञासो सिद्धे व्युत्पद्यते यतः **नारायणे सिद्धे** प्रमिते सति **तत्र** केशवे ब्रह्मादिप्रवर्तके नारायणे **प्रत्येकं** प्रतिपदं प्रतिवर्णं च **योगवृत्त्या** महायोगवृत्त्या निरतिशयप्रकृत्यर्थप्रत्ययार्थवृत्त्या तिङ्कृत्तद्धितसमासरूपेण चतुर्विधयाऽथ च गुणक्रियाजातियोगेन वृत्तिमत्या शक्त्या **वर्तमानानि** अनन्तवेदपदानि आपिशब्दात् स्वरव्यञ्जनरूपाण्यक्षराणि तथा वाक्यानि महावाक्यानि प्रकरणानि स्थानानि च विष्णोर्विशेषादसाधारण्येन स्ववृत्तिनिमित्तभूतस्य योग्यस्यानन्यवृत्त्या **अनन्तगुणतां** स्वप्रवृत्तिनिमित्तभूतानन्तगुणतां उपलक्षणमेतत् । स्वप्रवृत्तिनिमित्तांनन्तशक्तिक्रियतां च ज्ञापयन्तीति भा इति श्लोक आह । कीदृशः **सर्वशब्दोपलक्षणम्** । कोऽर्थः । यथा भेति वर्णः पदतां प्राप्य अनन्यसाधारणान् गुणानाचष्टे तथैव सर्वे वर्णाः तथैव सर्वाणि पदानि वाक्यादीनि च भगवतो गुणप्रतिपादकानि । उदाहरणतया भेति श्लोकोपन्यासः ( भाधातोरर्थबाहुल्यात् ) । तत्र वर्णस्य गुणवाचित्वं एतन्न्यायेन पदानां च प्रकृत्याद्यर्थभूतगुणवाचित्वं वाक्यस्य प्रधानीभूतविशेष्यानिष्ठासाधारणगुणक्रियादिवाचित्वं, तथा प्रकरणस्य वाक्यसंदर्भरूपस्य प्रधानीभूतसार्वज्ञादिगुणप्रतिपादनाय प्रवृत्तस्य प्राकरणिकगुणवाचित्वं तथा स्थानस्यानेकप्रकरणात्मकस्य महाप्रमेयभूतगणमुद्दिश्य चैकार्थपरत्वात् स्थानिकगुणवाचित्वं एवमध्यायाष्टकशाखोपवेदावान्तरवेदमहावेदानां भगवद्गुणाभिधायकत्वेन भगवत्परत्वं द्रष्टव्यमिति भावः । **अत इति** । यतोऽनन्तवेदा वर्णमारभ्य स्वान्तं भगवत्पराः **अतः विष्णोः परः** सर्वोत्तमोऽन्यो न किं तु विष्णुरेव सर्वोत्तमः । ननु कथमिदं इन्द्रादिशब्दैरिन्द्रादीनां लोके वेदे च व्यवहारात् संकोच एव न्याय्यः । अन्यथा तद्वाचकाभावेन देवतोद्देशककर्मादिविधिर्व्यर्थः स्यादित्यत उक्तं **तच्छब्दा अपि मुख्यतो हरौ यत्** महायोगविद्विरूढिभ्यां **यस्मात्** यस्माच्च **अन्येषु** लक्ष्म्यादिषु **तत्संगाद्** भगवदधीनसातिशयप्रवृत्तिनिमित्तगुणवत्वात्प्रवर्तन्तेऽतो नारायणस्यानन्तवेदपदादिप्रतिपादितत्वं इतरेषां तु समाकर्पादिन्यायेनाल्पेनैव योगेन प्रवृत्तत्वात् कर्मादिविधिश्च न लुप्यत इति भावः ।

---

ल. टि. १. स्वान्तं = वेदपर्यन्तम् ।

## टीका

श्रीमन् त्संदीप्त नाकादुपरि परतमाकुण्ठलोकेषु जीवे
बाह्ये सर्वज्ञ भूमिप्रभृति-च (ज) परमान्ता ( परमखान्ता ) खिलाधारभूत।

( टि० ) हे **भ** श्रीमन् भातीति भस्तत्संबुद्धिरिति व्युत्पत्तिः । १ । हे **आ भ** भा दीप्तौ नाकात्स्वर्गादुपरि उपरिष्टात् **परतमा** ( **वै** ) **कुण्ठलोकेषु** परतमेषु श्वेतद्वीपानन्तासनवैकुण्ठेषु । तथा **जीवे** लक्ष्मीतत्त्वे 'कालो माया मये जीव' इति वचनात् जीवशब्दो लक्ष्मीवाची । अथवा **जीवे** जीवेषु । यथायोग्यं प्रकृताप्राकृतलोकस्थेषु मुक्तामुक्तेषु । 'इमामारभ्य पृथिवीमि'त्यादि वचनात् । एवं प्रकारेणान्तर्गतप्राकृताप्राकृतलोके । तथान्तर्गतल्लोकस्थजीवराशौ ब्रह्माण्डे तथा **बाह्ये** ब्रह्माण्डाद्बहिर्वर्तमाने द्विगुणविशेषाभिधाण्डकटाहतदुत्तर-दशगुणोत्तरोत्तरबाह्यगुणत्रयान्तावरणे तदुत्तरे च सूक्ष्मरूपप्रधाने प्रकृतिसंज्ञे च **संदीप्त** सम्यक् प्रकाशमानेत्यर्थः । तदुक्तं । तन्वा ब्रह्माण्डबाह्यान्तरमधिक-रुचाभासयन् भासुरस्यः ( भा. ता. नि. ९-८८) इत्यत्र । तथा च ब्रह्माण्डा-न्तर्बहिश्चाभासमानेत्युक्तं भवति । **२** । हे **आ भ** भ ज्ञाने । आ=समन्तात् भः ज्ञानं यस्य तत्संबुद्धिः सर्वज्ञेत्यर्थः। ३। हे **आभ** भ आधारे आ समन्तात् भः आधारः आभस्तत्संबुद्धिः । **भूमिप्रभृतिचपरमान्ताखिलाधारभूत** गर्भीकृतपातालादिसप्तककूर्मादिरूपवायुधृतानन्तसहस्रफणैकतमफणाधृतभूमि— प्रभृति च तत् परमान्तं च तदाधाररूपशक्त्यन्तं च तत् अखिलं च सर्वं जगच्च तदाधारभूत परमपुरुषरूपेणेत्यर्थः । ४ । अथवा भूमिप्रभृतिजमिति पठनीयम् । तथात्वे भूमिप्रभृतिजं तत्कार्यभूमिप्रभृति जं=जातं महत्तत्त्वादि-परमान्तं अन्तेऽवशिष्यमाणं परमम् अव्यक्तं यस्य तत्तथोक्तम् । एवं भूता-खिलाधारभूत । तदुक्तं 'य उत्रिधातु पृथिवीं उत द्यामेकोदाधार भुवनानि विश्वा' । 'भर्ता सन्भ्रियमाणो बिभर्ति' 'एको देवो बहुधा निविष्टः ।' 'यस्मिन्निदं सं च वि चैधि सर्वं' 'पृथिव्यादिप्रकृत्यन्तं भूतं भव्यं भवच्च यत् । विष्णुरेको बिभर्तीदं नान्यस्तस्मात्क्षमो धृतौ' इति 'अक्षरमम्बरान्तधृतेः' 'द्युभ्वाद्यायतनं स्वशब्दादित्यादौ । भूमिप्रभृति चेत्यत्र चकारः समस्यमान-पदान्तर्गतोऽतो विग्रहप्रदर्शकवाक्येऽन्यश्चकारः प्रयुक्तः । ५ ।

नित्यं चोदार लोकेष्वगणित विबुधाभीष्ट मोक्षादिदाने
संधाने कर्मणां च स्वत उत रजसः सन्नुपादान(ता) पाद(दौ)॥ ३३८॥

( टि० ) हे **आभ** भ औदार्ये आ समन्तात् भः उदारस्तत्संबुद्धिः । नित्यं चोदार लोकेषु अथवा हे **आभ'** भ आनन्त्ये । आ समन्ताद्भः अनन्तः तत्संबुद्धिः । देशतः कालतो गुणतश्चा**गणित** । ६ । हे **आभ** भोऽभीष्टे । आ समन्तादभीष्ट **विबुधाभीष्ट** । एकान्तभूतब्रह्माभीष्टेत्यर्थः । तदेतत्पुत्रात्प्रेय इति ( बृ. १-४-८ ) श्रुतेः । ७ । हे **आभ** भोऽभीष्टदाने । आ समन्तादभीष्टद । **मोक्षादिरूपाभीष्टदाने** शक्त इत्यर्थः । ८ । हे **आभ** भ संधाने । आ समन्तात् भ संधातः । **स्वत उत रजसः कर्मणां** चशब्दात् तत्साधनानां देहेन्द्रियादीनां संधाने सम्यग्जीवसंबन्धितया स्थापने, समर्थेति शेषः । स्वतः स्वातन्त्र्येण रजसः उत कारणीभूतेन रजोगुणेनेत्यर्थः । तदुक्तं 'एष ह्येव साधु कर्म कारयती' त्यादौ । तथा गीतायां 'रजः कर्मणि भारते' ति । ९ । हे **आभ** भ उपादाने । आ समन्ताद्भ उपादानं यस्य स तथोक्तः तत्संबुद्धिः । **+ सन्नुपादानपाद** 'महतां पादशब्देन सर्वं रूपमुदीर्यत' इति वचनात् सतां मोक्षादिलाभवतां शुभजीवानां उपादानं स्वीकरणं यस्मिन्स तथोक्तः । **सन्नुपादानः पादः** समग्रं रूपं यस्य स तथोक्तः तत्संबुद्धिः । सदुपादेयस्वरूपेत्यर्थः । १० ।

सर्वेषां सज्जनानामतिनिकट सुरैः सेव्य चोरीकरोषि (षि)
त्वं तेषामिष्टमन्यान्नयसि च निखिलांस्त्वं हि नानावतारैः ।
नानाभावेन वाऽथाऽखिलहृदयग संनम्य सद्भिः समस्ता–
द्वैलक्षण्यनेन मु (यु)क्ताधिक सुरनिकरात्सर्वदापि स्वतन्त्र ॥३३९॥

( टि० ) हे **आभ** भ निकटत्वे । आ समन्तात् भ निकटत्वात्सर्वसज्जनानां अतिनिकट । तदुक्तं । 'दूराद्दूरतरं यत्तु तदेवान्तिकमन्तिकात्' । 'तद्दूरे तद्वन्तिके' इति ( ईशा. ५ ) । ११ । हे **आभ** । भ सेव्यत्वे आसमन्तत्वात्सेव्य सुरैः सेव्य । १२ । हे आभ । भ ऊरीकरणे । आ समन्तात् **भ** ऊ (उ) रीकरः स्वीकारकर्ता । त्वं तेषां सज्जनानां ऊरीकरोऽपि स्वीकारकर्ताऽपीत्यर्थः । १३ । हे **आभ** । भ अन्येष्टनेतृताभावे आ समन्तात् **भ** । एकान्तभक्तव्यतिरिक्तमध्यमभक्ताभीष्टनेतः । **त्वमन्यान्निखिलान्**मध्यमभक्तान् **नानावतारैः** मत्स्यादिभि**रिष्टं** मोक्षादि **नयसि च** प्रापयसि च नयतेर्द्विकर्मकत्वात् प्रधानाप्रधानकर्मद्वयोक्तिः ।१४। हे **आभ** भ नानाभावे ।

(ल. टि.) सन्=उत्तम पुरुष । उपादानताद=प्रकृत्युत्पादनत्वप्रद ।

 + टिप्पण्यां तु "तृतीयोऽतिशय इत्यतः दस्यनः"

**आ** समन्तात् **भ** नानाभूत । विशेषबलेन नानारूप । **नानाभावेन चाथाखिलहृदयग** नानारूपेणाऽखिलान्नियम्य हृदयस्थ । तदुक्तं ' आत्मान्तरात्मेति हरिरि ' त्यादौ । तथा ' स वा एष पुरुषोऽन्तरसमय ' इत्यादिना व्रह्मवल्यां, । तथान्तर्यामिब्राह्मणे च । १५ । हे **आभ** भ संपूर्णनातिभावे **आ** समन्तात् **भ** संपूर्णनम्य **सद्भिः** समन्तात् समस्तमपकृष्टं विज्ञाय **संनम्य** संपूर्णनम्य । १६। हे **आभ** । भ वैलक्षण्ये । **आ** समन्तात् **भ** विलक्षण **सद्भिः समस्ता**ज्जीवजडात्मकाद् **वैलक्षण्येना**त्यन्तभेदेन संनम्य सम्यगुपास्य तथा प्रतिपाद्य च । १७ । हे **आभ** भ आधिक्ये । **मुक्ताधिक** । मुक्तेभ्योऽधिकेति विग्रहः । १८ । हे **आभ** । भ स्वातन्त्र्ये । **आ** समन्तात् **भ सर्वदा**पि सृतौ मुक्तौ च **सुरनिकरात् स्वतन्त्र** । १९ ।

तस्मादानन्दपूर्णानवरतवचनाशेषपूज्यार्चकानां
नुक्तौ ( सुज्ञा ) विस्तारकर्तस्तदितरकुमर्तान्नाशयस्ये (स्वै) व नित्यम् ।
स्वामिन्नद्धोभयेषां सततमपि विभो निश्चलस्वामिभाव
ह्याम्नातो नैव चान्यः ( त्पः ) कथमपि भवतः स्वामितां हन्तुमीष्टे ॥२४०॥

( टि० ) हे **आभ** । भ आनन्दे । **आ** समन्तात् **भ** आनन्दपूर्ण । **तस्मात्**स्वातन्त्र्यादित्यर्थः । २० । हे **आभ** । भ संपूर्णततवादे । आ समन्तात् भ संपूर्णव्यात सर्वशब्दाविषयताक । कोऽर्थः । सर्वैः शब्दैर्निरतिशययोगेन सर्वदा प्रतिपाद्य । अत एव श्रुतिगीतायाम् ' कं वा विधत्ते कां वा निषेधति स्तुतिमात्रा एव ते स्युरि 'त्याद्युक्तम् । सृष्टिस्थितिकाले भगवत्परैव श्रुतिरवान्तरस्वतात्पर्यविषयतया द्रव्यदेवताकालकर्मादिकं प्रतिपादयति प्रलये तु तेषामभावात् कं प्रतिपादयेत् भगवन्तमेव प्रतिपादयति । **अनवरतवचने**त्यर्थः । **अनवरतं**=सर्वदा **वचनं** वेदेन=प्रतिपादनं यस्य स तथोक्तस्तत्संबुद्धिः । २१ । हे **आभ** । भ पूज्यभावे । **आ** समन्तात् भ पूज्य । **अशेषपूज्ये**त्यर्थः । २२ । हे **आभ** । भ विस्तारे । **आ** समन्तात् भ विस्तृत । **अर्चकानां सुज्ञाविस्तारकर्तः** । सुज्ञा शोभनं ज्ञानं अथवा पूजा तदुभयविस्तारकर्तः। ज्ञानपूर्वकं भक्तानां त्वत्पूजासंपादकेत्यर्थः । भक्तेभ्यो ज्ञानं दत्त्वा पूजासाधनद्रव्याणि च दत्त्वा त्वत्पूजायातं ( जां तं ) त्वमेव विस्तारयसीत्यर्थः । तदुक्तं 'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किंचनारे महामर्कं मघवं चित्रमर्च'ति श्रुतौ । २३ । हे

**आभ** । भ विनाशने । **आ** समन्तात् **भ** विनाशक । **तदितरकुमतीन्** भक्तेतरकुमतीन् **नाशयस्व** पूजाविघ्नकर्तृत्वादिति भावः । २४ । हे **आभ** । भ स्वामित्वे । आ समन्तात् **स्वामिन् अद्धा** प्रत्यक्षं सत्यं च यथा स्यात्तथा उभयेषां । भक्तानां स्वामिनित्यर्थः । तदुक्तं ' उभयस्य रोज ' इति श्रुतौ । २५ । हे **आभ** । भ निश्चले भावे । **आ** समन्तात् **भ निश्चल-स्वामिभाव** । यस्य भगवतः स्वामिता सृतौ मुक्तौ च सतीत्यर्थः । २६ ।

तस्मादुद्गेय सर्वैरथ च कुमतयो नैव गायन्ति तं (ये) त्वां
तेषां संमोहकर्तर्निखिलहृदयसंचारिरूपासुरांस्त्वम् ।
सर्वेज्ञोऽहं न चान्यो मदिति निगदतो दारयन्वीरसिंहा (ह)
ना (ह्या?) लोच्ये (च्ये) त्थं प्रमाणैर्विधिभवमुखरैः सर्वसौन्दर्यसार ॥३४१॥

( टि० ) हे **आभ** । भ उद्गाने । आ समन्तात् भ **उद्गेय** । कथमपि अन्यः भवदन्यः उद्गीतः उत्कृष्टत्वेन गीतः वेदादौ प्रतिपादितो **नैव** यस्मात् यस्माच्च भवतः स्वामितां कथमपि कोऽपि हन्तुं नेष्टे न समर्थः । तस्मात्सर्वैर्ब्रह्मादिभिः सर्वैर्वेदादिभिः कृत्वो ? द्गेयेत्यर्थः । २७ । हे **आभ** । भ संमोहने **आ** समन्तात् **भ** कुमतिमोहक । ये कुमतयः त्वां उत्कृष्टत्वेन न मायन्ति तेषां संमोहकर्तरित्यर्थः । २८ । हे **आभ** । भ संचारे । **आ** समन्तात् भ । निखिल हृदयसंचारिरूपं यस्य एवंभूतेत्यर्थः । २९ । हे **आभ** भ विदारेण । आ समन्तात् भ विदारक । सर्वज्ञोऽहं मदन्यो जगदीश्वरो नास्तीति निगदतोऽसुरान् त्वं विदारयन् वीरसिंह वीरश्रेष्ठ वर्तस इत्यर्थः । तदुक्तं 'तानहं द्विषतः क्रूरानि'त्यादौ । ३० । हे **आभ** । भ आलोचने । **आ** समन्तात् **भ** । **विधिभवमुखरैः** इत्थं सर्वोत्तमत्वादिना प्रकारेण **प्रमाणै**-र्वेदादिभिः **आलोच्य** सम्यग्विचार्येत्यर्थः । ३१ । हे **आभ** । भ सौन्दर्ये । **आ** समन्तात् **भ सर्वसौन्दर्यसारित्यर्थः** । ३२ । इति सर्वद्वात्रिंशत्संख्या-कभवर्णप्रमेयमुदीरितमित्यर्थः ॥ ७८ ॥

(ति०) .... **भा** कान्तौ निखिलकान्त .... अत्र सर्वत्र भकारे प्लुतो बोध्य इति ।

---

( ल. टि. ) वीरसिंहानिति पाठे तु असुरानित्यत्रान्वयः ।

( ल. टि. ) ति. टिप्पण्यां २८ भा. इति वर्णा गृहीताः ।

दीप्तौ ज्ञाने भ आधारे भ भ औदार्य एव च ।
संधाने भ उपादाने निकटत्वे च कथ्यते ।। ३४२ ।।
भ सेव्यत्वे च विद्वाद्भिरूरीकरण एव च ।
संपूर्णनतिभावे भा नयने नमने तथा ।। ३४३ ।।
वैलक्षण्ये तथाऽधिक्ये स्वातन्त्र्ये भ उदीर्यते ।
भ आनन्दे भ संपूर्तौ (र्ण) ततवादेऽपि कथ्यते ।। ३४४ ।।
पूज्यभावे भ विस्तारे भ विनाशन ईर्यते ।
स्वामित्वे निश्चले भावे भावे उ(षू) द्वान एव च ।। ३४५ ।।
संमोहने च (भ) संचारे भा विदारण ईर्यते ।
आलोचने भ सौन्दर्य इति सर्वविदीरितम् ।। ३४६ ।। ७८ ।।

( भ० ) एवं समान्यतो वेदा भगवदनन्तगुणक्रियाभिधायिन इति प्रतिपाद्य इदानीम् अशेषाण्यपि वैदिकपदानि प्रत्येकं योगवृत्त्या प्रवर्तमानानि भगवतोऽनन्तगुणतां विशेषादेव ज्ञापयन्तीत्याशयेनोपलक्षणतया भशब्देनैव पुनः पुनः संबोध्य स्तौति । .... भ आधारे । भूम्यादिप्रकृत्यन्ताखिलाधार । ३ । भा औदार्ये । अगणितविबुधाभीष्टमोक्षादिदाने उदार । ४ । भ संधाने । अशेषकर्मणां संधानकर्तः । ५ । भ उपादाने । प्रकृत्याद्युपादानत्वप्रद । ६ । .... भ ऊरीकरणे । देवेष्टाङ्गीकारिन् । ९ । भ नमने अन्यान् सर्वान् नानावतारैर्नेतः नानाभावेन नेतर्वा । १० । भ नमने सद्भिर्नभ्य ।११।.... भ संपूर्तौ । संपूर्ण ।१६। भ संततवादे । अनवरतवचन । संततवेदोद्गिरण । यथोक्तं ' अखिला उद्गीर्यन्तेऽनिशं यतः इति । १७।.... भ विस्तारे । मुक्तौअर्चकस्वरूपाविस्तारकर्तः । ' अन्यन्नवतरं कल्याणतरं रूपं कुरुत ' इति श्रुतेः । १९ ।.... भ स्वामित्वे । सदसदुभयस्वामिन् । २१ । ( अत्र २८ भवर्णागृहीताः ) ।। ७८ ।।

( ना० ) अथैकाक्षरविद्युन्मालाख्यवृत्तविशेषेण स्तुवन् तस्यानन्तवेदगतानन्तसकलवर्णप्रतिपाद्यत्वेऽप्येकैकवर्णस्यानन्तगुणप्रतिपादकत्वं सूचयति भाभेत्यादिभिः द्वात्रिंशद्भिर्भाशब्दैः । अष्टाक्षरपादचतुष्टयोपेतं वृत्तम् । तदुक्तं पिङ्गलसूत्रे । **विद्युन्माला** मौगाविति । द्वौ मगणौ द्वौ गुरू यस्याः पादे सा विद्युन्माला कथिता । मगणस्य त्रिगुरुत्वात् । द्वयोर्मगणयोः षड्गुरवः अन्यौ च

द्वावित्यष्टौ गुरवः । श्रुतबोधेऽप्युक्तम् ' सर्वे वर्णाः दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः। विद्वद्वेदैर्वाणावाणि व्याख्याता सा विद्युन्माला'इति। अत्र टीकाकारैस्तास्ता भाधातवो भिन्नार्थप्रतिपादका उदाहृताः । तेन तत्तद्गुणप्रतिपादकः स स धातुः । भातीति भाः इति सर्वत्र विग्रहः । क्विबन्ताश्च सर्वे शब्दाः । तदुक्तं ' दीप्तौ ज्ञाने भ आधारे भ भ औदार्य एव च । संधाने भ उपादाने निकटत्वे च कथ्यते ॥ भ सेव्यत्वे च विद्वद्भिरूरीकरण एव च । भ पूर्तौ नयने भावे वैलक्षण्ये तथाऽधिके ॥ कान्तौ शान्तौ रतौ दान्तौ स्वातन्त्र्ये भ उदीर्यते । भ आनन्दे भ संभूतौ ततौ वादे च कथ्यते । पूज्यत्वे भ भ विदारे (च?) भ विनाशन ईर्यते ॥ भ आवृतौ च नियमे बन्धने मोचनेऽपि च ॥ आलोचने भ सौन्दर्ये इति सर्वविदीरितम् ॥ तथा च हे **भा** प्रदीप्त,१। सर्वज्ञ, २ । सर्वाधार, ३ । उदार, ४ । संधानकर्तः, ५ । सर्वस्याप्युपादातः, ६ । सर्वनिकट, ७ । सर्वसेव्य, ८ । सर्वाङ्गीकर्तः, ९ । सर्वत्रपूर्ण, १० । सर्वनेतः, ११ । सर्वसत्ताप्रद, १२ । सर्वविलक्षण, १३ । सर्वाधिक, १४ । कान्त, १५ । शान्त, १६ । क्रीडमान, १७ । दमोपेत, १८ । स्वतन्त्र, १९ । पूर्णानन्द, २० । संभूत, २१ । विस्तृत, २२ । वक्तः, २३ । सर्वपूज्य, २४ । दैत्यविदारक, २५ । अनिष्टविनाशक, २६ । सर्वावरक, २७ । सर्वनियामक, २८ । बन्धक, २९ । मोचक, ३० । सर्वसाक्षात्कारवन्, ३१ । परमसुन्दर, ३२ । नोऽवेति पूर्वोक्तेन संबन्धः । स्पष्टत्वाच्छिष्यैरेवं सुविज्ञेयमित्याशयेनानुक्तमर्थान्तरमप्युच्यते । तथा हि भानां नक्षत्राणां आभा **भाभा** । भेषु आभातीति भाभश्चन्द्रस्तस्य आभा **भाभाभा** । भान्याभान्ति यस्मिन्निति भाभं गगनं । तत्र आ ईषत् आभाति सा **भाभाभा** विद्युत् । तस्याः आभा **भाभाभाभा** । भेषु आभान्तीति भाभाश्चन्द्रः स च भानि च **भा भाभानि** तेषामभाः अप्रकाशो येनेति **भाभाभाभाः** सूर्यस्तस्याआभा **भाभाभाभाभा** ततस्त्रयाणां द्वन्द्वे च चतुर्दशभाशब्दरूपसमासवाक्यस्य नक्षत्रचन्द्रवियदादित्यप्रभारूपाश्चत्वारोऽर्थाः । ताः आभान्त्यनयेति तादृशी आभा दीप्तिर्यस्येत्येतादृशः षोडशभाशब्दार्थः परमात्मा । 'तमेव भान्तमनुभाति सर्वं । तस्य भासा सर्वमिदं विभातीति ' ( काठ० ) श्रुतेः । ' यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमि'ति (गीता १५-१२) स्मृतेश्च । दिव्यतेजसां भगवत्तेजोधीनत्वोक्त्या भौमतेजसोऽग्नेस्तदधीनत्वं कैमुत्यसिद्धमिति भावेनाऽत्र न तस्य पृथगुपादानं

कृतम् । अथवा एतेषां चतुर्णामाभा न भान्ति यस्मिन्निति समासः । इतरतेजोभिरप्रकाश्य इत्यर्थः । तदुक्तं ' न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरि'ति ( काठ ) श्रुतौ । इति षोडशभाशब्दात्मकपूर्वार्धस्यार्थः । भानि आ भान्ति यस्मिंस्तत् **भाभं** गगनं । तस्मादाभाति प्रकाशते प्रादुर्भवति स **भाभाभा** वायुः । तस्मादाभातीत्यग्निः । तस्मादाभान्तीत्यापः । ताभ्य आभातीति पृथिवी । तस्या आभान्तीत्यौषधयः । ताभ्य आभातीत्यन्नं । तस्मादाभातीति पुरुषः । ' आकाशाद्वायुः वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः' इति ( तै. उ. ) श्रुत्युक्तोत्पत्तिक्रमेणोत्पन्नमाकाशमारभ्याष्टमः पुरुषः नवभिर्भाशब्दैरुक्तः । गगनस्य भाशब्दद्वयेनोक्तत्वात् । तदुत्तराणां सप्तानां सप्तभिर्भाशब्दैरुक्तत्वात् । ततः पुनर्**भाभं** गगनं तस्य **आभा** प्रादुर्भावो यस्मादिति बहुव्रीहिणा **भाभाभः** अहंकारस्तस्यापि **आभा** यस्मादिति महत्तत्त्वम् । तस्यापि **आभा** यस्मादिति गुणत्रयम् । तस्यापि **आभा** यस्या इति सा मूलप्रकृतिः । भूतजनकपरंपरया चतुर्थस्थानापन्ना प्रकृतिः षड्भिर्भाशब्दैरुक्ता । तयोर्द्वन्द्वे कृते तु पञ्चदशभाशब्दार्थः प्रकृतिः पुरुषश्च । तयोराभा प्रादुर्भावो यस्मात्स तयोक्तः इति षोडशभाशब्दात्मकसमस्तपदार्थः प्रकृतिपुरुषयोरुत्पत्त्यादि नियामकत्वेनोक्तो भवति । यद्यपि वाच्यवृत्त्या प्रकृतिपुरुषयोर्द्वयोरेवोत्पादकः प्रतीयते तथापि तयोरुक्तरीत्या जन्यजनकपरंपराप्रना(णा?)डीमुखेन निर्देशात्सर्वेषामपि प्रकृत्यादिपुरुषान्तानामुत्पादक इत्यर्थाल्लभ्यते । अनया परंपरयोत्पन्नः पुरुषोऽस्माद्रुत्पन्न इत्युक्ते परंपराप्रविष्टपदार्थानामपि स एव कारणं ते पदार्थाः अवान्तरकारणरूपाः स कर्ता एते उपादानरूपा वेति सिद्ध्यति । इत्युत्तरार्धस्यार्थः ।। ७८ ।।

२२ भ उग्रभावे । ( अन्ये टीकोक्तार्थका भागवते (१०-४-१३) विदितोऽसि भवान् इत्यत्र सत्यधर्मतीर्थीये २८ भाः गृहीताः ) ( याद्०) भा दर्शने अशेषजनकृतकर्मसाक्षिन् । २७ । भा कीर्तने सुजनसंकीर्त्य २८ । भा कथने ब्रह्मादिकथक । २९ । भा स्मृतौ । भक्तस्मृत । ३० । भा श्रवणे भक्तश्रुत । ३१ । भा आह्लादने भक्ताह्लादकारक ।। ३२ ।।

**मूलम्**

**नैव परः केशवतः परमादस्मात्समश्च सुकेशवतः ।**
**सोऽयं शपथवरो नः शश्वत्संधारितः सुशपथवरोऽनः ।।७९।।**

( पद० ) **न । एव । परः । केशवतः । परमात् । अस्मात् । समः । च । सुकेशवतः । सः । अयं । शपथवरः । नः । शश्वत् । संधारितः । सुशपथवरः । अनः ॥ ७९ ॥**

## टीका

अतो न केशवादन्यः परोऽस्ति गरुडध्वजात् ।
कश्चेशश्च विधीशौ तौ सेव (वर्त)यन्स हि केशवः ॥ ३४७ ॥
समश्च तेन नान्योऽतः स हि सर्वेश्वरेश्वरः ।
सुखगेन्द्रः सुपर्णो हि तद्वान् स्याद्गरुडध्वजः ॥ ३४८ ॥
को गस्थाने समुदिष्टस्तृतीयोऽतिशये यतः ।
अर्थोऽयं श्रुतियुक्तिभ्यां पूर्वं सुप्रतिपादितः ॥३४९॥
शपथस्य बलेनाऽसौ सोऽयमर्थोऽवधार्यते ।
सुशं विष्णुः....सुखं तत्पनर्थेद्वचनो ? ह्यनः ॥ ३५० ॥
मोक्षद(दः) श्रीहरि ज्ञा(ज्ञा) नदात्रा (ता) चार्यवरो ह्यसौ ॥७९॥

( टि० ) **अस्मात्** पूर्वोक्ताच्छ्रुत्यादिप्रमाणात् **अस्मात्** वर्णितात् । **केशवतः** कश्च ईशश्च विधीशौ तौ सेवयन्=सृष्टिसंहाररूपां स्वसेवां ताभ्यां कारयन् यः स केशवस्तस्मात् **परः** उत्तमः अन्यो **नैव** किं तु स एव सर्वोत्तम इत्यर्थः । पराभावे समः किं न स्यादित्यतः सममपि निषेधति **सम** इति । **समश्च** तेन केशवेन **नैव** अतः स हि=स एव सर्वेश्वरेश्वरः । कथंभूतात्**परमात्** केशवतः । **सुकेशवतः** कस्य कस्यानवत्वात् केति खग्रहणम् । तया तृतीयोऽतिशये इत्यतः गस्थाने ककारः । प्रातिलोम्येन पठितः । तथा च नामैकदेशे नामग्रहणमिति न्यायात् खशब्देन खगशब्दो ग्राह्यः । तथा च सुखगेशवत इति पठितव्ये छन्दोभङ्गभयात् सुकेशवत इति पठितम् । एवं सति छन्दोऽनुकूलितम् । अर्थस्तु सुखगेन्द्रः ( शः ) सुपर्णः स विद्यते यस्य स सुखगेन्द्र ( श ) वान् तस्मात् । गरुडवाहनात् गरुडध्वजादिति चोक्तं भवति । उभयथाऽपि मतुपो घटनात् । **नः** अस्माभिः **शश्वत्** सदा **संधारितः** सम्यगवधारितः **सोऽयं** सर्वोत्तमत्वादिरूपोऽर्थः । **शपथवरः**

(ल.टि.) १ तर्कितपाठः—सुशं विष्णुः पश्यते यैस्तेषु मुख्यो वरो ह्यनः ।

शपथस्य वरं बलं यस्य स तथोक्तः । 'नास्ति नारायणसमं न भूतं न भविष्यति । एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्' ॥ 'सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः । विष्णोर्माहात्म्यलेशस्य विभक्तस्य च कोटिधा ॥ पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा । नैकांशसममाहात्म्याः श्रीशेषब्रह्मशंकराः ' इति । ' सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते । वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ' इत्यादिशपथबलेन सोऽयमर्थोऽत्रधार्यत इत्यर्थः । कीदृशः। सोऽयमर्थः=नारायणसर्वोत्तमत्वादिरूपः । **अनः** मुख्यप्राणः **सुशपथवरः** सुष्टु शं सुशं सुसुखं 'ज्ञानज्ञानः सुखसुखः सविष्णुः परमा(मो?)क्षरः ' इति प्रमाणात् सुशं विष्णुः स पथ्यते प्राप्यते यैः ते सुशपथाः । पथ गताविति धातोः । सुशपथेषु वरो मुख्यो यस्मिन्विषये सुशपथवरः । **मोक्षद-श्रीहरिज्ञानदात्राचार्यवरो ह्यसौ** । कोऽर्थः । यस्य भगवत्सर्वोत्तमत्वादिरूपार्थस्योपदेष्टृषु जीवेषु मध्ये मुख्यप्राणः श्रेष्ठः । तेन मुख्यतः सर्वोत्तमत्वादिरूपोऽर्थः प्रतिपाद्यतेऽतः स एव मुख्याचार्यः । अन्ये तदनुग्रहेणैव तदर्थं ( र्थे ? ) प्रतिपादकाः अतोऽमुख्या अतस्तस्यैव भगवत्प्राप्तिः पूर्णा अन्येषां त्वेकदेशत इत्यर्थः । तदुक्तं ' प्राणो वा आशाया भूयान्न प्राणाद् भूयान् प्राण एव भूयांस्तस्माद्भूयान्नामे'ति प्राणस्याविकारित्वु (स) सर्वोत्तमत्वोक्तेः॥७९॥

( ति० ) सुखकेशवतः तृतीयोऽतिशय इत्यतः केकारे गेकारो बोध्यः तथा च सुशोभना ये खगास्तेषामीशः सुपर्णः सोऽस्यास्ती ति तद्वान् तस्मात् **असौ अनः** मुख्यप्राणात्मक आचार्यवर्यः **सुशपथवरः** सु सुष्टु शं सुखं यस्य तस्य हरेः पथवरो मार्गश्रेष्ठो मोक्षो वा यस्मात्स तथेति ॥ ७९ ॥

( भ० ) **परमात्** सर्वोत्तमात् **सुकेशवतः** सुकेशः सुगेशः गस्य कः तृतीयोऽतिशये । तथा च गच्छन्त्याकाश इति गाः खगाः । शोभना ये खगास्तेषामीशो गरुडस्तद्वतः । गरुडध्वजादिति यावत् । .... सोऽयमर्थः **नोऽस्माकं शपथवरः** शपथस्तत्परशुधारणादिरूपस्तस्य वरं बलं यस्य स तथोक्तः शपथबलेन सिद्ध इति यावत् । ....कुत एषोऽर्थो युष्माभिः शपथेनावधार्यत इत्यत उक्तं–**अनः सुशपथवर इति** । यतः **अनो** मुख्यप्राणः **सुशपथवरः** सुशः शोभनसुखो विष्णुस्तत्प्राप्त्यै यः पन्थास्तद्ज्ञानलक्षणः स एभ्यो भवति ते सुशपथाः भगवद्ज्ञानोपदेशकाः रुद्रादयस्तेषु वरः श्रेष्ठस्तस्मात् । तथा च मुख्यप्राणस्य मोक्षप्रदश्रीहरिज्ञानदातृषु श्रेष्ठत्वादस्माकं च तदवतारत्वाच्छपथेनाप्येवमस्माभिरवधार्यत इति भावः ॥ ७९ ॥

( ना० ) **सोऽयमुक्तिरूपोऽर्थः** । **नोऽस्माकं शपथवरः** सर्वशपथाधिकः अत एव **अनः** प्राण इव संधारितः ।.... **नोऽस्माकं अनः** प्राणरूपः सर्वथाऽपरित्याज्य इत्यर्थः । .... **सुशपथवरः** शोभनं दुःखासंभिन्नं शं सुखं सुशं तस्य पन्थानस्तेषु वरः श्रेष्ठः । अयमेव मुख्यो मोक्षमार्गः ॥ ७९ ॥

## मूलम्

**कृष्णकथेयं यमिता सुखतीर्थेनोदिताऽन (ऽने) ने यं यमिता ।**
**भक्तिमता परमेशे सर्वोद्रेकात्सदानु( व )ताऽऽप रमेशे ॥८०॥**

**( पद० ) कृष्णकथा । इयं । यमिता । सुखतीर्थेन । उदिता । अनने । ( अनेने ) । यं । यं । इता । भक्तिमता । परमेशे । सर्वोद्रेकात् । सदानु(व)ता । आप । रमेशे ॥ ८० ॥**

## टीका

इति स्वानन्दतीर्थाख्यमुनिना यमकात्मना ॥ ३५१ ॥
मानैर्नियम्यते चाऽपि कृष्णस्येयं कथेत्यलम् ।
परमेशे रमेशेऽथ ह्यनस्य स्वस्य नेतरि ॥ ३५२ ॥
भक्त्यैवोक्ता न चातुर्यख्यापनाय कथंचन ।
सदानुता सदास्तोत्रा कथा स्वानन्द (धीयं च) सद्विदा ॥३५३॥
प्राप्तैषा(प्तेष्वा) कथिता नित्यं स मयाऽऽप न संशयः ।
अध्याहारस्स इत्यस्य यत्तदोर्नित्ययोगतः ॥ ३५४ ॥
यमित्येष द्वितीयोर्ण ईकाराकारभागवान् ।
ईकारः श्रीरवो यस्मादकारो हरिवाचकः ॥ ३५५ ॥
अतः श्रीविष्णुरित्युक्तं भवत्यत्र न संशयः ।
अकयप्रेति वाक्याद्वा यकारो विष्णुवाचकः ॥ ३५६ ॥
अथवा यं यमप्येषा कथाऽतीव सुदुर्लभा ।
कंचित्कंचिन्नरं प्राप्ता नैव सर्वं नरं भुवि ॥ ३५७ ॥
कश्चिदर्थे च यच्छब्दः इति वाक्यात्तथासती ।
कथा प्राप रमेशं यद् विषये सप्तमी मता ॥ ३५८ ॥

सर्वोत्कर्षात्कथायाश्च कृष्णस्याऽत्मन एव च।
शब्दराशिषु देवेषु भक्तेषु च यथाक्रमात् ॥३५९॥८०॥

( टि० ) **इयं कृष्णकथा यमिता** यमं यमकं इता प्राप्ता **यमिता** शकन्ध्वादिवत् पररूपम् । यमकात्मना निर्मिता । **यमिता** नियमिता मानै-रिति शेषः । तथा च प्रमिता चेयं कृष्णकथा न तु कविकाव्यवदुत्प्रेक्षामूला एवंभूता **सुखतीर्थेन** स्वानन्दतीर्थाख्यमुनिना कृष्णस्येयं कथा अलं मानै-र्नियमिता । **यम्** आनन्दतीर्थम् **इता** नित्यं प्राप्ता एषा कथा सः आनन्दतीर्थः । **यम्** इया सहितः अः यः तं **यं** श्रीसहितं विष्णुं । यद्वा अकयेत्यभिधानात् **यं** यकारवाच्यं आप प्राप । कीदृशी **सुखतीर्थेन उदिता** कथिता । कीदृशेन । **परमेशे** सर्वोत्कृष्टेशे रमानाथे **अनने** अनं मुख्यप्राणं नयतीत्यननस्तस्मिन् अनस्य नेतरि । **भक्तिमता** तथा च भक्त्यैवोक्ता न तु चातुर्यख्यापनाये-त्युक्तं भवति । पुनः कथंभूतेन **सदानुता** सदा नौतीति सदानुत् तेन सदा स्तोत्रा । अथवा कीदृशी कृष्णकथा **सदानुता** सदा स्तोत्रा । अथवा कीदृशी कृष्णकथा **सदानुता** सदास्तोत्रा सुखतीर्थेन कथासु आनन्दसाद्रिदा= कथारसविवेकं जानता **सर्वोद्रेकात्** कृष्णस्य सर्वेषु देवेषु उद्रेकात् सर्वोत्तम-त्वात् तथा भक्तेषु सर्वेषु स्वस्य सर्वोत्तमत्वात् तथा कथासु कृष्णकथायाः सर्वोत्तमत्वात् **सदानुता सदा** सततं नित्यं स्तुता सती सदा नित्यं **रमेशे** रमेशविषये रमेशमुद्दिश्येति यावत् । **उत् इता** प्राप्ता । अथवा **सुखतीर्थेन** आनन्दतीर्थेन **उदिता इयं कृष्णकथा यंयमिता** यं कंचनासामान्यं कंचिन्नरं प्राप्ता न सर्वनरं भुवि ' कश्चिदर्थे च यच्छब्द ' इति वाक्या-द्यच्छब्दः किंशब्दार्थे । कुतः । यतः एषा कथाऽतीव दुर्लभा ॥ ८० ॥

( ति० ) **अनने । सुखतीर्थेन** मोक्षोपयोगिशास्त्रकृता मोक्षसुगमोपाय-दर्शकेन वा श्रीमहाचार्यवर्येण ।........एवं च **आपे**त्यस्य परमेशे तद्विषये सा कथा आपेत्यन्वयो बोध्य इति ॥ ८० ॥

( भ० ) **अनने** अनस्य मुख्यप्राणस्य नेतरि । नयतेर्डः । ........ तमेव **सदा नुता** स्तुवता **सुखतीर्थेन**........**यमिता** यमकात्मना निबद्धा । मानैः संबद्धा वा । .... **इयं च कथा यं यं** अत्र यमिति द्वितीयो वर्णो योनिर्मम इत्यत्रेव ईकाराकारभागवान् । तथा च श्रीविष्णुमित्यर्थः । अथवा यशब्द एव विष्णुवाची । 'अकयप्रविसंभूमसकहा विष्णुवाचका' इति वचनात् ।

तथा च **यं** विष्णुं । **सर्वोद्रेकात्** इतरसर्वशब्दराश्यपेक्षयोत्कृष्टत्वेन **इता** प्राप्ता । तत्प्रतिपादकेति यावत् । स इत्यध्याहार्यम् । यत्तदोर्नित्यसंबन्धात् । **स** विष्णुर्**मया आप** आपे प्राप्त इत्यर्थः । एषा च **रमेशे** विषयसप्तमीयम् । रमेशामिति यावत् । **आप** प्राप । तस्मिन् समर्पितेत्यर्थः ॥ ८०॥

( ना० ) **परमेशे** उत्तमस्वामिनि **रमेशे** लक्ष्मीपतौ सर्वोद्रेकात् सर्वोत्तमत्वात् **भक्तिमता** अत एव **सदानुता** सदा नौतीति सदानुत् तेन सर्वदा स्तुवता । णु स्तुतौ । तथाविधेन **सुखतीर्थेन** आनन्दतीर्थेन **उदिता** प्रोक्ता **इयं कृष्णकथा यमिता यमाः** यमकानि संजाता यस्याः सा यमकोपेतश्लोकैरुपनिबद्धा इति यमितेति नोच्यते किंतु यशब्दवाच्यं **यं** श्रीविष्णुं प्राप्तेति कृत्वा । ........तथा चान्वर्थनामत्वादेव **यं** श्रीविष्णुम् आप प्राप्तेत्यर्थः मया समर्पिता तेनाङ्गीकृता चेति भावः ॥ ८० ॥

( यादु० ) **नुवता** नुः स्तोत्रं तान्नित्यमस्तीति नुवन् तेन नुवता स्तोत्रा । **अनेने** अनस्य स्वस्य इने नेतरि ।

## मूलम्

**इति नारायणनामा सुख ( ऽत्र क ) तीर्थ ( र्थे ) ( सु ) पूजितः**
**सु ( न ) ना ) रायणना मा । पूर्णगुणा ( णैर ) धिक पूर्ण-**
**ज्ञानेच्छाभ ( श ) क्तिभिः स्वधिक पूर्ण ( पूर्णः ) ॥ ८१ ॥**

**( पद० ) इति नारायणनामा । सुखतीर्थ ( र्थ ) सुपूजितः । सु ( ना ) रायणना मा । पूर्णगुण । ( पूर्ण । गुणैः ) अधिक पूर्णज्ञानेच्छाभ ( श ) क्तिभिः । स्वधिक पूर्ण ( र्णः ) ॥८१॥**

## टीका

इत्युक्तेन प्रकारेण श्रीनारायणनामवान् ।
रमाजशंकरोमादिसुराधारः परः पुमान् ॥ ३६० ॥
त्वमस्माभिः सुसंपूर्णज्ञानेच्छाभक्तिभिः प्रभो ।
पूजितोऽत्र सदानन्दतीर्थं मामेव मे प्रभो ॥ ३६१ ॥
पूर्ण सर्वगुणैर्नित्यं सर्वस्मादधिकाऽञ्जसा ।
स्वधिक ब्रह्मवाय्वादिदेववृन्दसुबोधन ॥ ३६२ ॥

यत् (या) सदा हरिपूजार्थे सेवेच्छा मारुतस्य यत् ॥ ॥ ८१ ॥

(टि०) **इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं यमकभारतं मूलमेतच्छ्लोकान्तं समाप्तम्** । एतच्छ्लोकार्थः । **इति** उक्तेन प्रकारेण **नारायणनामा** श्रीनारायणनामवान्, कीदृशः **सुरायणना** सुराणामयनश्चासौ ना च स तथा । **रमाजशंकरोमादिसुराधारः परः पुमान्** ॥ एवंभूतस्त्वं **अधिकपूर्णज्ञानेच्छाभक्तिभिः पूजितः** सन् **सुखतीर्थ** आनन्दतीर्थं **मा** मां एवमेव=अनादि (त) कालमारभ्यैतत्कालपर्यन्तं यथा तथैव सदा अनवधिकोत्तरकालेऽपि **अव** रक्षेति योग्यक्रियाऽध्याहारः । **पूर्णगुण** गुणैः पूर्ण तत्संबुद्धिः । **स्वाधिक** नित्यं सर्वस्मादञ्जसाऽधिक । **पूर्ण** पि (पृ) पुरति ते पुरः तैर्नम्यते प्रह्वीभावेन स्तूयते स पूर्णस्तत्संबुद्धिः तात्पर्यमाह **ब्रह्मादिवाय्वादिदेवबृन्दसुबोधनेति** । ननु सुखतीर्थेन जीवन्मुक्ताधिपेन एकान्तभक्तोत्तमेन मामवेति कथं प्रार्थ्यते इति अतस्तदभिप्रायमाह यत्सदेति। मारुतस्य मरुत्पुत्रस्य पूर्णप्रज्ञाचार्यस्य सदा हरिपूजार्थे सेवेच्छा यद्यस्मात्तत्स्मादवनप्रार्थनं युक्तमित्यर्थः ॥ ८१ ॥

( ति० ) **स्वाधिकपूर्ण** अत्यन्तमधिकेषु ब्रह्मवाय्वादिषु पूर्ण तदन्तर्व्याप्त ॥ ८१ ॥

( भ० ) **स्वाधिक पूर्ण**........हे गुणैः पूर्ण । **स्वाधिक** सु अञ्जसा सर्वस्मादधिक । **पूर्ण** पूः प्रवाहो ब्रह्मादिदेवसमूहस्तं नयति ज्ञापयतीति **पूर्णः** तेषां ज्ञानप्रदः । नयतेर्डः । उपपदान्तलोपश्च । अथवा पुरः पूर्णाः महान्तो ब्रह्मादयस्तेषां णं बलं ज्ञानरतिर्यस्मात्स पूर्णः । तस्य संबोधनमिदं । अथवा **स्वाधिक पूर्णेति** समस्तमेकमेव पदम् । स्वाधिका ये ब्रह्मादयस्तेषां पूरं समूहं नयतीति तथोक्तेत्यर्थः । यथोक्तं पूर्वटीकायां '**सर्वस्मादधिकाञ्जसा । स्वाधिक ब्रह्मवाय्वादिदेवबृन्दसुबोधनेति**' । यादुपत्ये तु '**स्वाधिकपूर्णः**' इति प्रथमान्तपाठमनुसृत्य स्वाधिकेषु ब्रह्मादिषु पूर्णः संनिहित इति व्याख्यातम् ।........त्वं **अधिकपूर्णज्ञानेच्छाभक्तिभिः** । अधिकपूर्णाः ज्ञानेच्छाभक्तयो येषां ते तथोक्तास्तैरस्माभिः **इति** उक्तप्रकारेण **सुपूजितः** सन् **कतीर्थम्** आनन्दतीर्थं **मा** मां अव रक्षेत्यर्थः । अत्र इच्छा नाम हरिपूजेच्छैव विवक्षिता । गुरावात्मनि बहुवचनमिति भक्तिभिरिति बहुवचनम् । यादुपत्ये तु **कतीर्थं**

---

१. पृ पालनपूरणयोर्लट् बहुवचनम् ।

**सुपूजित** इत्येकपद्येन पाठमनुसृत्य स्वाधिकपूर्णाभिर्ज्ञानेच्छाभाक्तिभिः कतर्थेन सुखतीर्थेन मया सुपूजित इति व्याख्यातम् । इत्यशेषमतिमङ्गलम् ॥ ८१ ॥

( ना० ) नन्वेषा कथा भगवन्तं प्राप्नोतु तावता कर्तुरध्येतुर्वा किं फलम् । न च भगवत्प्रसाद एव फलम् । किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने इति तद्वचनात् तस्य सकलपुरुषार्थरूपत्वात्पुरुषार्थसाधनत्वाच्चेति वाच्यम् । तस्य भगवत्पूजादिसाध्यत्वादित्यत: एतस्यापि वाचकयज्ञरूप भगवत्पूजारूपत्वात् ' इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः । वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥ ' इत्यादिना भगवत्प्रसादसाधनतावगमादेतस्य ग्रन्थस्य कर्तुरध्येतुरपि सकलपुरुषार्थावाप्तिरित्याशयेन ग्रन्थकरणस्य भगवत्पूजारूपत्वमपरोक्षीकृतभगवन्तं प्रति निवेदयति । **इतीति** । हेऽ**धिकपूर्ण** । **ज्ञानेच्छाशक्तिभिः गुणैः पूर्ण** । अत्यन्तपूर्णा ये ज्ञानेच्छाशक्त्यादिगुणास्तैः परिपूर्ण । अत एव **स्वधिकपूर्ण** सुतरामधिकाः स्वधिकाः ब्रह्मादयस्तेभ्यः **पूर्ण** अत्युत्तम । अत एव गुणपूर्णत्वादेव **नारायणनामा** त्वं **सुरायणनामा सु** शोभनः **रा** धनं **सुराः सुरायः** अणनं प्राप्तिर्यया सा सुरायणना उत्तमवित्तदेवता महालक्ष्मीः तया **अमा**=सह लक्ष्मीसाहित्येन लक्ष्म्या धनदेवतात्वेन निर्देशात् तत्प्रसादादेवाध्येतारो धनादिसंपन्ना भवन्तीति सूचयति स इति । उक्तप्रकारेण **सुखतीर्थपूजितः** आनन्दतीर्थेन वाग्यज्ञेनार्चितोऽसि । अस्तेरप्रयुज्यमानत्वेन गम्यमानत्वादप्रयोगः । **ज्ञानेच्छाभक्तिभिरि**ति-पाठे ज्ञानेच्छाभक्तिभिः पूजितोऽसीति योज्यम् । अतः प्रसन्नो भवस्वेति भावः । प्राञ्चस्तु—सुरायण, ना, मा इति पदानि । हे **सुरायण** सकलदेवताश्रय । इति **सुखतीर्थपूजितः** सन् **मा** इति मां । **अव** रक्ष । यद्यप्यत्र अवेति पदं नास्ति । तथापि न अ इति पदयोर्व्यत्यासः कार्यः । तेन अनेति भवति । ततस्तृतीयोऽतिशये इति तं परित्यज्य पवर्गतृतीयो वकारः नस्य स्थाने भवति । बवयोरभेदात् अवेति निष्पद्यते इति व्याचक्रुरिति केचित्[१] टीकाकृतां भावं वर्णयन्ति । तन्न । क्लिष्टत्वात् । तत्र ' आनन्दतीर्थ मामव मे प्रभो ' इति मामवेति पदद्वयं दृश्यते । तेन सुरायण । ना । मा इति पदच्छेदः प्रतीयते । तथा च सर्वदेवाधार **ना** परमपुरुषस्त्वं मा इति मां अवेत्यध्याहार इत्याभिप्रेत्यैव

---

ल. टि. १ रै शब्दस्य षष्ठ्यन्तम् । रै इत्यस्य आयादेशे रायणनेति भवति । २. तिमण्णभट्टाः ।

तथा व्याख्यानात् । अत एव ' रमाजशंकरोमादिसुराधारः परः पुमानि'ति टीकाक्षराणि । ना इत्यस्य न अ इति विच्छिद्य व्यत्यासाश्रयणे परः पुमानिति व्याख्यानं न स्यात् । तस्माद्वेत्यचाहारेणैव तथा व्याख्यातमिति अखिलमति मङ्गलम् ॥ ८२ ॥

## टीका

इत्थं संस्तूयते यः सततमपि महाभारताद्यैः सुशास्त्रैर्
वेदव्यासोपदिष्टैरपरिमितसुखज्ञानमूर्तिर्महात्मा ।
येनाऽऽद्यं श्रीनृसिंहं श्रुतिपतिमपि तं संनमाम्युच्चभक्त्या
स्तोतारं तं च देवं सुरवरमुखरं श्रीमदानन्दतीर्थम् ॥ ३६३ ॥
यैरेवं स्तुतिमापितोऽतिमहतीं श्रीविष्णुपादाम्बुजे
हंसा मे सुविवर्धितां च महतां स्नेहेन निष्कण्टकाम् ।
संसेव्ये रमयाऽखिलापरमया ब्रह्मेशपूर्वैः सुरैः
श्रीमद्वारिजनाभतीर्थमुनिभिस्तेभ्यो गुरुभ्यो नमः ॥ ३६४ ॥
दशमतिनाऽमितमतिना विरचिता भारतनिर्णयस्य टीका ।
सुरवरनरहरितुष्ट्यै नरहरिवरतीर्थनामिना रचिता ॥ ३६५ ॥
श्रीमन्नृहरितीर्थार्यमुखाम्भोजविनिःसृतम् ।
पीयतां सन्मधुकरैः कृष्णलीलामृतं शुभम् ॥ ३६६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यानुक्रमणिका कृष्णप्रकाशिका नरहरितीर्थविरचिता समाप्ता ॥ श्री ॥ श्रीश्रीप्राणेशविठलार्पणमस्तु । श्रीकृष्णार्पणमस्तु । श्रीरस्तु ॥

( टि० ) इत्थं यमकभारतं व्याख्याय नृहरितीर्थश्रीमच्चरणाः अन्ते स्वेष्टदेवतां तमेव व्यासरूपं वेदान्तकर्तारं तत्स्तोतारं भगवन्तमानन्दतीर्थं च प्रणमन्ति **इत्थमिति** । अहं **श्रीनृसिंहं तं श्रुतिपतिं वेदव्यासं उच्चभक्त्या स्तोतारं श्रीमदानन्दतीर्थं** च उच्चभक्त्या **संनमामी**त्यन्वयः । तं कं । यः **येन** आनन्दतीर्थेन वेदव्यासोपदिष्टैर्महाभारताद्यैः सुशास्त्रैरित्थं पूर्वोक्तप्रकारेण **सततमपि संस्तूयते** । कीदृशं श्रीनृसिंहं **आद्यं** । कीदृशो यः **अपरिमितसुखज्ञानमूर्तिर्महात्मा** । कीदृशं स्तोतारं **सुरवरमुखरं**

**देवम्** । अथ स्वगुरून् प्रणमति **यैरिति** । **श्रीमद्वारि**जनाभतीर्थमुनिभिः श्रीविष्णुपादाम्बुजेऽति महतीं स्तुतिमापितो ये च मे**हंसा** गुरवः अथवा श्रीपरमहंसास्तेभ्यः **श्रीमद्वारिजनाभतीर्थमुनिभ्यो नम** इत्यन्वयः । तेषां **महतां च स्नेहेन मे श्रीविष्णुपदाम्बुजे** । स्तुतिः ? प्रकृतत्वादनुक्तिः **सुविवर्धितां** कीदृशीं **निष्कण्टकां** निर्विघ्नां । कीदृशे श्रीविष्णुपदाम्बुजे **अखिलापरमया** अखिला मुक्तामुक्तब्रह्मादयोऽपरमा यस्याः सा तया **रमया ब्रह्मेशपूर्वैः सुरैश्च संसेव्ये** । स्वकृतकथायाः श्रीनृसिंहतुष्टिं प्रार्थयते **दशमतिनोति** अमितमहिमा ( मतिना ? ) ॥ श्री श्री ॥ ( एतट्टिप्पणीकर्तृ-नामनिर्देशो नोपलभ्यते )

---

(ति०) भासा यस्य विभाति विश्वमखिलं ज्योतिः परं ब्रह्म यो
निःश्रेष्ठः समपूर्णचित्सुखतनुर्योग्यामितास्यादिना ( मृतस्यन्दिमान्? )
यो मान्योऽखिलजन्तुभिः सुवितितो वेदैकगम्यश्च यो
श्रीमद्भारतनिर्णयीयविवरणं (विवृति)य(र्या ते) त्तेन संप्रीयताम् ॥१॥
यद्रूपं प्रथमं ययौ सहभुजं रामात् सुतत्सेवकं
यद्दुर्योधनमागधादिवधतस्तुष्टं द्वितीयं व्यधात् ।
श्रीमध्वः पवनस्य तस्य परमं तार्तीयरूपं हि योऽ
दः श्रीभारतनिर्णये विवरणं यत्तेन संप्रीयताम् ॥
आसीद्भास्करनामभट्टतनुजः तिम्मण्णभट्टाभिधः
कृष्णायाः करहाटकाभिधमहासत्पट्टणे तीरगे ।
तत्पुत्रो ह्यकरोदिदं विवरणं तम्मण्णभट्टाह्वयः
श्रीमद्भारतनिर्णये यमकव........कंजसुखं विधत्ते ॥ २ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्यमकमहाभारततात्पर्यनिर्णयस्य विवरणं श्रीमद्रघूत्तमतीर्थश्रीचरणशिष्यानुजाचार्य तम्मण्णाचार्य ( तम्मण्णभट्ट ) विरचितं समाप्तम् ॥

---

( भ० ) समाक्षरसुशोभनां शुभगभीरमञ्जुध्वनिं लसन्मृदुपदक्रमां श्रुतिसहायसंल्लोचनाम् । मरुद्वरहरिप्रियां नृहरितीर्थसंदर्शितामुपासदमहं श्रियं

---

टीप–१ यमकाक्षर । २ व्यञ्जनां । ३ कर्ण । ४ सतां लोचनाम् ।

यमकभारतीं भारतीम् ॥ १ ॥ काऽहं मन्दमतिः क चामरवरागम्या गुरूणां गिरस्तद्व्याख्यायतनं[2] तथापि जनताहासास्पदं मे नहि । यच्छ्रीमन्नृमृगेन्द्रतीर्थ-गुरुसत्कृत्याश्रितोऽहं महानौकाश्रिच्छशशावकोऽपि जलधेः पारं न किं गच्छति ॥ २ ॥

यमकभारतवर्णितसद्गुणं यमकभारनिवारणसद्घृणम् ।
अहमयां शरणं शरणं सतां मयि भवेत्सकृपः सकृपो हरिः ॥ ३ ॥

श्रीमत्किटिपदाचार्यहृद्गः श्रीमध्वहृद्गतः
तुष्येन्मय्यनया कृत्या भगवान्स्वपदास्पदे ॥ ४ ॥

मन्मनःप्रेरकेशेन जातया टीकयाऽनया ।
सुकृतं भावि यत्सर्वं तत्प्रभेद्गुरुराणमम ॥ ५ ॥ श्रीः ॥

इति श्रीमद्भास्करीवेंकटवराहाचार्यवर्यपूज्यपादाराधकेन भगवन्नाम्ना विरचिता श्रीमद्यमकभारतटीका संपूर्णा ॥ **श्रीकृष्णार्पणमस्तु** ॥

विश्वावसुसंवत्सराषाढासितदशम्यां संपूर्तिमिता ॥

---

( ना० ) इति सुरवरवर्ण्याशेषभावस्य मध्वोदितयमकसमुद्यद्भारतस्याऽपि टीका । निजमतिमनुसृत्याल्पज्ञनारायणेन व्यरचि गुरुरनेन प्रीयतां भारतीशः ॥ १ ॥ श्रीः ॥

---

१ भारतसंबन्धिनीम् । २ यत्नः ।

---

(ल.टि.) उत्तरादिमठेशानां सुधामण्डनकारिणाम् ।
सत्यप्रमोदतीर्थानामनुजोऽयं तदाज्ञया ॥ १ ॥
न्यक्कृत्य संपदं प्राप्तां रङ्गाचार्याः सुधैर्यतः ।
सदा सर्वज्ञसच्छास्त्रव्याख्यासौख्यामृताब्धिगाः ॥ २ ॥
तत्सुतोऽयं हयग्रीवो गुरूणां सत्कृपाबलात् ।
पञ्चव्याख्याश्च संपाद्य विधाय लघुटिप्पणीम् ॥ ३ ॥
मुद्राप्येदं ग्रन्थरत्नं श्रीनिवासपदेऽर्पयत् ।
तेन तुष्टो रमाजानिर्भूयात् सद्गुरुहृद्गतः ॥ ४ ॥

श्रीशके १८८१ विकारिसंवत्सरे पौषकृष्णसप्तम्यां द्वादशाब्दमहोत्सवे पद्मसरोवरक्षेत्रे समर्पितमिदम् ।

---

श्रीमध्वनाथो विजयते

## यमकभारते टीकादिपञ्चव्याख्यालंकृते

# शुद्धिपत्रिका

| पुटम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १३ | र्थः ।[१] | र्थः । |
| २ | १५ | ‘नित्या | नित्या |
| ५ | १२ | (त्तं)त्पप | (त्तं) त्प (प) |
| ५ | १६ | द्या श्रमैः | द्याद्याश्रमैः |
| ७ | १२ | पूर्णै | पूर्णैं |
| ७ | १३ | न लभ्यते | लभ्यते |
| ७ | २४ | सह दंवेन | सह दैवेन |
| ९ | २९ | वैचारिणां | वा चैरिणां |
| १० | २ | परमाना | परमानो |
| १० | २ | येने | येन |
| १० | १० | नंरपेक्ष्यणेति | नैरपेक्ष्येणेति |
| १० | १० | न नृकेसरि | तं नृकेसरि |
| १० | १० | नृहरै | नृहरे |
| १० | १७ | नृसिहं | नृसिंह |
| १२ | ३ | एवो‘ता | एव ‘उता |
| १२ | १२ | पश्चासै | पश्चासौ |
| १२ | १२ | क्रतुांमिति’ | क्रतुम्’ इति |
| १२ | २७ | त्यस्मात् | यस्मात् |
| १६ | ५ | केवलंन | केवलेन |
| १६ | २२ | त्वांगाकारत्या | त्वाङ्गाकारस्या |
| १६ | २३ | ङ्क्षीभावा | ङ्क्षाभावात् |

टीप—अत्र सर्वत्र पंक्तिसंख्या शीर्षकमारभ्य गृहीता

| पुटम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६ | ११ | कराऽलोलं | कराऽऽलोलं |
| १६ | १३ | करालः अलम् | कराऽऽलोलम् |
| १६ | २५ | त्युक्तेः नच | त्युक्तेः । नच |
| १७ | २० | मुक्त माला | मुक्तामाला |
| १९ | ४ | यस्य सः करालोल | **यस्य** करालोलं |
| १९ | २६ | अपाठाऽपा | अपाठाऽपपा |
| २३ | २ | विधया | विधेया |
| २६ | २७ | वासुदेवः | वासुदेवः । |
| २७ | २१ | बिभत्सु | बिभ्रत्सु |
| २७ | २७ | सुराणां | असुराणां |
| २८ | १० | सदा एव देवक्यन्ते | सदैवदे । अव । कि । अन्ते । |
| २९ | १२ | दादिर्बभूव | दाविर्बभूव |
| २९ | १० | अनु वचन | अनु कस्मात् |
| २९ | १८ | तथा रक्ष | तथा **अव** रक्ष |
| ३० | १२ | देवकः | देवकः देवक्याः पिता |
| ३० | १३ | कंसः देवक्याः पिता | कंसः |
| ३० | १४ | पितृत्वरूपः | पितृव्यत्वरूपः |
| ३१ | ३ | इत्युक्तेः कुत्सायां | इत्युक्तेः। कुत्सायां |
| ३१ | २५ | सक्सु | सवसु |
| ३१ | २५ | । वेन | ( अवे+न ) वेन |
| ३३ | २४ | दश्यते | दृश्यते [ ३–२–१७८ ] |
| ३३ | २६ | ॥ ८ ॥ | ॥ ६ ॥ |
| ३५ | २ | गोकुलं | गोकुल- |
| ३५ | २० | या | ( याद्व ) |
| ३५ | २० | घो देवः | घोदेवः |
| ३५ | २० | गवा | गवां |
| ३५ | २४ | पदांगुष्ठेन | पादांगुष्ठेन |
| ३७ | २ | मुखे ना | मुखेन ' अ |

| पुटम् | पंक्तिः | अशुद्ध | शुद्धम् |
|---|---|---|---|
| ३७ | ७ | अपाङ | अपाङ् |
| ३७ | ७ | गृभीत | गृभीत' |
| ३७ | १७ | पदांगुष्ठ | पादांगुष्ठ |
| ३८ | ८ | साल्तं | सालनं |
| ३९ | १६ | कर्माणि । भूम्युद्धरणानि | कर्माणि च भूम्युद्धरणादीनि |
| ३९ | ३० | 'नित्यानंद | नित्यानंद |
| ४० | २९ | तस्य | तस्य । |
| ४० | २९ | निजावरनामा | निजावरना मा |
| ४१ | ७ | रूपिर्णाति | रूपिर्णा'ति |
| ४१ | २२ | ( भा० ) | ( भ० ) |
| ४२ | १ | २४ | ४२ |
| ४२ | २८ | अबालतम् | अबालतमम् |
| ४३ | २३ | चक | चक्र |
| ४३ | २३ | इर्ं | ईर्ं |
| ४६ | ८ | कं ' जा | कं जा |
| ४८ | १० | बध्नाति सार्व | बध्नाति । सार्व |
| ४८ | १० | ल्ट् | लङ् । |
| ४९ | २९ | विद्यामान | विद्यमान |
| ५० | ९ | गतौ कस्मात् यदि | गतौ । यदि ? |
| ५० | १७ | हि सः ' क्षिप्रं । | हि सः । क्षिप्रं |
| ५० | १८ | प्रणश्यति । | प्रणश्यति ' । |
| ५० | २२ | गतिम् ॥ | गतिम् ' ॥ |
| ५१ | २५ | चक्र: | चक्रुः |
| ५२ | १० | की लाल | कीलाल |
| ५३ | ८ | स विप्र | 'स विप्र |
| ५३ | ९ | सरान् | सुरान् |
| ५४ | ६ | सः परः | स परः |
| ५५ | ९ | प्राति ॥ १९ ॥ | प्राति ) ॥ १९ ॥ |

| पुटम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५६ | २८ | ह्रिता | ह्रि ता |
| ५७ | ८ | स्वरक्षरा: । | स्वरक्षरा गावः । |
| ५७ | ९ | रक्षाः । मेघाः | रक्षाः मेघाः । |
| ५७ | १६ | गोपागमनेन | कोपेनेन्द्रेण |
| ५७ | १७ | मगम्यं | मवगम्य |
| ५८ | ५ | इपिश्रियो | ईपिश्रियो |
| ५८ | ५ | ता इपि | ता ईपि |
| ५८ | ६ | मिपिश | मीपिश |
| ५८ | १६ | इपिय | ईपिय |
| ५८ | १७ | मिपिश | मीपिश |
| ५८ | १८ | तादिपि | तदीपि |
| ५८ | १९ | इपिना | ईपिना |
| ५८ | १९ | इपियः | ईपियः |
| ५८ | २३ | येवैशः | यैवेशः |
| ५९ | ३ | मुपसाया | मुपासया |
| ५९ | २० | मुखं | सुखं |
| ६० | १७ | द्वर | द्रव |
| ६० | १९ | वक्तव्येः | वक्तव्ये |
| ६१ | ६ | रुद्रोः | रुद्रः |
| ६१ | १४ | सुरवरेण | सुस्वरेण |
| ६२ | ९ | वंरयुक्त | वरयुक्तं |
| ६८ | ३ | नृपात्माना | नृपात्मना |
| ७१ | १५ | प्रार्थैः | पार्थैः |
| ७२ | १४ | अनुयाय | अनुनयाय |
| ७२ | १४ | तत्प्रीति । | तत्प्रीतये |
| ७२ | १४ | ( त्पर्ता ) काराय | ( त्प्रतीकाराय ) |
| ७३ | २२ | एवरा | एव |
| ७६ | १५ | सकाशाम् | सकाशात् |

| पुटम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७८ | ११ | ( गते | स्मृतिं गते |
| ७८ | २५ | दानान् | दानात् |
| ७९ | ९ | नैका | नौका |
| ७९ | २१ | गादारं गुंक्त | गादारं गुक्त |
| ८२ | २३ | माते | मीयते |
| ८३ | १५ | ज्येष्यतीति | जेष्यतीति |
| ८४ | २८ | २०,१२,२२,१२० | १२-२०-१२-२० |
| ८६ | ७ | हाऽपि | हाऽऽपि |
| ८६ | १० | आपि | आपि |
| ८७ | २७ | सुभावत्वात् | सुभात्वात् |
| ८८ | ३ | सुतेजास्वि | सुतेजस्वि |
| ८८ | १५ | हि नहुषः । | हि । नहुषः । |
| ८९ | ९ | विधे | विधे |
| ९० | ६ | । सर्वे | ( रमंस्ववता ) । सर्वं |
| ९१ | १२ | रमं स्ववता | रमंस्ववता |
| ९१ | १० | दृष्ट | दुष्ट |
| ९१ | २५ | श्मर्श्रूहि | श्मश्रुर्हि |
| ९२ | २३ | तस्या | तस्य |
| ९२ | २३ | स स्वभावेन | स्व स्वभावेन |
| ९४ | ११ | त्रिगर्त | त्रिगर्ते |
| ९५ | २९ | ब्रुद्धिदोषनिमित्तं | न परामर्शदोषः |
| ९५ | २५ | मोहितत्व | मोहितत्वात् । |
| ९६ | ८ | ईराधर्तनु | ईराधर्तनु |
| ९७ | ८ | तद्रतेः(अ) | तस्य इतः । |
| ९८ | १५ | आत्मष्ठो | आत्मविष्ठो |
| १०० | १८ | हारिरि | हननमि ? |
| १०० | १८ | यत इति | अत इति |
| १०१ | २८ | सर्वेषु | सवेषु |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०५ | ४ | सदात् । | सदात् (सत् आत्) |
| १०५ | १४ | यन | येन |
| १०५ | २३ | भूतः' | भूतः |
| १०५ | २४ | इतीत्यादौ | इती ' त्यादौ |
| १०६ | ११ | अभं भिवी | आभिभवी |
| १०६ | २० | अंभ्रण्य | अंभृण्य |
| १०७ | ९ | अंभ्रणी | अंभृणी |
| १०८ | २२ | वश्यस्तस्य | तस्य |
| ११० | २ | सम्याङ्नि | सम्यङ्नि |
| ११० | २७ | विषाटित | विपाटित |
| ११० | ३० | स्तत्पाद | स्तपाद |
| ११२ | १ | २१२ | ११२ |
| ११२ | ३ | ते ऽ दं | तेदं |
| ११२ | ६ | दाण्य | द्रौण्य |
| ११२ | २७ | मरणं | ऽ मरणम् |
| ११३ | २७ | ब्रह्मण | ब्राह्मण |
| ११५ | १७ | नीवेति | न्येवेति |
| ११६ | ४ | त्मना । | त्मना । च । |
| ११६ | २ | सुजातैः | सुजातैः । |
| ११६ | २२ | दहे | देहे |
| ११८ | ३ | नु विकारत्वात् | तु विकारत्वात् । |
| ११८ | ६ | तत्य | तस्य |
| ११८ | ८ | नियामिक | नियामक |
| १२२ | ८ | समाना | समना |
| १२५ | १८ | जनमनां | जनमनोन |
| १२५ | ८ | ऽ मिधः | ऽ भिधः |
| १२६ | २७ | मित्यादिश्य | मित्यादिश्य |
| १२७ | ४ | समुद्रेः | समुद्रः |

| पृष्ठम् | पंक्ति: | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२८ | २ | मत्सस्य | मत्स्यस्य |
| १२८ | २३ | त्युक्तेश्च | इत्युक्तेश्च |
| १२९ | ३० | सुर्मिति | सुर्मिती |
| १२९ | ३० | वर्चो | वर्चों |
| १३० | २ | वाहंसे | वांहसे |
| १३० | ७ | स्तुवांनो | स्तवांनो |
| १३० | ७ | तेऽस्म | ते अस्म |
| १३० | २७ | त्तव | स्तव |
| १३१ | २४ | राममहा | राममहा। |
| १३२ | ५ | शास्त्राश | शास्त्रश |
| १३३ | २१ | व्य यायासे | व्यत्यायासे |
| १३४ | ९ | अवाहंति | अवाहन्ति |
| १३५ | ९ | योग्ये | कापि योग्ये |
| १३५ | १२ | तत्रा | तत्र |
| १३७ | ६ | मह- | मह: |
| १३९ | १५ | राप्यते | राप्यते |
| १३९ | ३० | ततोऽत्तीति | तनोर्तीति ? |
| १४० | १४ | अदित्य | आदित्य |
| १४१ | १९ | त वै | तं वै |
| १४२ | ३ | भक्तना | भक्ताना |
| १४३ | ९ | मारी | मारि: |
| १४४ | १८ | परामृतत्वमेवा | परामृत त्वमेवा |
| १४६ | ७ | तद्गम्यो | तद्‌गम्यो |
| १४६ | १० | वासदेव | वासुदेव |
| १४७ | ३ | सांद्राब्धे | सान्द्राब्धे |
| १४७ | ७ | । धातुप | धातृप ? |
| १४९ | १३ | तर्ता | ततो |
| १५० | २४ | दीपोक्ते: | द्वीपोक्ते: |

| पुटम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५० | २८ | ज्ञानिनः प्रति | ज्ञानिनः प्रति । |
| १५० | २९ | पश्यति | पश्यंति । |
| १५१ | ६ | वचनात् । | वचनात्, |
| १५१ | ७ | प्रवृत्त | प्रवर्तक |
| १५३ | ३ | घत्तम | द्युत्तम |
| १५३ | १४ | जानानि | जानान |
| १५३ | १६ | एवेशषपुः | एवेशेषपुः |
| १५३ | १५ | ई श्रियं | ई श्रियं |
| १५३ | १७ | शय्यानो | शयानो |
| १५४ | ९ | चेष्टयति | चेष्टयति |
| १५६ | २३ | अस्मत्यर्थं | अरं अत्यर्थं |
| १५६ | २५ | ( यतः ) | ( यतः ) |
| १५७ | २९ | निषेधा | निषेध |
| १५८ | १८ | ( को | ( को ) |
| १६० | ९ | ययायोग्यं | ययायोग्यं |
| १६० | २० | नेत्यर्थः । ४ । | णेत्यर्थः । |
| १६० | २१ | भूनिप्र | भूमिप्र |
| १६० | २३ | पृथिवी उत | पृथिवीमुत |
| १६० | २८ | प्रयुक्तः ॥ ५ ॥ | प्रयुक्तः । ४ । |
| १६१ | ३ | लोकेषु | लोकेषु । ५ । |
| १६१ | ४ | भोऽभीष्टे | माऽभीष्टे |
| १६१ | ६ | भोऽभीष्टदाने | भार्भाष्टदाने |
| १६२ | १९ | विधते | विधत्ते |
| १६२ | २० | कां वा | कं वा |
| १६३ | ५ | राज | राजा |
| १६३ | १५ | सर्वैवं | सर्वैवं |
| १६३ | १९ | विदारेण | विदारणे |
| १६४ | १४ | भानानि | मानानि |

| पुटम् | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १६५ | २५ | स्या आभा | स्य आभा |
| १६७ | १७ | अत्यो | अन्यो |
| १६७ | २० | कस्य | खस्य |
| १६७ | २० | स्वग्रहणम् | खग्रहणम् |
| १६७ | २३ | सुस्वगेश | सुखगेश |
| १६७ | २५ | सुस्वगेन्द्र | सुखगेन्द्र |
| १६८ | २ | नास्ति | नास्ति |
| १६८ | ९ | विष्नुः | विष्णुः |
| १६८ | २४ | स्वगा | खगा |
| १६९ | २४ | तीव | तीव |
| १७३ | ७ | वाचक | वाचिक |
| १७६ | ६ | सद्धृणम् | सद्घृणम् |

टीकायामनुपलब्धशुद्धपाठा भागाः

| पुटम् | पंक्तिः | |
|---|---|---|
| १५५ | ३ | अप्राप्तममकारो यः ........ |
| १६७ | १३ | सुखं विष्णुः ........सुखं तत्परन |
| ११९ | ७ | यदूनां च **पार्थानां** |
| १२१ | १० | वैकुण्ठे किमु तद्धिते ( वर्धते ) |
| ८८ | २३ | नालमेव लयं विना |
| ३९ | ५ | ध्यानमनित्यं |
| ६० | २५ | ( टि. ) स्व रसं गलशब्दस्य |
| ५१ | ९ | वासो वासेन येन सः |
| ११२ | ६ | वासस्य मरणं यहि |
| १६९ | १७ | कथास्वानन्दसद्भिदा |
| १२३ | ४ | तेषामाणिस्तु चाश्च ( च ) लिः |
| ५४ | ४ | शयनस्य च । श्रमेणानमतिकापि |

# यमकभारतटिप्पणीस्थानां श्रुतीनां सूची

श्रीमध्वनाथो विजयते

## यमकभारते पञ्चव्याख्यालंकृते
## प्रमाणत्वेन गृहीतग्रंथाः

| | | पुटं पं. |
|---|---|---|
| १ | अनुव्याख्यानं | |
| २ | ईशावास्योपनिषत् | १६१–२२ |
| ३ | ऋग्वेदः | २६–१३ |
| ४ | ऋग्भाष्यं | १०–२२ |
| ५ | ऋग्भाष्यटीकाप्रकाशः | १०–२३ |
| ६ | ऐतरेयोपनिषत् | ३७– ७ |
| ७ | " भाष्यं | |
| ८ | ऐतरेयब्राह्मणम् | ११६–२४ |
| ९ | काठकोपनिषत् | १५७–१४ |
| १० | गीताभाष्यं | २–१८, १०२–२६ |
| ११ | छांदोग्योपनिषत् | १०५–२३ |
| १२ | तैत्तरीयोपनिषत् | ४–१३ |
| १३ | न्यायविवरणं | ७१– ९ |
| १४ | नृसिंहतापनीयोपनिषत् | १०–१७ |
| १५ | पाणिनीयसूत्राणि | ३६–२४ |
| १६ | भागवतं | ३७– २ |
| १७ | भगवद्गीता | ३८–१८ |
| १८ | भागवततात्पर्यम् | १६२–२० |
| १९ | ब्रह्मसूत्रभाष्यं | |
| २० | महाभारतम् | |
| २१ | मांडूकभाष्यम् | ९१–१३ |
| २२ | विष्णुतत्त्वनिर्णयः | ८–२० |

## इदमत्रावधेयम्

( भ० ) मन्मथाक्रान्तसुन्दरीपीषु । इः कामः स एव पः पाता=स्वामी, सोऽस्यास्तीति इपि स्त्रीगुह्यं तस्य ईः = श्रीः शोभा यासां ता इपियः........। ५९–३

ಶ್ರೀ ಮಾಧ್ವಗ್ರಂಥ ಪ್ರಕಾಶನ
8/16, ಶ್ರೀ ಲಕ್ಷ್ಮೀನರಸಿಂಹ ದೇವಸ್ಥಾನ
ಬಳ್ಳಾರಿ–583 101

———

A. S. Bheemasena Char
L. N. Temple, Gold Smith Street.
BELLARY

# यमकभारतटिप्पणीस्थप्रमेयसंग्रहः



---

## यमकभारतस्थश्लोकानाम्

### अकारादिक्रमेणानुक्रमणिका

---

# यमकभारतस्थानां
## नवीनार्थकशब्दानां सूची

---

# इदमत्रावधेयम् ।

पृष्ठे ११६, २४–२५ ( ल. टि. ) तदेनमिति । तद् = गोसहस्रं समाकुर्वाणं=सम्यगात्मसात्कुर्वाणं, एनं=नाभानेदिष्ठं ( नाभागं ) कश्चित्-पुरुषो यज्ञभूमेः उत्तरतः उपोत्थाय समीप एवोत्थितो भूत्वा इदमब्रवीत् । कीदृशः पुरुषः, कृष्णशवासी=अतिशयेन कृष्णं मलिनं कृष्णशं तत् वस्ते आच्छादयतीति कृष्णशवासी रुद्रः " तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत् " इति तैत्तिरीयसंहितायां ( ३-१-९-५ ) उक्तेः ।

---

[illegible]

॥ श्री ॥

# इदमत्रावधेयम्

नारायणाचार्यटिप्पणी:– प्रथमपत्रम् ॥ श्रीमन्महाभारतनिर्णयांबुधेरुद्धृत्य दिव्यं लघुभारतामृतम् ॥ सौवानपीप्यत्ततं मनस्यसावाचार्यधन्वंतरिराविरस्तु नः ॥ १ ॥ श्रीरामप्रियमरुदंशसेव्यत्रभ्नात्सेतुं प्राक् नलहरिरित्यलं ( ह्?) सनामा ॥ तेनास्मी'ति यमकभारताब्धिसेतुं योऽधात्तं नरहरिमाश्रये मुनींद्रं ॥ २ ॥ तत्कृपावलमालम्ब्य ( लवमाश्रित्य ) तत्प्रदर्शितया दिशा ॥ नारायणेन क्रियते टीका यामकभारती ॥ ३ ॥ यद्यप्यस्त्येव टीका नरहरिमुनिभिर्निर्मिता पद्यरूपा गंभीरार्थत्वतः सा न भवति सुगमा मन्दबोधालसानां ॥ कुर्वेऽतस्तत्प्रपंचं निजमतिमनतिक्रम्य कुत्राप्यनुक्तं स्पष्टत्वाद्वच्मि त्वार्यं प्रभवतु सफलस्तेन सर्वःश्रमो मे ॥ ४ ॥

" भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ॥ व्यासस्यैवाज्ञया तत्र भारतं त्वत्यरिच्यत ॥ १ ॥ महत्वाद्भारवत्वाच्च महाभारतमुच्यते ॥ निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते " ॥ २ ॥ इत्यादिवाक्यैः प्रतिपादितसर्वविद्योत्तमत्वस्य महाभारतस्य तात्पर्यनिर्णयं सविस्तरग्रन्थेन विधाय संक्षेपेण सर्वभारतार्थप्रतिपादकं प्रात्याहिकपाठलिप्सुशिष्यानुग्रहार्थे तत्फलफलकं यमकानुप्रासोपेतचित्रकाव्यरूपं ग्रंथं चिकीर्षुः भगवानाचार्यो मंगलमाचरति ॥ ध्यायेदिति ॥ सुधीः तं परमात्मानं ध्यायेदित्यन्वयः ॥

( लघु टि० ) सौवान = स्वकीयान् । अपीप्यत्=पाययामास + तेन=नलाख्यकपिना, सनामा अस्मि ( रलयोरभेदात ) इति द्योतयितुम् । " तेनास्मी " इति वर्णत्रये विरतिः । `" म्नौ ज्रौ गः त्रिदशयतिः प्रहर्षिणीयम् " इति तल्लक्षणात् । नात्र यतिभङ्गः शङ्कनीयः । " पूर्वान्तवत् स्वरः संधौ क्वचिदेव परादिवत् । द्रष्टव्यो यतिचिन्तायां क्वचिदेव परादिवत् " इति वृत्तरत्नाकरोदाहृतवचनात् । सौवान् इति । स्वस्येदमित्यर्थेऽणि कृते स्वशब्दस्य द्वारादिषु पाठेन 'द्वारादीनां चे'ति सूत्रेण वकारात्पूर्वम् ऐजागमेन औकारे सति सौवेति रूपम् ।

१४१ पुटे. ३०, पंक्तौ, एतत् पठनीयम् ( श्रवणादिसाध्यम् ) न घटापरोक्षादिवत् इन्द्रियसंनिकर्षमात्रेण । " नेन्द्रियाणि नानुमानं वेदाह्येवैनं वेदयन्ति " इति श्रुतेः । किंतु श्रवणादिप्रणाड्यैवेति वक्तव्यम् । सर्वशब्दावाच्यस्य लक्षणयापि शब्दागोचरत्वात् तदर्थं शब्दवाच्यता अवश्यमङ्गीकर्तव्या, 'यतो वाच' इति श्रुतेः साकल्येनाप्रतिपाद्यत्वपरत्वेनोपपत्तेः । तस्मात् ज्ञेयत्वान्यथानुपपत्त्यैव वाच्यत्वस्योपपन्नत्वा दुक्तं युक्तमेवेति ।

२४ पुटे. १० पंक्तौ. ( लक्ष्मीधराभ्यामपि ) चामराभ्यां वीज्यमानः कथं सर्वोत्तमो न भवेदिति भावः । कुतः लक्ष्म्यापि ( तद्ज्ञानविषयः )

## यमकम्

यमकलक्षणं मन्दारमरन्दचंपूग्रन्थे (निर्णयसागरमुद्रिते ३९ पुटे)। चित्रबिन्दु-प्रकरणे उक्तम् । तथा हि ' स्वरव्यञ्जनसंबद्धवर्णाद्यावर्तने सति । यमकं तत्तु पादाद्यादिस्थित्या बहुधा मतम् ' इति । तत्र तद्याख्याने च–यमकमाह–स्वर-व्यञ्जनेत्यादिना । तथा च असकृदेकानुपूर्वीकवर्णसमूहघटितत्वमिति भावः । इदं स्वरूपलक्षणं पद्ये समन्वेति पादाद्यादिस्थित्येति । आदिपदेन मध्यान्तादेर्ग्रहणम् । तथा च यमकं पादादिग-पादमध्यग-पादान्तग-त्रिपादग-द्विपादगान्तादिगान्तमध्य-गादिभेदेन बहुविधमित्यर्थः " इति । अत्र " सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते " इति साहित्यदर्पणोक्तः अर्थभेदोऽप्यावश्यकः ।

यमकभारतग्रन्थे उपयुक्तानां ( समागतानां ) यमकानां प्रभेदा एवं कर्तुं शक्यन्ते तथा हि—

अत्र ग्रन्थे आहत्य स्थितेषु ८१ श्लोकेषु ६९ श्लोकाः ( २, ३, ६–५१, ५३, ५५–७०, ७९–८१ ) सजातीयाः ।

तत्रापि ॥ २ य श्लोके एकैकस्मिन्नर्धे पूर्वपादे अन्त्यपदात्पूर्वम् आगतं " करालोलं " इति वर्णचतुष्टयं द्वितीयपादे अन्ते आवर्तितम् । ३ श्लो. तृ. पादे, ६ श्लो. प्र. पादे, ७ श्लो. प्र. तृ. पादयोः, ३३ श्लो. प्र. पादे. एवं जातायीनि पादोपान्त्ययमकानि सन्ति ।

अन्येषु ६४ श्लोकेषु तु प्रथमपादे अन्त्यमेव वर्णचतुष्टयं द्वितीयपादे अन्ते आवर्तितम् । यथा " नमनोगं " इत्यादि । अत्रत्ययमकं " पादान्त्ययमकम् " अन्त्यप्रासः " इति च गीयते ।

१, ५, श्लोकद्वये पादचतुष्टयान्तेऽपि ' परमानन्दम् ' ' देवक्यन्ते ' इति एकप्रकारकं यमकं सर्वपादान्त्ययमकम् इति व्यवह्रियते । ४ तमे श्लोके पूर्वो-त्तरार्धयोः " परमेषु " " मानधि " इत्यत्र पादादियमकं रचितम् ।

५२ नमे पद्ये "यद्भक्त्यामितया इत्यत्र "क्त्या" "तया" इत्यावृत्तिः । कृष्णा-कार्ये" नापात् इति आदिपदोपदयोरावृत्तिमत्त्वाद् इदमन्यजातीयमाद्यन्तयमकम् ।

५४ तमे ' मनसा ' इति पद्ये, १–३ यपादयोः एकैकपदस्य चतुर्धाऽऽवृत्तिर्दृश्यते ।

७१–७२ तम श्लोकयोः ' रामरामे ' ति श्लोकस्यैव व्युत्क्रमेण पठने ' जेतसवे 'ति श्लोकः संपद्यते तत्र "राम राम" "वाद सादद " इत्यादौ अनुप्रासः।

७३ तमे पद्ये अनुप्रासः । यथा "पतयो नित्यम्" नो मतम् " जानते " इत्यत्र " सुरमारये " इत्यत्र च ।

७४–७६, ७७ श्लोकेषु तत्रैव यमकप्रभेदो दत्तः।

७७ तमे पद्ये प्रथम तृतीय पादीयस्य "अनन्तपार" "महागुणाढ्य" इति आदिवर्णपंचकस्य द्वितीयचतुर्थपादान्ते आवृत्तिः।

"यमकश्लेषपद्येषु रलयोर्डलयोर्न भित। नानुस्वार विसर्गौ च चित्र भङ्गाय संमतौ" इति नलोदये ( ३.५३ ) सुबोधिनीव्याख्यायामुक्तं अनुसंधेयम्।

## छन्दः

छन्दः द्विविधम् वर्णैर्गणनीयं मात्राभिर्गणनीयं चेति। तत्र आर्यादिकं मात्रावृत्तम्।

अत्र यमकभारतग्रन्थे ७१ तम श्लोकतः ७५ पर्यन्त श्लोकेषु अनुष्टुप् छन्दः। तया५१,५३,७६–७८ श्लोकान् विहाय सर्वश्लोकेषु मात्रावृत्तानि आर्याप्रभेदाः—

"यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पंचदश साऽऽर्या' १२, १८, १२, १५, (श्रुतबोधे ४ श्लोके). इति-तल्लक्षणात्।

"परमेषु यदा" इति ४ श्लोके गीतिः तल्लक्षणे तु–

आर्यापूर्वार्धसमं द्वितीयमपि यत्र भवति हंसगते। छन्दोविदस्तदानीं गीतिंताममृतवाणि भाषन्ते" पादेषु क्रमात् मात्राः १२, १८, १२, १८ इति श्रुतबोधे ५ श्लोके।

आर्यापूर्वार्धसमं यदि गुरुणैकेनाधिकेन युक्तं। इतरत्तद्वन्निखिलं दलं यदीयमुदितेयमार्यागीतिः" १२, २०, १२, २०, इति वृत्तरत्नाकरे १० पुटे ३३ श्लोके।

द्वितीय श्लोके पूर्वार्धे गीतिः उत्तरार्धे आर्यागीतिः एवमनयोः संकरः अन्यत्र प्रायः आर्यागीतिः इत्यादि यथासंभवमूहनीयम्। क्वचित् ( यथा प्रथमश्लोकान्त्यपादे ) एकद्वयादिमात्राधिक्यं भवति तत्रेदं समाधानम् "नवा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' इति श्रुत्या गुरु लघुमात्रैकद्वितयेन वा। न्यूनेन वाऽधिके नापि तेषां छन्दो न भज्यते इति। "झटिति प्रविश" इत्यत्र यदातीव्रप्रयत्नेन संयोगादेरगौरवम्। न छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः' इति। "समीक्ष्य त्रस्ताः" इत्यत्र तीव्रप्रयत्नोच्चारणेनात्र लघुत्वम् इति कण्ठाभरणः "लघुतापि क्वचिद्गुरोः" इत्यादयः सामान्यनियमापवादाः बहवः छन्दोग्रन्थेषु वर्णिताः तदनुसारेणैव उद्देश्यपूर्वकं एषा रचना वर्तते। यतो हि एतादृशप्रतिभापूर्णानां ग्रन्थकाराणां एकद्वयादिमात्रान्यूनीकरणम् अशक्यं नासीत्। अत एवोक्तं पाण्डिताचार्यैः "एषु दभ्रमतीन् दभ्रान् हसत्युच्चैः नतां सभा। चिन्तामणीश्चिन्तयन्ती मितानप्यमितार्थदान्" इति सुमध्वविजये ( १५.८५ )। "योनिर्ममे" इति ७६ तमे "यां स्पष्टुम्" इति ५३ तमे च पद्ये इन्द्रवज्रा वृत्तम् "स्यादिन्द्रवज्रा ततजास्ततो गौ" इति तल्लक्षणात्। "मनसा" ५४ तमे तोटकं "सैश्चतुर्भिस्तोटकं स्यात्" इत्युक्तेः।

" अनन्तपारे ति. ७७ तमे, उपेन्द्रवज्रा । " उपेन्द्रवज्रा जतजा गौ त्राण ऋतुभिर्यतिः " इत्युक्तेः ।

---

# श्रीमध्वनाथो विजयते ।

कुशलम् ऐनापूर ५–३–६२

श्रीमत्परमपूज्य गुरुवर्य आचार्याणां चरणसेवायां अन्तेवासिना श्रीनिवासेन कृता अनन्त साष्टाङ्गप्रणामपूर्विका विज्ञापना—

श्रीहरिगुरूणामनुग्रहेण भवतामाशीर्वादेन च भवदुक्तं यमकभारते शुद्धिपत्र, सूचीपत्रादिकार्यं यथामति समाप्य प्रेषितम् । ग्रंथः संपूर्णः अवलोकितः । भवद्भिः एतत्पुस्तकस्य तथा ऋग्भाष्यटीकाप्रकाशस्य च संशोधनविषये अज्ञात-संदिग्ध-स्थले लघुटिप्पणीरचनायां च गृहीतः श्रमः अत्यन्तं स्तुत्यः । कूलंकषविमर्शकैः भवादृशपण्डितैः समुचितस्थले सर्वटिप्पणीनां संयोजनात् टीकाटिप्पणीसहितस्यास्य ग्रन्थस्य रहस्यज्ञानं तत्पुण्यभाग्यं चास्माभिरलाभि । एतद्विषये सर्वे वयं भवतामधमर्णाः । अनेन भगवतः श्रीकृष्णस्य भगवत्पादानां च महिमा युगपदेव ज्ञायते । तेन च हरि गुरुषु भक्त्युद्रेकः आनन्दातिशयश्च जायते । " सोऽवनिमध्ये रंगन् " इत्यादौ अपूर्वार्थक-टीकायाः दर्शनेन अनुव्याख्यानादेरिव अस्य ग्रन्थस्यापि अतिमहत्त्वं स्फुटी भवति । मत्सकाशात् एतत्सेवां गृहीत्वा अनुग्रहकरणात् संपूर्णतया एतद्ग्रन्थदर्शन-जन्यसौख्यमन्वभावि मया । एवमेव पुनः पुनरनुग्रहो विधेयः इति प्रार्थ्यते ।

भवतां कृपाभिलाषी अन्तेवासी
**श्रीनिवासराव मुतालीक**

बेंगळूर कुशलम् श्रीः ५-४-६१

श्री. म. सं. हयग्रीवाचार्येषु कृताः प्रणामाः । उ. कु. उ. यमकभारतटिप्पणी-संशोधनं भवद्राचिता लघुटिप्पणी च दृष्टा । लघुटिप्पण्यपि गभीरा समुचिता च वर्तते । सर्वमन्यत् कुशलम् इति ।

**पुराणभास्कर शेषगिरिराव**

---